से विहित अविहित कर्म के विवेकी होकर विहित कर्म में प्रवृत्त और अविहित से निवृत्त होते हैं इस से कल्याण भागी होते हैं वेदवाणी के द्वारा यही जीवों का रक्षण है इस हेतु "त्रायते" कहा गया है ॥ १ ॥

## या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्याᳬं हीदᳬं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥

या । वै । सा । गायत्री । इयम् । वाव । सा । या । इयम् । पृथिवी । अस्याम् । हि । इदम् । सर्वम् । भूतम् । प्रतिष्ठितम् । एताम् एव । न अतिशीयते ॥२॥

भाष्यम्—येति । पुनरपि गायत्रीं विशिनष्टि । या वै सा । पूर्वोक्तलक्षणा सर्व भूतरूपा गायत्री वर्तते । सा इयं वाव । इयमेव । वावशब्द एवार्थः । येयं पृथिवी निगद्यते । साऽस्ति । अयंभावः । सेयं गायत्री पृथिवी । पृथिवीवद्विज्ञेया । हि यतः । अस्यां पृथिव्याम् । इदं सर्वं भूतम् । पदार्थजातम् प्रतिष्ठितम् । एतामेव एतां पृथिवीमेव इदं सर्वं भूतम् । नातिशीयते नातिवर्त्तते । इमां पृथिवीमतिक्रम्य वस्तुजात न स्थातुमर्हति । पृथिव्यत्र पृथिवीजातिर्ग्राह्या । यत्र यत्र वस्तुज तस्यस्थितिस्तत्रतत्रावश्यमेव पृथिवीत्वम् । यथेयं पृथिवी सर्वेषां भूतानां प्रतिष्ठा । तथैव गायत्री छन्दसां प्रतिष्ठा गायत्र्याश्रितानि प्रायेण सर्वाणि छन्दांसि भवन्ति । मनुष्या अपि गायत्रीमाश्रित्यैव प्रतितिष्ठन्ति । यद्वा । गायत्र्यैव मनुष्या ब्रह्मणि प्रतितिष्ठन्ति । २ ॥

अनुवादः—जो वह गायत्री है वह यही है । जो यह पृथिवी है क्योंकि इसी के ऊपर यह सब पदार्थ समूह प्रतिष्ठित है इसी ( पृथिवी ) को यह सब पदार्थ अतिक्रमण नहीं कर सकता ॥ २ ॥

पदार्थः—( या+वै ) जो ही ( सा गायत्री ) वह गायत्री है अर्थात् पूर्वोक्त लक्षण सर्वभूतरूपा गायत्री है ( सा ) वह ( इयम्+वाव ) यही है ( या+इयम्+पृथिवी ) जो यह पृथिवी है ( हि ) क्योंकि ( अस्याम् ) इसी पृथिवी पर ( इदम्+सर्वम्+भूतम् ) यह सब पदार्थ (प्रतिष्ठितम्) प्रतिष्ठित है (एताम्+एव) इसी पृथिवी को (नातिशीयते कोई अतिक्रमण नहीं कर सकता ॥ २ ॥

भाष्याशयः—यह गायत्री पृथिवी सदृश है जैसे सब पदार्थों की प्रतिष्ठा पृथिवी है इसी पृथिवी को छोड़ अन्यत्र जीवों की प्रतिष्ठा नहीं हो सकती यहां पर पृथिवी शब्द जाति परक है । जहां जहां पदार्थ है वहां वहां अवश्य ही पृथिवीत्व है । गायत्री भी सब छन्दों की प्रतिष्ठा है । प्रायः सब ही छन्द गायत्री छन्द क अधीन हैं मनुष्य भी

गायत्री को आश्रय बना कर जगत् में प्रतिष्ठित होते हैं । यद्वा । गायत्री के द्वारा ही ब्रह्म में प्रतिष्ठित होते हैं । इस को त्याग ज्ञानी क्षणमात्र नहीं रह सकता अतः पृथिवी और गायत्री का समत्व है ॥ २ ॥

**या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥**

या । वै । सा । पृथिवी । इयम् । वाव । सा । यद् । इदम् । अस्मिन् । पुरुषे । शरीरम् । अस्मिन् । हि । इमे । प्राणाः । प्रतिष्ठिताः । एतद् । एव । न । अतिशीयन्ते ॥ ३ ॥

भाष्यम्–येति । या वै सा पृथिवी । या पूर्वोक्ता सर्वभूतप्रतिष्ठोक्ता । सा पृथिवी । इयं वाव । इयमेव । का सा ? । इदमेव । यदिदम् । विधेयप्राधान्यान्नपुंसकत्वम् । अमुष्मिन्पुरुषे । अस्य पुरुषस्य शरीरं वर्त्तते । पुरुषस्य यच्छरीरमस्ति । सा पृथिव्येव । शरीरस्य पार्थिवत्वात् । कथं शरीरस्य पृथिवीत्वमित्युच्यते । हि यतः । अस्मिन् शरीरे इमे प्राणाः प्रतिष्ठिताः । एतदेव शरीरम् । इमे प्राणाः । नातिशीयन्ते । नातिक्रम्य प्रतितिष्ठन्ति ॥ ३ ॥

अनुवादः–जो वह पृथिवी गायत्रीवत् है वह यही है सो यह इस पुरुष में ( इस पुरुष का ) शरीर है । क्योंकि इस में ये प्राण प्रतिष्ठित हैं । इसी का ये प्राण अतिक्रमण नहीं कर सकते हैं ॥ ३ ॥

पदार्थः–(या वै ) जो ही (सा) वह (पृथिवी) अर्थात् सर्व प्रतिष्ठा पृथिवी रूपा जो गायत्री है (सा+इयम्+वाव) वह यही है । कौन है सो आगे कहते हैं (अस्मिन्पुरुषे) इस पुरुष में अर्थात् इस पुरुष का ( यद्+इदम्+शरीरम् ) जो यह शरीर है ( हि ) क्योंकि ( अस्मिन्+पुरुषे ) इस शरीर में ( इमे प्राणाः ) ये प्राण ( प्रतिष्ठिताः ) प्रतिष्ठित हैं ( एतद्+एव ) इसी शरीर का प्राण ( न+अतिशीयन्ते ) अतिक्रमण नहीं कर सकते, इस शरीर को छोड़ ये प्राण नहीं रह सकते ॥ ३ ॥

भाष्याशयः–भाव यह है कि यह गायत्री पृथिवी समान है यह पृथिवी इस जीवात्मा का शरीर है । जैसे इस शरीर में प्राण प्रतिष्ठित हैं वैसे ही इस गायत्री में धर्म्म प्रतिष्ठित हैं । अतः गायत्री अब शरीरवत् हुई ॥ ३ ॥

**यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥**

यद् । वै । तत् । पुरुषे । शरीरम् । इदम् । वाव । तद् । यद् । इदम् । अस्मिन् । अन्तःपुरुषे । हृदयम् । अस्मिन् । हि । इमे । प्राणाः । प्रतिष्ठिताः । एतद् । एव । न । अतिशीयन्ते ॥ ४ ॥

भाष्यम्—यदिति । पुनर्गायत्रीं विशिनष्टि । अस्मिन्पुरुषे । यद्वै । यदेव । तच्छरीरमस्ति । तदिदंवाव । तदिदमेव । किं तदित्याह । अस्मिन् अन्तःपुरुषे । यदिदम् । हृदयम् । पुण्डरीकाक्षम् । सा वै गायत्री । कथमित्याह । अस्मिन्हीमे प्राणाः प्रतिष्ठिताः । अतः शरीरवद्गायत्री हृदयम् । एतदेव हृदयं प्राणा नातिशीयन्ते ॥ ४ ॥

अनुवादः—पुरुष का जो वह शरीर है वह यही है । जो यह इस अन्तःपुरुष में हृदय है । क्योंकि इस में प्राण प्रतिष्ठित हैं । इसी को प्राण नहीं त्याग सकते ॥ ४ ॥

पदार्थः—( पुरुषे ) पुरुष का ( यद्+वै+एतद्+शरीरम् ) जो ही यह शरीर है ( तद् ) वह ( इदम्+वाव ) यही है । वह कौन है सो कहते हैं ( अस्मिन् ) इस ( अन्तःपुरुषे ) अन्तःपुरुष में ( यद्+इदम् ) जो यह ( हृदयम् ) पुण्डरीकाक्ष है ( हि ) क्योंकि ( अस्मिन् ) इसी में ( इमे+प्राणाः ) ये प्राण (प्रतिष्ठिताः ) प्रतिष्ठित हैं( एतदेव ) इसी हृदय को ( न+अतिशीयन्ते ) छोड़ प्राण नहीं रह सकते ॥ ४ ॥

भाष्याशयः—यह शरीर ही हृदय है । अतः शरीरवद् गायत्री हृदय रूपा है ॥४॥

**सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम् ॥ ५॥**

सा । एषा । चतुष्पदा । षड्विधा । गायत्री । तद् । एतद् । ऋचा । अभ्यनूक्तम् ॥ ५ ॥

भाष्यम्—सैषेति । सैषा चतुष्पदा षडक्षरपादा छन्दोरूपा गायत्री षड्विधाभवति । वाग्,

( १ ) यद्वा गायत्री ऋङ्मात्राभिधायिनी । अतएव । टाबृचि ४ । १ । ९ । ऋचि वाच्यायां पादन्ताट्टाप्स्यादित्यनेनटाप् । तेन चतुष्पदेति उपलक्षणमात्रम् । एकपदा द्विपदा त्रिपदा चतुष्पदेत्यादि सर्वं विज्ञेयम् । ऋक्पदेन सर्ववेदवाणी । अतएव "गौरीर्मिमाय सलिलानितक्षत्येकपदी द्विपदी सा चतुष्पदी, अष्टापदी नवपदी सहस्राक्षरा परमे व्योमन्" इति मन्त्रो वर्णयति । बृहदारण्यकेपि । गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि ॥ ५ । १४ । ७ ॥ अपदिति पाद बद्धव्यतिरिक्तापि वाणी संगृह्यते ।

भूत, पृथिवी, शरीर, हृदय, प्राण, रूपा सती षड्विधा भवति। अनया गायत्र्या। एतद् ब्रह्मापि प्रकाश्यते । अतो गायत्र्यनुगतं ब्रह्मास्ति । वयं हि वैदिकाञ्छब्दान् विना ब्रह्म विज्ञातुं न शक्नुमः । मन्त्रा एव यादृशं ब्रह्म प्रकाशयन्ति तादृशमेव ब्रह्म विजानीमः । अतो मन्त्रा ब्रह्मप्राप्तिद्वारम् । तत्रापि गायत्रीमन्त्रः सम्यग् ब्रह्म दर्शयति । अतो गायत्रीद्वारकं ब्रह्मास्ति । ऋचापि तदेतदेव गायत्र्याख्यं ब्रह्म । अभ्यनूक्तम् । प्रकाशितम् ॥ ५ ॥

अनुवादः—सो यह चतुष्पदा गायत्री छः प्रकार की है सो यह ब्रह्म उसके द्वारा प्रकाशित होता है । ऋङ्मन्त्र द्वारा भी यह विषय कहा गया है ॥ ५ ॥

पदार्थः–( सा+एषा ) वह यह ( चतुष्पदा ) चार चरणवाली ( गायत्री ) गायत्री ( षड्विधा ) छः प्रकार की है ( तदेतत् ) वह यह विषय ( ऋचा ) ऋङ् मन्त्र द्वारा ( अभ्यनूक्तम् ) प्रकाशित हुआ है ॥ ५ ॥

भाष्याशयः–गायत्री २४ अक्षरों की होती है । छः छः अक्षरों का एक २ पाद होगा । वाणी, भूत, पृथिवी, शरीर, हृदय और प्राण इन भेदों से गायत्री छः प्रकार की है । इस गायत्री से यह ब्रह्म प्रकाशित होता है । अतः गायत्री के अनुगत ब्रह्म है ऐसा कह सकते हैं क्योंकि हम लोग वैदिक शब्दों के विना ब्रह्म को नहीं जान सकते हैं । मन्त्र ही जैसा ब्रह्म का प्रकाश करता है हम लोग वैसा ही ब्रह्म जानते हैं । इस हेतु मन्त्र ब्रह्मप्राप्ति का द्वार है उसमें भी गायत्री मन्त्र अच्छे प्रकार ब्रह्म का प्रकाश करता है । अतः ब्रह्म की बोधक गायत्री है ॥ ५ ॥

**तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवीति ॥ ६ ॥**

तावान् । अस्य । महिमा । ततः । ज्यायान् । च । पूरुषः । पादः । अस्य । सर्वा । भूतानि । त्रिपाद् । अस्य । अमृतम् । दिवि । इति ॥ ६ ॥

भाष्यम्–तावानिति । तावानित्यृक् प्रदर्श्यते । "एतावान्" "तावान्" इत्युभयपाठो वेदे दृश्यते । अस्य गायत्री प्रदर्शितस्य पुरुषस्य ब्रह्मणः । भूतभविष्यद्वर्त्तमानस्थो यावान् संसारोस्ति । तावानस्यमहिमा : महत्त्वं विद्यते । तावानेवास्य महिमाचेत्तर्हि तस्य महिम्नः परिच्छेद इयत्ता जातेतिगम्यते । अत्रब्रूते । ततो ज्यायांश्च पूरुषः । ततः । तस्माद्दृश्यमानात् प्रकृतिविकाराद् जगतोऽपि । पुरुषः । ज्यायान् । महत्तरः । चाच्छ्रेष्ठः पूजनीयः स एवेति गम्यते । यतः सर्वा सर्वाणि भूतानि पृथिव्यादीनि पञ्चमहाभूतानि । सर्वाणिवस्तूनि वा अस्य पुरुषस्य पादः । एकः पादः । एकपाद परिमितानि ।

लघ्वैकदेशपरिमितानीत्यर्थः । अत्र शङ्का भवति । यत्र २ संसारोऽस्ति तत्रतत्रैव स स्थातुं शक्नोति संसाराद् बहिः कथं निरवलम्बस्तिष्ठेत् । यद्यस्य पादैकपरिमितमेवेदंब्रह्माण्डम् । तर्हि । अवशिष्टं पादत्रयं निरवलम्बं निराधारं क तिष्ठेत् । इमां शङ्कां निवारयितुं त्रिपादस्यामृतं दिवीति । त्रयाणां पादानां समाहारस्त्रिपाद् । पादत्रयमित्यर्थः । अस्य ब्रह्मणः । अवशिष्टं पादत्रयम् । दिवि । द्योतनवति स्वात्मनि स्वमहिम्नि । अवस्थितमित्यर्थः । स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि इति श्रुतिनिर्धारणात् । कथंभूतं त्रिपाद् । अमृतम् । मोक्षस्वरूपम् ॥ ६ ॥

अनुवादः—इस ( पुरुष ) की जितनी महिमा है । उससे भी यह पुरुष महत्तर और पूज्यतम है । समस्त भूत इसके एक अंश परिमित हैं । इसका अमृतस्वरूप पादत्रय देदीप्यमान निज महिमा में विद्यमान है ॥ ६ ॥

पदार्थः–( अस्य ) गायत्री प्रदर्शित इस व्यापक पुरुष ( ब्रह्म ) का ( महिमा ) महत्त्व ( तावान् ) उतना है जितना भूत, भविष्यत्, वर्त्तमानस्थ यह समस्त संसार है उतनी इसकी महिमा है । अब शङ्का होती है कि यदि इसकी उतनी ही महिमा है तो उसकी महिमा का परिच्छेद हो जयगा । इस कारण "ततो ज्यायान् च पूरुषः" इत्यादि कहते हैं यह जो दृश्यमान वा अदृश्यमान संसार है ( ततः ) उस से भी ( पूरुषः ) यह ब्रह्मरूप पुरुष ( ज्यायान् ) बहुत बड़ा है ( च ) और सर्वश्रेष्ठ सर्वपूज्यतम है । क्योंकि ( सर्वा ) सब ( भूतानि ) भूत अर्थात् भूतोपलक्षित ये समस्त भुवन ( अस्य ) इस ब्रह्म का ( पादः ) एकपाद परिमित है । एक पाद के बराबर है अर्थात् उसके एक अंश के तुल्य है । अब पुनः शङ्का होती है । जहां जहां संसार है वहां वहां ही वह पुरुष रह सकता है । संसार से बाहर निरवलम्ब निराधार वह कैसे रह सकता है । यदि उसके एकपाद परिमित ही यह समस्त संसार है तो उसका अवशिष्ट पादत्रय निराधार कहां जाता है । इस शङ्का की निवृत्ति के लिये आगे कहा जाता है ( अस्य ) इसके ( त्रिपाद् ) तीनपाद ( दिवि ) देदीप्यमान निज महिमा में स्थित है । अर्थात् निज महिमा ही उसका आधार है । अस्मदादिवत् अन्य आधार की अपेक्षा वह नहीं रखता है । क्योंकि सप्तम प्रपाठक में कहा गया है कि वह अपनी महिमा में ही रहता है । वह त्रिपाद् कैसा है ( अमृतम् ) मोक्षस्वरूप है ॥ ६ ॥

**यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥**

यद् । वै । तद् । ब्रह्म । इति । इदम् । वाव । तद् । यः । अयम् । बहिर्धा । पुरुषाद् । आकाशः । यः । वै । सः । बहिर्धा । पुरुषाद् । आकाशः ॥ ७ ॥

भाष्यम्---यदिति । यद्वै । यदेव । उक्तगायत्री मुखेन प्रकाशितम् तद् ब्रह्मेति । तदेव ब्रह्म । निरञ्जनं निष्कलं शुद्धमपापविद्धम् । इदम्वाव । इदमेव तत् । योऽयं । पुरुषाद् । बहिर्धा ; वाह्यः । आकाशः । यो वै स बहिर्धा । पुरुषादाकाशः । उक्तयर्चा यद्विवृतं तत्किं गायत्रीछन्दसो व्याख्यानमुत ब्रह्मणः । प्रकृतत्वाद् गायत्र्या एव तद्भवितुमर्हति । तदत्रोच्यते । शब्दमयी नियतवर्णसंख्याविशिष्टा गायत्री कथं स्वरूपत एकांशेन त्रिभुवनमध्यासितुं शक्नोति । अतस्तद्ब्रह्मण एवेति विस्फोरयितुमुत्तरोग्रन्थः । यद्वै । यदेव । यद्वा । उक्तयर्चा प्रकाशितम् । तद्ब्रह्मेति । नान्यदित्यर्थः । पुनरपि । अन्तर्बहिश्च ब्रह्मतत्त्वं दर्शयत्युपासनार्थम् । इदं तदस्ति योऽयं पुरुषात् । शरीरपिण्डात् बहिर्धा । वाह्यः । आकाशः । प्रकाशः । प्रकाशवानित्यर्थः । एवं यो वै स बहिर्धा पुरुषादाकाशः । अयं वाव स इत्युत्तरेण सम्बन्धः ॥ ७ ॥

अनुवादः–जो ही ( पूर्वोक्त ऋचा के द्वारा वर्णित हुआ है ) वह ब्रह्म है । यही वह है । जो यह पुरुष के बाहर आकाश ( प्रकाशवान् ) है । जो हीं वह पुरुष के बाहर आकाश है ( यही वह है ) ॥ ७ ॥

पदार्थः —( यद्वै ) जो ही ब्रह्म पूर्वोक्त ऋचा के द्वारा वर्णित हुआ है ( तद्+ब्रह्म+इति ) वही ब्रह्म है । दूसरा नहीं ( इदम्+वाव ) यही ( तद् ) वह है ( यः+अयम् ) जो यह ( पुरुषाद् ) पुरुष से ( बहिर्धा ) बाहर ( आकाशः ) प्रकाश अर्थात् प्रकाशवान् है ( यः+वै ) जो ही ( सः ) वह ( पुरुषाद्+बहिर्धा + आकाशः ) पुरुष से बाहरी आकाश है (अयम+वाव+सः) यही वह है इतना उत्तर प्रवाक से सम्बन्ध रखता है ॥ ७ ॥

भाष्याशयः–उक्त ऋचा से जो प्रकाशित हुआ है वह गायत्री छन्द का वर्णन है अथवा ब्रह्म का ? पूर्व प्रकरण से गायत्री का ही वर्णन हो रहा है अतः यह भी उसी का व्याख्यान होना चाहिये । इस हेतु यहां कहा जाता है कि शब्दमय, नियतवर्ण संख्याविशिष्ट गायत्री कैसे स्वरूप से एक अंश द्वारा त्रिभुवन को व्याप्त कर सकती है । इस हेतु वह व्याख्यान ब्रह्म का है । इसे विस्पष्ट करने के लिये उत्तर ग्रन्थ है । आगे के वर्णन से ईश्वर की बाहर भीतर व्यापकता दिखलाई जाती है ॥ ७ ॥

**अयं वाव स योऽयमन्तःपुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशः ॥ ८ ॥**

अयम् । वाव । सः । यः । अयम् । अन्तःपुरुषे । आकाशः । यः । वै । सः । अन्तः-पुरुषे । आकाशः ॥ ८ ॥

भाष्यम्—अयमिति । अयं वाव । अयमेव । सोऽस्ति । योऽयम् । अन्तःपुरुषे । पुरुषस्याभ्यन्तरे शरीराभ्यन्तरे । आकाशः । प्रकाशवानस्ति । यो वै सः । य एव सः । अन्तःपुरुषे । आकाशः । अयं वावसः । इत्युत्तरेणान्वयः ॥ ८ ॥

अनुवादः—यही वह है । जो इस पुरुष ( शरीर ) के अभ्यन्तर आकाश ( प्रकाशवान् ) है जो ही वह शरीर के अभ्यन्तर प्रकाशवान् है ( यही वह है ) ॥ ८ ॥

पदार्थः—( अयं+वाव+सः ) यही वह है ( यः+अयम् ) जो यह ( अन्तःपुरुषे ) शरीर के अभ्यन्तर में ( आकाशः ) प्रकाश अर्थात् ( प्रकाशवान् ) है ( यो वै सः ) जो ही वह ( अन्तःपुरुषे ) शरीर के अभ्यन्तर ( आकाशः ) प्रकाशवान् है ( अयं+वाव+सः ) यही वह है । इतना उत्तर पद से सम्बन्ध है ॥ ८ ॥

**अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीᳶ श्रियं लभते य एवं वेद ॥ ९ ॥**

अयम् । वाव । सः । यः । अयम् । अन्तर्हृदये । आकाशः । तद् । एतत् । पूर्णम् । अप्रवर्ति । पूर्णाम् । अप्रवर्तिनीम् । श्रियम् । लभते । यः । एवम् । वेद ॥९॥

भाष्यम्—अयमिति । अयंवाव अयमेवसोऽस्ति । योऽयमन्तर्हृदये । हृदयाभ्यन्तरे । आकाशः । प्रकाशः । प्रकाशवान् । तदेतद्धृदयान्तर्वर्ति आकाशाख्यं ब्रह्मास्ति । तत्पूर्णम् । सर्वगतम् । न हृदयमात्रपरिच्छिन्नमिति मन्तव्यम् । पुनः कथं भूतम् ? अप्रवर्ति । अचलम् । सदैकभावम् । फलं कथयति । यो विद्वान् एवं वेद । सोऽपि । पूर्णं ब्रह्म लभते । अन्ते । इहचाप्रवर्तिनीं श्रियम् । धनधान्यसम्पत्तिं लभते ॥ ९ ॥

इति द्वादश खण्डस्य संस्कृतभाष्यं समाप्तम् ॥१२॥

अनुवादः—यही सो है जो यह हृदय के मध्य आकाश है । वह यह ( ब्रह्म ) पूर्ण और अप्रवर्ति है । जो ऐसा जानता है वह पूर्ण ( ब्रह्म ) को और अप्रवर्तिनी लक्ष्मी ( धन सम्पत्ति ) को पाता है ।

पदार्थः—( अयम्+वाव ) यही ( सः ) वह है ( यः+अयम् ) जो यह ( अन्तर्हृदये ) हृदयाभ्यन्तर ( आकाशः ) अर्थात् प्रकाशवान् ब्रह्म है ( तदेतत् ) वह यह

हृदयाकाशस्थ ब्रह्म ( पूर्णम् ) सर्वत्र विद्यमान है । पुनः ( अप्रवर्ति ) परिवर्त्तन रहित है । आगे फल कहते हैं (यः+एवम्+वेद) जो ऐसा जानता है । वह (पूर्णम् ) पूर्णब्रह्म को ( लभते ) पाता है और ( अप्रवर्तिनी ) सदा स्थिर रहने वाली ( पूर्णाम् ) पूर्ण ( श्रियम् ) सम्पत्ति ( लभते ) पाता है ॥ ९ ॥

इति द्वादश खण्डस्य भाषाभाष्यं समाप्तम् ॥ १२ ॥

## गायत्री शब्द (१४)

गायत्री शब्द के ऊपर संक्षिप्त टिप्पणी आवश्यक प्रतीत होती है । क्योंकि बहुधा साधारण लोग "तत्सवितुर्वरेण्यम्" इत्यादि एक मन्त्र को ही केवल गायत्री समझते हैं और इस को स्त्रीरूपमानकर शाक्तलोग परमसुन्दरी परमैश्वर्यशालिनी एक विशेष रमणी के उचित विशेषण जितने होने चाहियें । उन विशेषणों से उन्हें भूषितकर ध्यान करते हैं जो कि सत्य नहीं हैं । वेदों में प्रायः सात छन्दों के प्रयोग आये हैं । वे ये हैं। गायत्री, उष्णिग्, अनुष्टुप्, बृहती, पङ्क्ति, त्रिष्टुप्, जगती। अथर्ववेद में इन सातों छन्दों के नाम एकही स्थान में आगये हैं यथाः—

**गायत्र्युष्णिगनुष्टुब् बृहती पङ्क्तिस्त्रिष्टुब् जगत्यै ।**
**अथर्व० का० १९ । अनु० ३ । सू० २१ । मं० १ ॥**

और इन में से प्रत्येक गायत्री आदि छन्द के आठ आठ भेद हैं । वे ये हैं— आर्षी १ दैवी २ आसुरी ३ प्राजापत्या ४ याजुषी ५ साम्नी ६ आर्ची ७ और ब्राह्मी ८ । इस प्रकार सब छन्द मिलाकर ७×८=५६ प्रकार के होते हैं । पुनः इन के अनन्त भेद हैं जिन का वर्णन पिङ्गल आदि छन्दग्रन्थों में विस्तारपूर्वक है । मुख्य ये सात और प्रत्येक के आठ भेद हैं । गायत्री ( चतुर्विंशति ) २४ अक्षरों की होती है और क्रमशः उष्णिक्, अनुष्टुप्, बृहती, पङ्क्ति, त्रिष्टुप् और जगती छन्द में चार ४ अक्षरों की उत्तरोत्तर वृद्धि होती जाती है अर्थात् गायत्री=२४ उष्णिक्=२४+४ =२८ अनुष्टुप्=२८+४=३२ बृहती=३२+४=३६ पङ्क्ति=३६+४=४० त्रिष्टुप्=४०+४=४४ जगती=४४+४=४८ मुख्य येही हैं और इनके नाम आर्षीगायत्री, आर्षी उष्णिक्, आर्षी अनुष्टुप् आदि हैं और अन्य सात भेदों के ये नाम है। दैवी, आसुरी, प्राजापत्या, याजुषी, साम्नी, आर्ची और ब्राह्मी । इस में पिङ्गल का प्रमाण । "गायत्री २।२। दैव्येकम् २ । ३ । आसुरी पञ्चदश २ । ४" इत्यादि सूत्र से प्राग् यजुषामार्ष्य इति २ । १६ ॥ इस सूत्र पर्य्यन्त देखो। पुनः—

गायत्र्यावसवः ३ । ३ । गायत्री का एकपाद वसु=८ अक्षरों का होता है । यह भी विदित होना चाहिये कि गायत्री छन्द तीन ही पाद का होता है । इस हेतु ८×३ =२४ अक्षरों की गायत्री होती है इसी प्रकार "जगत्या आदित्याः ३ । ४ ।" जगती छन्द का एक पाद आदित्य=१२ अक्षरों का होता है । अतः चारों पाद १२×४=४८ अक्षरों के होते हैं । इत्यादि वर्णन पिङ्गल के तृतीयाध्याय में है । इस से यह सिद्ध हुआ कि गायत्री एक छन्द का केवल नाम है जो २४ अक्षरों का होता है । अतएव

**अग्निमीळे पुरोहितम् ॥ १ ॥ यज्ञस्य देवमृत्विजम् ॥ २ ॥ होतारं रत्नधातमम् ॥ ३ ॥**

ऋग्वेद का यह प्रथम मन्त्र गायत्री छन्द है केवल यही नहीं । किन्तु अनेक सूक्त तक केवल गायत्री ही छन्द है । पुनः—

**अग्न आयाहि वीतये ॥१॥ गृणानो हव्यदातये ॥२॥ निहोता सत्सि बर्हिषि ॥३॥**

यह सामवेद का प्रथम मन्त्र भी गायत्री ही छन्द है । यह भी देखते हैं कि इन में तीन चरण और २४ अक्षर हैं । २४ अक्षरों की गायत्री होती है इसमें उपनिषदों का प्रमाण यथा—"चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनम्" छा० उ० ३ । १७।१॥ २४ अक्षरों की गायत्री होती है, प्रातःसवन में मुख्यतया गायत्री ही छन्द का प्रयोग होता है । पुनः " अष्टाक्षरꣳह वा एकं गायत्र्यैपदम् " बृह० उ० ५ । १४ । १ । गायत्री छन्द में आठ अक्षरों का एक पद ( पाद ) होता है । अतः तीनों पाद मिलकर २४ अक्षरों के हुए ।

यहां पर यह शङ्का होती है कि जब गायत्री एक छन्दोमात्र का नाम है और वेदों में सैकड़ों गायत्री छन्द के मन्त्र हैं तब क्योंकर " तत्सवितुर्वरेण्यम् " यही एक मन्त्र गायत्री नाम से प्रसिद्ध हुआ अन्य नहीं ? जब हम किसी से पूछते हैं कि तुम गायत्री जानते हो तो कहो तब इस के उत्तर में ज्ञाता पुरुष "तत्सवितुर्वरेण्यम्" इसी को पढ़कर सुनाता है । अन्य "अग्निमीळे" आदि मन्त्र को नहीं । इसका क्या कारण । उत्तर—इस मन्त्र की इतनी प्रसिद्धि इस कारण हुई है कि माणवक ( बालक ) का जब उपनयन संस्कार होता है तब सब से प्रथम यही ( तत्सवितु० ) मन्त्र आचार्य सुनाते हैं और यह भी एक नियम है कि ऋषि देवता, छन्द, स्वर भी प्रत्येक मन्त्र के साथ साथ जानने चाहियें अतः नियमपूर्वक बालक को कह दिया जाता है कि

इस मन्त्र का छन्द गायत्री है। अब आप जानते हैं कि एक तो बालक अभ्यास करने के लिये उसे गायत्री नाम से ही पुकारने लगता है। और लोग भी उसी के अनुसार गायत्री मन्त्र कहो २ उस बालक से पूछा करते हैं क्योंकि यह आवश्यक है कि प्रथम उसको यह मन्त्र कण्ठस्थ हो जाना चाहिये। इस हेतु उसकी प्रसिद्धि हुई। पुनः शङ्का होती है कि चारों वेदों के प्रथम मन्त्र को छोड़ बालक को सब से प्रथम यही मन्त्र क्यों पढ़ाया जाता है। उचित तो यह है कि किसी वेद का प्रथम मंत्र ही प्रथम पढ़ाना चाहिये फिर ( तत्सवितुर्वरेण्यम् ) यही क्यों ?। उ०—यद्यपि वेद के सब ही मन्त्र एक से एक उत्तम हैं ( जिसकी उत्तमता का सर्वथा हम लोग नहीं समझ सकते हैं ) तथापि बालक को सब से प्रथम बुद्धि की आवश्यक्ता है। क्योंकि इसके विना कोई भी संसार का काम नहीं हो सकता। इस मन्त्र में बुद्धिवृद्धि के लिये प्रार्थना है। अतः यह प्रथम पढ़ाया जाता है। यदि कोई यह कहे कि अन्य भी तो ऐसे अनेक मन्त्र हैं। जिनमें बुद्धि के लिये प्रार्थना है फिर उनमें से कोई क्यों नहीं कहा जाता है। उत्तर उसमें भी आप यह शङ्का कर सकते थे कि यही मन्त्र प्रथम क्यों दिया जाता है। प्रथम तो कोई एक ही मन्त्र कहा जाता। उसमें यह शङ्का तुल्य ही थी। यदि यह कहा जाय कि तब ईश्वर ने प्रथम इसी मन्त्र का उपदेश क्यों नहीं किया ? उ०—ईश्वर ने महाज्ञानी, सूक्ष्मदर्शी, सिद्ध महापुरुष चार ऋषियों को वेद दिये। अब यह ज्ञानी मनुष्य का कर्त्तव्य है किस मन्त्र से क्या काम लेना चाहिये। जैसे जीवों के वास्ते यह सृष्टि दी है ज्ञानी पुरुष बुद्ध्यनुसार तत्तत् पदार्थ से काम लेते हैं। वैसा ही वेद के मन्त्र से तत्तत् काम लेते हैं। इस सृष्टि में सब से प्रधान आग्नेय पदार्थ है। उसके विना क्षणमात्र भी सृष्टि नहीं रह सकती है। अतः आग्नेय पदार्थ के वर्णन से वेद का आरम्भ होता है। ईश्वर अग्नियों का भी अग्नि है। जिस महा अद्भुत अग्नि के विना कुछ हो ही नहीं सकता। अतः यथार्थ में ईश्वर वाचक अग्नि शब्द से वेद आरम्भ होता है। जिस के दो दो अर्थ होते हैं। ईश्वर ने भी गायत्री छन्द के द्वारा ही वेद का आरम्भ किया है। अतः गायत्री छन्द परमप्रसिद्ध हुआ है और ( तत्सवितुः ) यह मन्त्र प्रथम पढ़ाने के कारण ही परम प्रसिद्ध होगया है। इस के ऊपर अनेक व्याख्यान भी हैं ॥

सावित्री—सावित्री भी नाम गायत्री का है ( सविता जगतः प्रसविता जनयितेश्वरो देवता अस्या इति सावित्री ) सविता अर्थात् सम्पूर्ण जगत् को उत्पन्न करनेवाले ईश्वर देवता हैं जिसके उसे सावित्री कहते हैं। इस गायत्रीमन्त्र का देवता सविता है

अतः सावित्री इसका नाम है । मनुजी कहते हैं—"त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् । तदित्यृचोस्याः सावित्र्याः परमेष्ठी प्रजापतिः । २ । ७७ ॥ .... । त्रिपदाचैव सावित्री विज्ञेयं ब्रह्मणोमुखम् । २ । ८१ ॥ .... । एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः । सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते" ॥ २ । ८३ ॥

इन श्लोकों में सावित्रीपद से गायत्री का ग्रहण होता है । इस में पुनः बृहदारण्यक उपनिषद् का प्रमाण—"स यामेवामूᳬसावित्रीमन्वाह एषैव । ५ । १४ । ४ ॥ तां हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतत् वाचमनुब्रूम इति न तथा कुर्य्याद् गायत्रीमेव सावित्रीमनुब्रूयात्" । बृ० उ० ५ । १४ । ५ ॥ भाव इसका यह है कि आचार्य लोग उपनीत माणवक को जो सावित्री कहते हैं यह गायत्री ही है । कोई आचार्य कहते हैं कि अनुष्टुप् छन्दोन्वित सवितृदेवतात्मक अन्य सावित्री मन्त्रमाणवक को देते हैं इस का भी अभिप्राय यही है क्योंकि अनुष्टुप् शब्द का यहां वाग् अर्थ है । सावित्री पद से यहां गायत्री का ही अभिप्राय है । अतः गायत्री ही माणवक को देनी चाहिये । इन प्रमाणों से यह सिद्ध होता है कि सावित्री नाम भी गायत्री का ही है । प्रश्न—गायत्री को लोग स्त्रीरूपा क्यों मानने लगे ? उ०—संस्कृतभाषा में गायत्री शब्द स्त्री लिङ्ग है । शब्द के स्त्रीलिङ्ग होने के कारण अज्ञानी लोग इसको भी स्त्रीरूपा मानने लगे । प्र०-क्या ऐसे और भी उदाहरण हैं ? । उ०—हां ऐसे हजारों उदाहरण हैं । यथा गङ्गा, यमुना, सरस्वती आदि शब्द स्त्रीलिङ्ग हैं । अतः जल के प्रवाह को भी स्त्रीरूपा मानते हैं । देश में गङ्गा आदि की जब मूर्त्ति बनाते हैं तो स्त्रीरूपा ही बनाते हैं । गङ्गा नदी न तो स्त्री न पुरुष है । मूर्खता से उसे स्त्री मानरक्खा है । इसी प्रकार रात्री, द्यौ, शची, इन्द्राणी, रुद्राणी आदि भी जानना । प्र०—बड़े २ पण्डित लोग भी तो गायत्री को स्त्रीरूपा ही मानते हैं सो क्यों ? उ०—वे लोग पूर्ण पण्डित नहीं हैं । जिन्हें पूर्ण विचार न हो वे पण्डित नहीं । उन्हें नामधारी पण्डित कहना चाहिये ये लोग "अन्धगोलाङ्गूलन्याय" के अनुसरण करने वाले हैं । गायत्री मन्त्र के द्वारा परब्रह्म का ध्यान वा प्रार्थना होती है किसी स्त्री विशेष की नहीं । इस मन्त्र का देवता भी सविता है जो पुंल्लिङ्ग हैं फिर इसको स्त्रीरूपा मानना सूचित करता है कि जगद्व्यामोहिनी और धर्म कर्म विलोपिनी अविद्या देश में फैली हुई है । इतिदिग् ॥

गायत्री और सोम—"सोमो वै राजाऽमुष्मिन् लोक आसीत् । तं देवाश्च ऋषयश्चाभ्यध्यायन् । कथमयमस्मान्त्सोमो राजा गच्छेदिति ? । तेऽब्रुवन् छन्दांसि । यूयं न इमं

सोमं राजानमाहरेति । तथेति । ते सुपर्णीभूत्वोदपतन् । ते यत् सुपर्णीभूत्वोदपतंस्तदेतत् सौपर्णमित्याख्यानविद आचक्षते इत्यादि । ऐतरेय ब्रा० तृतीय पञ्चिका २ । १ ॥

अनुवादः—परलोक में सोमराजा रहते थे । देव ( विद्वद्गण ) और ऋषियों ने उनका स्मरण किया । कैसे ये सोम राजा हम लोगों के निकट आवेंगे ( ऐसा विचार कर ) उन्होंने सब वैदिक छन्दों को कहा कि आप लोग इन सोमराज को हम लोगों के निकट ले आवें । उन्होंने तथास्तु कहा । वे "सुपर्ण" होकर ऊपर को चले । जिस कारण वे "सुपर्ण" होकर ऊपर को उड़े अतः इस प्रसङ्ग को आख्यानवित् पुरुष "सौपर्ण" कहते हैं । इसके अनन्तर यह वहां कहा गया है कि जगती, त्रिष्टुप् आदि छन्द सोमराज के लाने में असमर्थ हुए तब "ते देवा अब्रुवन् गायत्रीं त्वं न इमं सोमं राजानमाहरेति सा तथेत्यब्रवीत् । तां वै मा सर्वेण स्वस्त्ययनेनानुमन्त्रयध्वमिति । तथेति । सोदपतत् । तां देवाः सर्वेण स्वस्त्ययनेनान्वमन्त्रयन्त । प्रेति चेतिचेत्येतद्वै सर्वं स्वस्त्ययनं यत् प्रेति चेतिचेति" ।.... "सा पतित्वा सोमपालान् भीषयित्वा पद्भ्यांच मुखेन च सोमं राजानं समगृभ्णात् इत्यादि" । .... । ऐतरेय ब्रा० । ३ । ३ । २ ॥

अनुवादः—तब वे देव और ऋषि गायत्री छन्द से कहने लगे कि आप सोमराज को हम लोगों के निकट ले आवें । गायत्री एवमस्तु कहकर बोलीं कि आप लोग मुझ को सब स्वस्त्ययन से अनुमन्त्रण करें । इन्होंने वैसा ही स्वीकार किया । वे ऊपर को उड़ चलीं । देव और ऋषि उनको सब स्वस्त्ययन से अनुमन्त्रण करने लगे "प्र" "च" "च" "प्र" "च""च" ये ही सर्वोत्तम स्वस्त्ययन हैं ( प्र=प्रकर्ष, च=पुनः ) पुनः पुनः उत्कट इच्छा से ईश्वर के स्मरण करने का नाम "प्र, च, च" है । उनने जाकर सोम पालकों को भय दिखलाकर चरणों और मुख से सोमराज को पकड़ लिया । तदनन्तर उनको लाकर देव और ऋषियों को समर्पण किया । इत्यादि आख्यान ऐतरेय आदि ब्राह्मण ग्रन्थों में हैं ।

आशय । इसका अभिप्राय यह है सोमराजा यहां ईश्वर का नाम है । वह यद्यपि सर्वत्र विद्यमान है तथापि उसको कोई देख नहीं सकता अतः कहा जाता है कि वह परलोक में रहता है ( अमुष्मिन् ) पद मूल में है । दूरस्थ में अदस् शब्द का प्रयोग होता है वह हम अज्ञानियों के लिये दूरस्थ है इसमें सन्देह नहीं । उस ईश्वर की प्राप्ति के लिये देव और ऋषि सब कोई प्रयत्न करने लगे । परन्तु वह मिला नहीं । अतः ये लोग छन्दोमय वेद के निकट आये और कहा कि हमको ईश्वर दिखलाओ ( यह आलङ्कारिक वर्णन है ) सब मिलकर छन्दों को गाने लगे । उनकी गाने के समय -

छान्दोगमयी वाणी ऊपर को चली। अर्थात् ईश्वर की ओर चली। तथापि। केवल गाने से ही ईश्वर को न पाकर ईश्वर की प्राप्ति के लिये गायत्री ( वेदवाणी ) के द्वारा स्वस्त्ययन करने लगे तब ईश्वर की प्राप्ति हुई। गायत्री नाम सम्पूर्ण वेद वाणी का है। "वाग् वै गायत्री"। छा० उ० ३। १२। १॥ वाणी ही गायत्री है। अर्थात् जब सब प्रकार से अखिल वेद वाणी का मनन कर पाये तब ही ईश्वर की प्राप्ति हुई। केवल दो चार मन्त्रों के मनन से नहीं। यही इसका भाव है। ऐसे २ स्थानों में गायत्री शब्द का अर्थ समस्त वेद वाणी ग्रहण करनी चाहिये। इति दिग्

व्युत्पत्ति—"इदं सर्वं भूतं गायति च त्रायते च" छा० उ० ३। १२। १॥ जो सब प्राणी को गाती है और रक्षा करती है उसे गायत्री कहते हैं। "प्राणा वै गयास्तत्प्राणांस्तत्रे तद्यत् गयांस्तत्रे तस्माद्गायत्री नाम"॥ बृह० उ० ५। १४। ४। गायत्री शब्द में "गाय+त्री" ये दो शब्द हैं। गाय शब्द गय से बना है। गय नाम प्राणों ( सर्वेन्द्रियों ) का है। त्रै धातु से स्त्रीलिङ्ग में त्री बनता है तब यह अर्थ हुआ कि सब इन्द्रियों की रक्षा जो करती है उसे गायत्री कहते हैं। बुद्धि प्राप्त होने से निःसन्देह-इन्द्रियों का इन्द्रियत्व प्राप्त होता है यही इन्द्रियों की रक्षा है। और कोई २ आचार्य "गायन्तं त्रायत इति गायत्री" ऐसी भी व्युत्पत्ति करते हैं। इति गायत्री समीक्षा॥

*अथ त्रयोदशः खण्डः*

## तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत। तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥

तस्य। ह। वै। एतस्य। हृदयस्य। पञ्च। देवसुषयः। सः। यः। अस्य। प्राङ्। सुषिः। सः। प्राणः। तत्। चक्षुः। सः। आदित्यः। तद्। एतद्। तेजः। अन्नाद्यम्। इति। उपासीत। तेजस्वी। अन्नादः। भवति। यः। एवम्। वेद॥ १॥

भाष्यम्—तस्य हेति। लोके गुणज्ञाः प्रसादानुग्राह्या दौवारिका यथा प्रभुमभिरक्षन्ति। अन्ते कदाचिद्राज्यप्राप्तिसाधना अपि जायन्ते। तथैवेदं हृदयं पञ्चद्वारपाः सदा सन्निहिताःपान्ति। तानि पञ्च ज्ञानेन्द्रियाणि सन्ति। इमानि सम्यग् विज्ञाय विविध प्रसादैः स्ववशं नयेत। वशीभूतानीमानि सर्वाभ्य आपद्भ्यः पदेपदे त्रायन्त इत्यर्थमेवोत्तर खण्डमारभते। तस्य प्रकृतस्यैतस्य हृदयस्य। ह वै। निश्चितम्। पञ्च। पञ्च-

सङ्ख्याकाः । देवसुषयः । देवानामिन्द्रियाणां सुषयश्छिद्राणीति देवसुषयः । कल्याण साधनद्वारच्छिद्राणीत्यर्थः । अस्य कल्याणभवनस्यहृदयस्य स यः प्राङ्सुषिः प्रकर्षं गतः पटुः स्वविषयग्रहणं प्रति निपुणः । सुषिः । पूर्वाभिमुखस्य तस्य प्राग्गतं वा सच्छिद्रं द्वारमस्ति । सः प्राण उच्यते । तेनैव द्वारेण स वायुविशेषः प्राणः सञ्चरति । प्र=प्राग्+अनिति संचरतीति व्युत्पत्तेः । चक्षुष्येवतस्य प्राङ् सुषिर्द्वारम् । अतस्तच्चक्षुरुच्यते चक्षुः संज्ञकं ज्ञानेन्द्रियमित्यर्थः । स आदित्यः । स एव सुषिरादित्योऽपिकथ्यते । कथम् । आदित्यो ह वै वाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनु गृह्णानः । इति प्रश्नवचनात् । आदित्यतेजसाऽऽप्यायमानं तदेवरूपं विषेतुमर्हतीति । अतः स आदित्यो निगद्यते । कार्य्यकारणयोरभेदविवक्षात्रास्ति । चक्षुर्निमित्तकारणमादित्यः । अतएव । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् इत्यैतरेयीश्रुतिः संगता । अन्यच्च । पञ्चमप्रपाठके । प्राणे तृप्यति । चक्षुस्तृप्यति । चक्षुषि तृप्यति । आदित्यस्तृप्यति । आदित्ये तृप्यति । द्यौस्तृप्यति । इदमपिसंगच्छते । अन्यच्च । स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षषाति । कस्मिन्नु चक्षुः प्रतिष्ठितमिति । रूपेष्विति । चक्षुषाहि रूपाणि पश्यति । कस्मिन्नु रूपाण प्रतिष्ठितानीति । हृदय इति होवाच । हृदयेन रूपाणि जानाति । हृदिह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद् याज्ञवल्क्य । बृ० ३ । ९ । २० ॥ इत्येष शाकल्य याज्ञवल्क्य सम्वादः सर्वं विस्पष्टयति । एतस्योपासनविज्ञानमाह तदेतदिति । तदेतत् "तेजः" । "अनाद्यञ्चेति" अन्नमत्तीत्यन्नादः । तस्यभावोऽन्नाद्यम् । अन्नभोक्तृत्वमिति । द्वाभ्यां गुणाभ्यामुपासीत सम्यक् प्राकृताविद्यया विचारयेत । अयं सुषिः तेजस्वी । अन्नादश्चेति प्राकृतविज्ञानेन विजानीयात् । फलमाह । य एवं वेद सोऽपितेजस्वी । अन्नादश्चभवति ॥ १ ॥

अनुवादः—इस हृदय के, निश्चय, पञ्चदेव सुषि हैं । इस ( हृदय ) का वह जो पूर्वसुषि ( छिद्र ) है वह प्राण, वह चक्षु, वह आदित्य कहलाता है । इसको "तेज" और "अन्नाद्य" जान विचार करे । जो ऐसा जानता है वह तेजस्वी और अन्नाद होता है ॥ १ ॥

पदार्थः—( तस्य ) उस ( एतस्य ) इस ( हृदयस्य ) हृदय के ( ह वै ) निश्चय, ( पञ्च ) पांच ( देवसुषयः ) देव=इन्द्रियसम्बन्धी । सुषि=छिद्र हैं । अर्थात् इन्द्रियों के द्वार हैं ( अस्य ) इस हृदय भवन का ( सः+यः ) सो जो ( प्राङ् ) पूर्व गत ( सुषिः ) छिद्र = द्वार है । अर्थात् पूर्वाभिमुख होने से जो पूर्वद्वार ( नयनद्वार ) प्रतीत होता है ( सः प्राणः ) वह प्राण कहलाता है क्योंकि इसी द्वार से प्राणवायु चलता है ( तत्+चक्षुः ) वही चक्षु नयन और ( सः+आदित्यः ) वही आदित्य भी

कहलाता है । आगे इसकी उपसाना कही जाती है ( तद्+एतत् ) उस इस द्वार को ( तेजः ) तेज और ( अन्नाद्यम् ) अन्नभोक्तृत्व (जिस में अन्न का भोक्तापन है)(इति) इन दो गुणों से ( उपासीत ) प्राकृतविद्याद्वारा विचारे । विचार का साधन प्राकृतविद्या है आगे फल कहते हैं ( यः+एवम्+वेद ) जो ऐसा जानता है। वह (तेजस्वी+अन्नादः+भवति ) तेजस्वी और अन्नभोक्ता होता है ॥ १ ॥

भाष्याशयः—जैसे लोक में गुणग्राही और कृपापात्र द्वारपाल प्रभुकी सब प्रकार से रक्षा करते हैं । अन्त में वैसे द्वारपाल राज्यप्राप्ति के भी कभी कारण होते हैं वैसे ही इस हृदय को पञ्च द्वारपाल सदा निकटस्थ होकर पालते हैं । और अन्त में कल्याण के साधक भी होते हैं । वे पञ्च ज्ञानेन्द्रिय हैं । इनको अच्छे प्रकार जान विविध अनुग्रहों से प्रयत्नकर निजवश में लावे । वशीभूत होने से ये ही सर्व आपत्तियों से पद पद में रक्षा करते हैं । इसी को दिखलाने के लिये यह उत्तरखण्ड प्रारम्भ होता है। प्राण=प्र+अन् धातु से प्राण सिद्ध होता है । प्र=प्राग्=पूर्व । पूर्वद्वार से जिसका संचार हो उसे प्राण कहते हैं ( सः+आदित्यः ) वह आदित्य सूर्य इस हेतु कहलाता है कि ( आदित्यः ) सूर्य ही, निश्चय, बाह्यप्राण रूप से उदित होता है । यही चक्षुगतप्राण के ऊपर अनुग्रह करता है । यह प्रश्नोपनिषद् का वचन है अर्थात् सूर्य के तेज से पुष्ट होने पर चक्षु अपने रूप का ग्रहण करता है । अतः वह आदित्य कहलाता है। यहां कार्य कारण की अभेद विवक्षा है । चक्षु का निमित्तकारण आदित्य है । अर्थात् सूर्य के विना नयन कुछ कर ही नहीं सकता । इसी हेतु ऐतरेय श्रुति की भी संगति होती है ( आदित्यश्चक्षुः० ) आदित्य नयन होकर नयनों में प्रविष्ट हुआ ( इति ) ( प्राणे० ) और इसी हेतु छा० उ० पञ्चम प्रपाठक में कहा गया है प्राण की तृप्ति से चक्षु तृप्त होता है । चक्षु की तृप्ति से आदित्य तृप्त होता है । आदित्य की तृप्ति से द्युस्थ पदार्थ तृप्त होता है इत्यादि । और भी बृहदारण्यक उ० में कहा गया है ( सआदित्यः ) वह आदित्य किस में प्रतिष्ठित ( स्थित ) है ? चक्षु में इति । चक्षु किस में प्रतिष्ठित है ? रूपों में इति । क्योंकि चक्षु से ही रूपों को देखता है । रूप किस में प्रतिष्ठित है ? हृदय में इति । हृदय से ही रूपों को जानता है । क्योंकि हृदय में ही सब रूप प्रतिष्ठित हैं । यह शाकल्य और याज्ञवल्क्य सम्वाद है इस से विस्पष्ट होता है कि हृदय में ही सब प्रतिष्ठित है । चक्षु आदि केवल द्वारपालवत् इस के रक्षक हैं । अन्नाद्य=अन्न के भोक्ता को अन्नाद ( अन्न+आद ) उस के भाव को अन्नाद्य कहते हैं ॥

**अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रꣳ स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत। श्रीमान्यशस्वी भवति य एवं वेद ॥ २ ॥**

अथ । यः । अस्य । दक्षिणः । सुषिः । सः । व्यानः । तत् । श्रोत्रम् । सः । चन्द्रमाः । तद् । एतत् । श्रीः । च । यशः । च । इति । उपासीत । श्रीमान् । यशस्वी । भवति । यः । एवम् । वेद ॥ २ ॥

भाष्यम्—अथेति । अथ प्राणोपास्त्यनन्तरं व्यानोपास्तिरुच्यते । अस्य हृदयस्य। यो दक्षिणःपटुः । दक्षिणदिक्स्थो वा सुषिश्छिद्रम् । द्वारम् । स व्यानः । वायुविशेषः । तेनैव द्वारेण स वायुः सञ्चरति अतः सः व्यानः । तत्स्थत्वसाहचर्य्यात् । तत् श्रोत्रम् । सः सुषिः श्रोत्रमुच्यते । श्रोत्रनामकं ज्ञानेन्द्रियमित्यर्थः । स चन्द्रमाः कथ्यते । शब्दं श्रुत्वैव जनश्चन्दति आह्लादयति। शब्देन जना परिचीयन्ते । अतएव च "व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति । चन्द्रमसि तृप्यति दिशस्तृप्यन्ति" । इत्यादि। छा० उ० ५ । २० । २ ॥ अतएव । दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन् ऐ० उ० २ ।४॥ इति संगच्छते । तदुपास्तिविज्ञानमुच्यते । तदेतत्। सैषा "श्रीश्च यशश्च" इति द्वाभ्यां गुणाभ्यां भूतवियोपासीत विचारयेत। य एवं वेद सोऽपि। श्रीमान् यशस्वी भवति । श्रोत्रगएव शब्दोगृह्यते । वेदात्मकं तदनुसारि विद्वत्प्रणीत शास्त्रात्मकं वा शब्दं विज्ञाय लोके सम्पत्तिमान् यशस्वी च भवति । अतः परम्परया श्रोत्रमेव श्रियो यशसश्च-कारणम् । स एव व्यानः ॥ २ ॥

अनुवादः—अनन्तर इस का जो दक्षिण सुषि है वह व्यान ( नामक द्वार ) है । वह श्रोत्र और वह चन्द्रमा कहलाता है । इस को "श्री" और+"यश" जान विचारे। जो ऐसा जानता है वह श्रीमान् और यशस्वी होता है ॥ २ ॥

पदार्थः-(अथ) प्राणोपासना के अनन्तर व्यान की उपासना कही जाती है अस्य) इस हृदय का ( यः ) जो (दक्षिणः) दक्षिण=पटुः—अपने विषय ग्रहण करने में निपुण ( सुषिः ) छिद्र द्वार है (सः+व्यानः) वह व्यान है । क्योंकि इसी छिद्र से व्यान का संचार होता है ( तत्+श्रोत्रम् ) वह श्रोत्र नामक ज्ञानेन्द्रिय कहलाता है और ( सः+चन्द्रमाः ) उसे चन्द्रमा भी कहते हैं । आगे इस का विज्ञान कहते हैं । ( तत्+एतत् ) इस श्रोत्रात्मक ज्ञानेन्द्रिय को (श्रीः+च ) शोभा सम्पति और ( यशः+च )

कीर्त्तिमान् ( उपासीत ) प्राकृत विज्ञान शास्त्र द्वारा विचार करे आगे फल कहते हैं । (यः+एवं+वेद) जो साधक ऐसा जानता है वह ( श्रीमान्+यशस्वी+भवति ) श्रीमान् और यशस्वी होता है ॥ २ ॥

भाष्याशयः—( स चन्द्रमाः । चदि आह्लादे ) आह्लाद आनन्द अर्थ में चदि धातु है । इसी से चन्द्रमा सिद्ध होता है । कोई २ दो धातुओं से भी इसे सिद्ध करते हैं । शब्द सुन के ही मनुष्य किसी को आह्लादित करता है । शब्द से ही जन परिचित होते हैं । और कर्ण से ही शब्द सुनता है । अतः कर्णेन्द्रिय को चन्द्र वा चन्द्रमा कहते हैं । अतएव ( व्याने० ) व्यान की तृप्ति से श्रोत्र तृप्त होता है श्रोत्र की तृप्ति से चन्द्रमा तृप्त होता है चन्द्रमा की तृप्ति से दिशाएं तृप्त होती हैं इत्यादि वचनों की संगति होती है और इसी कारण ( दिशः० ) दिशाएं श्रोत्र होकर कर्णों में प्रविष्ट हुई कहागया है ॥ २ ॥

**अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद् ब्रह्मवर्चसमन्नाद्यमित्युपासीत । ब्रह्मवर्चस्यन्नादो भवति य एवं वेद ॥ ३ ॥**

अथ । यः । अस्य । प्रत्यङ् । सुषिः । सः । अपानः । सा । वाग् । सः । अग्निः । तद् । एतद् । ब्रह्मवर्चसम् । अन्नाद्यम् । इति । उपासीत । ब्रह्मवर्चसी । अन्नादः । भवति । यः । एवम् । वेद ॥ ३ ॥

भाष्यम्— अथेति । अथानन्तरम् । अस्य हृदयस्य । यः । प्रत्यङ् । सर्वं प्रति अञ्चति । गच्छति प्राप्नोतीति प्रत्यङ् । प्रत्यग्भवश्चवा । सुषिश्छिद्रमास्ति । सोऽपानः । सा वाग् । तद्वाङ्नामकं ज्ञानेन्द्रियम् । सोऽग्निरप्युच्यते । अग्निनैववागप्यायते । अत उक्तम् । तेजोमयी वागिति । छा० ६ । ५ । ४ ॥ अग्निर्वाग् भूत्वा मुखं प्राविशत् । ऐ० २ । ४ ॥ इति च । अन्यच्च—"अपाने तृप्यति वाक् तृप्यति वाचितृप्यन्ताम् अग्निस्तृप्यति । अग्नौतृप्यति पृथिवी तृप्यति" छा० ५।२१ २ ॥ इति छान्दोग्यश्रुतिः सङ्गता । उपास्ति विज्ञानमुच्यते । तदेतज्ज्ञानेन्द्रियमिदं "ब्रह्मवर्चसम्" "अन्नाद्यम्" अन्नभोक्तृत्वमिति च विदित्वा मत्वा वा । उपासीत । भूतविद्यया भावयेत । विजानीत । फलमाह । य एवंवेद । स ब्रह्मवर्चसी अन्नादो भवति ॥ ३ ॥

अनुवादः—अनन्तर जो इसका प्रत्यङ् सुषि है वह अपान कहलाता है । वह वाग् और वह अग्नि कहलाता है । उस को "ब्रह्मवर्चस और अन्नाद्य" मान उपासना करे । जो ऐसा जानता है वह ब्रह्मवर्चसी और अन्नभोक्ता होता है ॥ ३ ॥

पदार्थः—अनन्तर ( अस्य ) इस हृदय का ( यः ) जो ( प्रत्यङ् ) प्रत्येक वस्तु से सम्बन्ध रखने वाली वा पश्चिमदिक्स्थ ( सुषिः ) छिद्र है ( सः+अपानः ) वह अपान है क्योंकि मुख में ही इस वायु का संचार है ( सा+वाग् ) वह वाणी कहलाती है । अर्थात् वह वागात्मक ज्ञानेन्द्रिय है ( सः+अग्निः ) उसे अग्नि भी कहते हैं । क्योंकि वागिन्द्रिय का निमित्तकारण अग्नि है । आगे उपासना सम्बन्धी विज्ञान कहा जाता है ( तत्+एतत् ) इस वाक् ज्ञानेन्द्रिय को (ब्रह्मवर्चसम्) ब्रह्मसाधक तेज और (अन्नाद्यम्) अन्नभोक्तृत्व मान ( उपासीत ) प्राकृत विद्या द्वारा जाने । आगे फल कहते हैं (यः+एवम्+वेद) जो ऐसा जानता है वह भी ब्रह्मवर्चसी होता है इत्यादि पूर्ववत् ॥३॥

भाष्याशयः—( सः+अग्निः ) अग्नि इसको इस हेतु कहा है क्योंकि आग्नेय शक्ति ही वाणी का कारण है । अतएव कहा गया है ( तेजोमयी० ) तेजोमयी वाणी है पुनः ( अग्निः ) अग्नि वाणी होकर मुख में प्रविष्ट हुई । पुनः ( अपाने० ) अपानकी तृप्ति से वाग् तृप्त होती है वाणी की तृप्ति से अग्नि तृप्त होती है । अग्नि की तृप्ति से पृथिवी तृप्त होती है । इत्यादि वाक्य की संगति होती है ॥ ३ ॥

**अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्त्तिमान् व्युष्टिमान् भवति य एवं वेद ॥ ४ ॥**

अथ । यः । अस्य । उदङ् । सुषिः । सः । समानः । तत् । मनः । सः । पर्जन्यः । तद् । एतद् । कीर्त्तिः । च । व्युष्टिः । च । इति । उपासीत । कीर्त्तिमान् । व्युष्टिमान् । भवति । यः । एवम् । वेद ॥ ४ ॥

भाष्यम्—अथेति । समानविज्ञानमारभते । अस्यहृदयस्यः। यः । उदङ् । ऊर्ध्वमञ्चति । ऊर्ध्वगमनशील उत्तरदिग्गतोवा । सुषिश्छिद्रमस्ति । स समानः । तदेव मन इन्द्रियम् । स पर्जन्योऽपिचकथ्यते । परितः सर्वतः सर्वेन्द्रियेषु जायत इति पर्जन्यः । सर्वेन्द्रियसंयोगीत्यर्थः । अत उक्तम् । "समाने तृप्यतिमनस्तृप्यति मनसितृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत् तृप्यति" । छा० ५ । २२ । २ ॥ एतद् विज्ञानमाह । तदेतन्मनः "कीर्तिः । व्युष्टिः । विशेषकान्तिः" । इतिमत्वा । उपासीत । प्राकृतशास्त्रेण विजानीयात् । फलमाह कीर्त्तिमानित्यादिना ॥ ४ ॥

अनुवादः—अनन्तर । इसका जो उदङ् सुषि है । वह समान है । वह मन और वह पर्जन्य कहलाता है । उस इसको "कीर्ति" और "व्युष्टि" मान विचारे । जो ऐसा जानता है । वह भी कीर्त्तिमान् और व्युष्टिमान् होता है ॥ ४ ॥

पदार्थः-( अथ ) अनन्तर ( अस्य ) इस हृदय का ( यः ) जो ( उदङ् ) ऊर्ध्व-गमनशील ( सुषिः ) छिद्र द्वार है (सः+समानः ) वह समान कहलाता है (तत्+मनः) वह मन इन्द्रिय है । ( सः+पर्जन्यः ) उसे पर्जन्य भी कहते हैं । इसका विज्ञान कहा जाता है । (तद्+एतत्) उस इस मन इन्द्रिय को (कीर्तिः+च) कीर्त्ति और (व्युष्टिः+च) विशेषकान्ति ( इति ) मान ( उपासीत ) प्राकृत शास्त्र के द्वारा जाने। आगे फल कहा जाता है ( यः+एवम्+वेद ) जो ऐसा जानता है । वह ( कीर्तिमान् ) कीर्त्तिमान् और ( व्युष्टिमान् ) विशेष कान्तिमान् ( भवति ) होता है ॥ ४ ॥

भाष्याशयः-( पर्जन्यः ) परि+जन् धातु से यह सिद्ध होता है । परि=सर्वतः । सब इन्द्रियों में जो जन्मे । अर्थात् जिसका सम्बन्ध सब इन्द्रिययों के साथ हो उसे यहां पर्जन्य कहते हैं । जिस हेतु मन सर्वेन्द्रिय संयोगी है । अतः मनको पर्जन्य कहा है । इसी हेतु यह भी कहा गया है कि ( समाने० ) समान की तृप्ति से मन तृप्त होता है । मन की तृप्ति से पर्जन्य तृप्त होता है पर्जन्य की तृप्ति से विद्युत् तृप्त होती है । इत्यादि ॥ ४ ॥

## अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान्भवति य एवं वेद ॥ ५ ॥

अथ । यः । अस्य । ऊर्ध्वः । सुषिः । सः । उदानः । सः । वायुः । सः । आकाशः । तद् । एतद् । ओजः । च । महः । च । इति । उपासीत । ओजस्वी । महस्वान् । भवति । यः । एवम् । वेद ॥ ५ ॥

भाष्यम्—अथेति । अथानन्तरम् । अस्यहृदयस्य । यः । ऊर्ध्वः । ऊर्ध्वस्थ उपरिस्थ इत्यर्थः । सुषिश्छिद्रमस्ति । सः । उदानः । आपादतलादारभ्योर्ध्वमुत्क्रमणादुत्कर्षार्थञ्च कर्म्म कुर्वन्नित्युदानः। स वायुरपि कथ्यते । सततंनाडीभिरूर्ध्वं वाति गच्छतीत्युदानः । स आकाशः । प्रकाशवान् वर्त्तते । तस्योदानस्य वाय्वाकशौ द्वे नाम्नीस्त इत्यर्थः । अतउक्तम् । "उदाने तृप्यति वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यति" । छा० उ० प्रपा० ५ । २३ । २ ॥ उदानोपास्तिविज्ञानमाह । तदेतद् "ओजश्चमहश्चेति" मत्वा प्राकृतविज्ञानेन । उपासीत । विजानीयात् । फलमाह । य एवं वेद । सोऽपि तेजस्वीमहस्वांश्च भवति ॥ ५ ॥

अनुवादः—अनन्तर इसका जो ऊर्ध्व सुषि है वह उदान, वह वायु, वह आकाश कहलाता है । उस इसको "तेज" और 'मह" मान विचारे । जो ऐसा जानता है । वह ओजस्वी और महस्वान् होता है ॥ ५ ॥

पदार्थः—( अथ ) अनन्तर ( अस्य ) इस हृदय का ( यः ) जो ( ऊर्ध्वः ) ऊर्ध्व ( सुषिः ) छिद्र है ( सः ) वह ( उदानः ) उदान ( सः+वायुः ) वह वायु ( सः+आकाशः ) वह आकाश कहलाता है। आगे इसका विज्ञान कहा जाता है (तत्+एतत्) उस इसको (ओजः ) बल और ( महः ) महान् वा तेज मान (उपासीत ) प्राकृत विज्ञान द्वारा विचारे । फल कहते हैं ( यः+एवम्+वेद )जो ऐसा जानता है ( ओजस्वी+महस्वान्+भवति ) ओजस्वी और तेजस्वी होता है ॥ ५ ॥

भाष्याशयः—उदान—पाद तल से ऊर्ध्व को इसका उत्क्रमण होता है अतः इसका नाम उदान है। उद्+अन् धातु। यह उदान वायु और आकाश नाम से परिचित है। अतएव कहा गया है कि ( उदाने० ) उदानकी तृप्ति से वायु तृप्त होता है । वायु की तृप्ति से आकाश तृप्त होता है ॥ ५ ॥

**ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥ ६ ॥**

ते । वै । एते । पञ्च । ब्रह्मपुरुषाः । स्वर्गस्य । लोकस्य । द्वारपाः । सः । यः । एतान् । एवम् । पञ्च । ब्रह्मपुरुषान् । स्वर्गस्य । लोकस्य । द्वारपान् वेद । अस्य । कुले । वीरः । जायते । प्रतिपद्यते । स्वर्गम् । लोकम् । यः । एतान् । एवम् । पञ्च । ब्रह्मपुरुषान् । स्वर्गस्य लोकस्य । द्वारपान् । वेद ॥ ६ ॥

भाष्यम्—ते वा इति । ते वै । प्रस्तुता वै ते पूर्वोक्ताः । एते । चक्षुरादयः । पञ्च पञ्च संख्याकाः । स्वर्गस्य लोकस्य । कल्याणभवनस्य हृदयरूपस्य लोकस्य द्वारपाः । द्वारपालकाः सन्ति । कथं भूताः ते । ब्रह्मपुरुषाः । हृदयस्थस्य ब्रह्मणः पुरुषाः । ब्रह्मप्राप्तिसाधनाः । विज्ञानफलमाह । स यो विद्वान् । एतान् पञ्चब्रह्मपुरुषान् । एवम् एवं गुणसहितान् । स्वर्गस्य लोकस्य । हृदयलोकस्य द्वारपान् । वेद । जानाति । तस्येदं फलम् ।

अस्य विदुषः । कुले । वीरोजायते । स्वर्गलोकम् । पुण्यंलोकम् । प्रतिपद्यते । प्राप्नोति। विज्ञानभक्तयर्थं पुनरभ्यस्यति । य एतानेवमित्यादि ॥ ६ ॥

अनुवादः—निश्चय, वे ये पांचों ब्रह्मपुरुष स्वर्गलोक के द्वारपाल हैं । सो जो कोई इन पञ्चब्रह्मपुरुषों को ऐसे स्वर्गलोक के द्वारपाल जानता है। इसके कुल में वीरपुरुष होता है । और सुखस्थान को प्राप्त होता है । जो इन पञ्च ब्रह्मपुरुषों को ऐसे स्वर्गलोक के द्वारपाल जानता है ॥ ६ ॥

पदार्थः—( वै ) निश्चित है कि ( ते+एते ) वे ये ( पञ्च+ब्रह्मपुरुषाः ) पांचों ब्रह्मपुरुष ( स्वर्गस्य+लोकस्य ) सुखभवन हृदयरूप लोक के ( द्वारपाः ) द्वारपालक हैं ( सः+यः )सो जो कोई विद्वान् ( एतान्+पञ्च+ब्रह्मपुरुषान् ) इन पांचों ब्रह्मपुरुषों को ( एवम् ) पूर्वोक्तगुण सहित ( स्वर्गस्य+लोकस्य+द्वारपान् ) आनन्द भवन हृदयरूप लोक के द्वारपाल ( वेद ) जानता है ( अस्य+कुले ) इस विद्वान् के कुल में (वीरः+जायते) वीर लोग उत्पन्न होता है । (स्वर्गम्+लोकम् ) सुखलोक को (प्रतिपद्यते) प्राप्त होता है । इस विज्ञान में दृढ़ विश्वासार्थ पुनः इसी विषय को कहते हैं (य एतान् पञ्चब्रह्मपुरुषान्) जो इन पञ्च ब्रह्मपुरुषों को (एवम्) ऐसे (स्वर्गस्यलोकस्य) आनन्द भवन हृदयरूपलोक के ( द्वारपान् ) द्वारपाल ( वेद ) जानता है ॥६॥

**अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः(क*)।७।**

अथ । यद् । अतः । परः । दिवः । ज्योतिः । दीप्यते । विश्वतः । पृष्ठेषु । सर्वतः । पृष्ठेषु । अनुत्तमेषु । उत्तमेषु । लोकेषु । इदम् । वाव । तद् । यद् । इदम् । अस्मिन् । अन्तः पुरुषे । ज्योतिः । तस्य । एषा । दृष्टिः ॥ ७ ॥

भाष्यम्—अथेति । पञ्चब्रह्मपुरुषा उक्ताः । ये हृदयस्वर्गस्यपालकाः सन्ति । अथ हृदयस्थमात्मानं दर्शयति । जीवात्मनिश्चयेनैव ब्रह्मप्राप्तिप्रयत्नः सम्भवति । यदितिक्रियाविशेषणम् । अतोऽस्याः । दिवः । हृदयात्मिकायाः दिवः । दिव्यस्थानात् । उपरि । परः । परम् । लिङ्गव्यत्ययः । ज्योतिः । जीवात्मस्वरूपं यज्ज्योतिरस्ति । तदिहविज्ञातव्यम् । दिवः पर इति कथनेन विज्ञायते तज्ज्योतिः कुत्रचिदन्यत्रास्ति । तत्कथं विज्ञानंस्यादित्याह । तत् । पूर्वोक्तं ज्योतिः । इदंवाव । इदमेव । किं तत्? । अस्मिन्नन्तः पुरुषे । शरीराभ्य-

* किन्हीं पुस्तकों में सप्तम, अष्टम प्रवाक को एक ही माना है ।

न्तरे (पुरुष शब्दोऽत्रकेवलं शरीरमाह पुरुषः पूरितियावत् ) यदिदं ज्योतिः । आत्मस्वरूपः प्रकाशोऽस्ति । इदमेवतज्ज्योतिः । नानयोर्भेदः । किमस्मिन्नेवशरीरे जीवात्मरूपं ज्योतिरस्ति? । अत्र ब्रूते विश्वतः पृष्ठेषु । अस्यवाक्यस्यार्थं स्वयमाह । सर्वतः पृष्ठेष्विति । सर्वेषां दृश्यमाननां पृष्ठेषु । उपरितनभागेषु । पुनरपि विस्पष्टयति । अस्माकं दृष्ट्या ये उत्तमाः । लोकाः सन्ति । तेषु । येच । अनुत्तमा अनुत्कृष्टा लोकास्तेष्वपि । इदमेव ज्योतिरस्ति । यद्वा । न विद्यत उत्तमो येभ्यस्तेऽनुत्तमाः । सर्वोत्कृष्टा इत्यर्थः । सर्वत्रेशसृष्टिः । यत्र यत्र सृष्टिः । तत्रतत्रेदमेव जीवात्मज्योतिरस्ति । यज्ज्योतिर्मनुष्यशरीराभ्यन्तरे वर्तते । तद्विना सृष्टयपूर्णत्वाद् ईदृशोज्योतिषः केनोपायेन दर्शनंस्यादित्याह । तस्यैषादृष्टिः । तस्य ज्योतिषः । एषा दृष्टिः । एतद्दर्शनम् । वक्ष्यमाण प्रकारेण तस्य प्रत्यक्षता ॥ ७ ॥

अनुवादः—अनन्तर इस हृदय स्वरूप द्युलोक के पर जो ज्योति प्रकाशित हो रहा है । यह वही है । जो यह ज्योति इस शरीरके अभ्यन्तर है । और जो सबों के ऊपर है । और जो उत्तम अनुत्तम सब लोक में प्रकाशित हो रहा है (वह यही है जो इस मनुष्य शरीरके अभ्यन्तर है ) उसका यह दर्शन है ॥ ७ ॥

पदार्थः—( अथ ) पञ्च ब्रह्मपुरुष कहेगये । जो इस हृदय रूप भवन के रक्षक हैं । अब जो इस हृदयस्थ आत्मा है उस का वर्णन कहते हैं । क्योंकि जीवात्म निश्चय होने से ही उस ब्रह्म की प्राप्ति के लिये प्रयत्न की संभावना है । अतः पञ्चब्रह्म पुरुषों के वर्णन के अनन्तर आत्मविज्ञान का आरम्भ होता है ! (अतः ) इस (दिवः) हृदयरूप दिव्यस्थान से ऊपर (परः) उत्कृष्ट (यत्+ज्योतिः) जो जीवात्म स्वरूप ज्योति (दीप्यते) देदीप्यमान होरहा है । वह ज्योति अवश्य ज्ञातव्य है । शङ्का—इस हृदयरूप दिव्यस्थान के ऊपर कहने से प्रतीत होता है कि यह कहीं अन्यत्र है । अतः = आगे कहते हैं (इदम्+वाव+तत् ) यही वह है । कौन वह है ? ( अस्मिन्+अन्तः पुरुषे ) इस शरीर के अभ्यन्तर में ( यद्+इदम्+ज्योतिः ) जो यह ज्योति । आत्मस्वरूप प्रकाश है । शङ्का—क्या यह केवल इसी शरीर के अनन्तर है अन्यत्र नहीं ? अतः आगे कहते हैं ( विश्वतः पृष्ठेषु = सर्वतः पृष्ठेषु ) सबों के ऊपर भी है । यह दृश्यमान जगत् जितना दीखता है । उस के ऊपर भी जीवात्मा है इसी को पुनः विस्पष्ट करते हैं ( अनुत्तमेषु उत्तमेषु+) हम लोगों की दृष्टि से उत्तम वा अनुत्तम ( लोकेषु ) सब लोकलोकान्तरों में (इदम्+वाव) यही आत्मा है । जो आत्मा इस मनुष्य शरीर के अभ्यन्तर में है । अर्थात् ईश्वर की सृष्टि जहां २ है वहां २ सर्वत्र यही जीवात्मा है

आत्मभेद कहीं नहीं है । और यदि सर्वत्र जो जीवात्म सृष्टि न हो तो ईश्वर की सृष्टि भी पूर्ण नहीं होती । अतः यही आत्मा सर्वत्र विद्यमान है । क्या इस आत्म ज्योति के दर्शन का भी कोई उपाय है ? ( तस्य+एषा+दृष्टिः ) उस ज्योति का यह दर्शन है अर्थात् वक्ष्यमाण रीति से उस की प्रत्यक्षता होती है ॥ ७ ॥

**यत्रैतदस्मिञ्छरीरे सꣳस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिर्यत्रैतत्कर्णावपि गृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टञ्च श्रुतञ्चेत्युपासीत । चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ८ ॥**

यत्र । एतद् । अस्मिन् । शरीरे । संस्पर्शेन । उष्णिमानम् । विजानाति । तस्य । एषा । श्रुतिः । यत्र । एतत् । कर्णौ । अपिगृह्य । निनदम् । इव । नदथुः । इव । अग्नेः । इव । ज्वलतः । उपश्रृणोति । तद् । एतद् । दृष्टम् । च । श्रुतम् । च । इति । उपासीत । चक्षुष्यः । श्रुतः । भवति । यः । एवम् । वेद । यः । एवम् । वेद ॥ ८ ॥

भाष्यम्—यत्रेति । तस्यैषा दृष्टिरिति यदुक्तं तदिह दर्शयति । एतदिति क्रियाविशेषणम् । यत्र यस्मिन् काले। अस्मिन् शरीरे । संस्पर्शेन। हस्तेनगृहीत्वास्पर्शकरणेन। मनुष्यः । उष्णिमानम् । उष्णत्वं यद्विजानाति । तदेतदुष्णत्व विज्ञानं जीवात्मनः सत्तायामग्नेर्धूम इव । प्रत्यक्षलिङ्गम् । नहि सात्मानं शरीरं कदाप्युष्णिमा व्यभिचरति । उष्णएव जीविष्यन् । शीतोमरिष्यन्निति विज्ञायते । अत उक्तम् "अथ यदास्य वाङ्मनसि सम्पद्यते । मनः प्राणे । प्राणस्तेजसि । तेजः परस्यां देवतायामथ न जानाति" छा० उ० ६ । १५ । २ ॥ एतेन शरीरस्य तेजः परस्यां देवतायां विलीयत इति विज्ञायते । इति दर्शनमुक्तम् । अथास्य श्रवणमुच्यते । तस्यैषा श्रुतिरित्यादिना । तस्य जीवात्मज्योतिषः । एषाश्रुतिः । एतच्छ्रवणम् । न केवलमस्य दर्शनमेव श्रवणमपि भवति। तद्यथा । एतदिति क्रियाविशेषणम् । यत्र यस्मिन्काले कर्णौ अपिगृह्य । अपिधाय । अङ्गुलिभ्यां सम्यग् ढौकयित्वा । तस्मिन्काले । निनदमिव रथस्यघोषो यथा भवति तमिवघोषम् । उपश्रृणोति । तथा नदथुरिव । वृषभादीनां गर्जनं यथा भवति। तमिव । उपश्रृणोति । तथाच । ज्वलतोऽग्नेः शब्दमिव । उपश्रृणोतिचेतियत् । तदेतत् । तस्य ज्योतिषः। साक्षादिव श्रवणम् । विज्ञानमाह । तदेतज्ज्योतिः । [illegible]

उपासीत । विजानीयात् । इदं ज्योतिः प्रत्यक्षं दृष्टञ्चादनुमानेन ज्ञातञ्च । प्रत्यक्षं श्रुतम् । चादनुमानेन विज्ञातञ्चेतिमत्वा विश्वस्यच विविधोपपत्तिभिरन्वेषणीयम् । फलमाह । य एवं वेद । स चक्षुष्यो दर्शनीयः । श्रुतः । लोकेषु विश्रुतो भवति । द्विरभ्यासस्तूपास्तिसमाप्त्यर्थः ॥ ८ ॥

इति त्रयोदशखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ १३ ॥

अनुवादः—जहां इस शरीर में स्पर्श से जो उष्णत्व जानता है ( वह इसका दर्शन है ) और इसका यह श्रवण है । जहां दोनों कानों को अङ्गुलियों से ढांक कर ( रथके ) घोष के समान ( वृषभादियों के ) नाद के समान और जलते हुए अग्नि के शब्द के समान जो शब्द सुनाता है ( वह इसका दर्शन है ) उस इस को "दृष्ट" और "श्रुत" मान सम्यक् प्रकार जाने । वह दर्शनीय और विश्रुत होता है । जो ऐसा जानता है जो ऐसा जानता है ॥ ८ ॥

पदार्थः—उस का यह दर्शन है ऐसा पूर्व में जो कहा गया है उसी को अब दिखलाते हैं ( यत्र ) जिस काल में ( अस्मिन्+शरीरे ) इस शरीर के बीच (संस्पर्शेन) हाथ लगाने से स्पर्श ज्ञान के द्वारा ( उष्णिमानम् ) उष्णत्व ( गरमी ) (विजानाति ) जानता है । वह (एतत् ) यह जीवात्मरूप ज्योति का दर्शन है । आगे इस का श्रवण कहते हैं ( तस्य+एषा+श्रुतिः ) उस का केवल दर्शन ही नहीं होता किन्तु उस का इस प्रकार यह श्रवण भी होता है जैसे ( यत्र ) जिसकाल में ( कर्णौ ) दोनों कानों को अङ्गुलि आदि से ( अपिगृह्य ) अच्छे प्रकार ढांक कर ( निनदमिव ) रथादि का जैसा शब्द होता है वैसे शब्द को ( उपशृणोति ) सुनता है और ( नदथुः+इव ) वृषभादियों का जैसा शब्द होता है तद्वत् जो शब्द सुनता है और (ज्वलतः+अग्ने+इव) जलते हुए अग्नि के शब्द के समान जो शब्द सुनता है ( एतत् ) यही इस ज्योति का श्रवण है । आगे विज्ञान कहते हैं ( तद्+एतत् ) उस इस ज्योति को (दृष्टञ्च) प्रत्यक्ष देखागया और अनुमान के द्वारा ज्ञात भी हुआ और ( श्रुतञ्च ) प्रत्यक्षतया सुनागया और अन्य प्रमाण से विज्ञात भी हुआ (इति) ऐसा विविध उपपत्तियों के द्वारा (उपासीत) विचारे । फल कहते हैं (यः+एवम्+वेद) जो ऐसा जानता है (चक्षुष्यः) मनुष्यों में दर्शनीय होता है और ( श्रुतः ) सर्वत्र विश्रुत प्रख्यात होता है । यहां ( य एवं वेद ) जो दो वार कहा गया है सो उपासना समाप्ति सूचक है ॥ ८ ॥

भाष्याशयः—उष्णिमा= उष्णत्व शरीर की गरमी । जबतक मनुष्य जीता रहता है तब तक उष्णत्व सर्वदा बना रहता है । उष्णत्व ही जीवित का और शीतत्व ही [illegible] है । जैसे धूम अग्नि के विना नहीं होता । अतएव इसी उपनिषद् में

कहागया है (अथ यदास्य०) जब इस की वाणी मन में प्राप्त होती है । मन प्राण में, प्राण तेज में और तेज परदेवता में तब वह नहीं जानता है । इस से विदित होता है कि शरीर का तेज परदेवता में लीन होता है ॥ ८ ॥

इति त्रयोदश खण्डस्य भाषा भाष्यं समाप्तम् ॥ १३ ॥

* अथ चतुर्दशः खण्डः *

## सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ॥ १ ॥ (क)

सर्वम् । खलु । इदम् । ब्रह्म । तज्जलान् । इति । शान्तः । उपासीत ॥ १ ॥

भाष्यम्—सर्वमिति । आत्मदर्शनश्रवणानन्तरं ब्रह्मोपासन विधानं सर्वथोचितमेव । तदिदानेन खण्डेन ब्रह्मण उपासनं लक्षणञ्चारभते सर्वमित्यादिना। खल्विति वाक्यालङ्कारार्थो निपातः । तत्सृष्टवस्तुजातद्वारया । सर्वत्र भासमानम् "इदं ब्रह्म" प्रत्यक्षं दृश्यमानमिदं ब्रह्म । सर्वम् । सर्वानन्दघनम् । सर्वशक्तिसमन्वितम् । सर्वकर्मा : सर्वकामम् । सर्वगन्धम् । सर्वरसम् । इत्येवंविधैर्वक्ष्यमाणैरन्यैर्विशेषणैश्च सहस्रैर्युक्तमित्यर्थः । यथा गुणवन्तं रक्षणपोषणादिषु यथाशक्ति तत्परं ग्रामण्यमुद्दिश्य "अस्मिन् ग्रामे अयमेव सर्वः" इति सर्वेषां जनानां वचांस्युच्चरन्ति तथैव कर्त्तुमकर्त्तुमन्यथाकर्तुं सर्वथा समर्थमीश्वरमवलोक्य "इदं ब्रह्मैव सर्व" मितीदृशानि वाक्यानि तस्मिन् प्रक्रमन्ते। इति सामान्य लक्षणमभिधायोपासनमाह । तद्ब्रह्म "तज्जलान्" इतिशान्त उपासीत । स्वयमुपासकः शान्तोभूत्वा तद्ब्रह्म तज्जलान् इत्युपासीत । तस्यैतस्य व्याख्यानमिदम् । तस्माद्ब्रह्मणः सकाशाद् जायते विश्वमिदमिति । तज्जम् । तस्मिन्नेवावसाने लीयते विश्वमिदमिति तल्लम् । तस्मिन्नेव स्थितिकाले अनिति । प्रविश्य चेष्टतइति। तदन् । "तस्माज्जायते" तस्मिन् लीयते अनिति चेति । तज्जलान् । तत्पूर्वकेभ्यस्त्रिभ्यो धातुभ्यस्तज्जलानिति पदसिद्धिः । इदमेव ब्रह्मणो लक्षणं प्रधानतया सर्वत्रगीयते । यथाः—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति । यत्प्रयन्त्यभि संविशन्ति । तद्विजिज्ञासस्व तद्ब्रह्म ॥ ऐ०३१॥ सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति छा०१।९।१॥ सर्वाणि ह वा इमानि भूतानि प्राणमेवाभि संविशन्ति प्राणमुज्जिहते" । छा०१ ११.५॥ अतएव महर्षिणा कृष्णद्वैपायनेनापि "जन्माद्यस्ययत" इत्येवमेव ब्रह्मलक्षण परकं सूत्रं सूत्रितम् ॥ १ ॥

तक ६ वार आये हैं। इस का भी भाव यही है कि उत्तम होकर उत्तम को पाता है। "अभयं हि वै ब्रह्मभवति य एवं वेद" । बृ० ४ । ४ । २५ ॥ (य एवं वेद) जो ऐसा जानता है वह ( अभयम्+ब्रह्म+भवति ) निर्भय ब्रह्मविद् होता है। यद्वा। अभय ब्रह्म को पाता है ( भू प्राप्तौ=भू=पाना ) "अयमात्मा ब्रह्म" यह आत्मा जीवात्मा ( ब्रह्म ) ब्रह्मविद् है "अहं+ब्रह्मास्मि" बृ० १ । ४ । १० ॥ यह वाक्य एक ही स्थल में दो वार आगया है। एक तो परमात्मा के विषय में है। सो तो विस्पष्ट ही है। दूसरा उपासक के विषय में आया है। उसका अर्थ यह है ( अहम् ) मैं ( ब्रह्म ) ब्रह्म में ( अस्मि ) हूं अथवा मैं ब्रह्मविद् हूं। अथवा मैं सब कुछ करने में समर्थ हूं क्योंकि उपनिषद् की एक महती शिक्षा यह है कि अपने को किसी कार्य्य के अयोग्य न समझे। छान्दोग्य में कहा गया है यथा—"सर्वमस्मीति+उपासीत+तद्+व्रतम्+तद्+व्रतम्" छा० २ । १० । ४ ॥ मैं सब कुछ कर सकता हूं ऐसी ही भावना करे। वही व्रत है वही व्रत है। इस हेतु महान् महतो महान्, अतिशय महान् ब्रह्म की प्राप्ति के लिये उपासक यदि प्रथम ही अपने को तुच्छ समझेगा तो वह कुछ नहीं कर सकता। इस हेतु अपने को महान् समझे। उदारचित्त होवे। "महामनाः स्यात्+तद्+व्रतम्" छा० २ । ११ । २ ॥ महामनस्वी होवे वह व्रत है। इति दिग् ॥

## ※ अथैकोनविंशः खण्डः ※

**आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवे दमग्र आसीत्। तत्सदासीत्तत्समभवत्। तदाण्डं निरवर्त्तत। तत्संवत्सरस्य मात्रामशयत। तन्निरभिद्यत। ते आण्डकपाले रजतञ्च सुवर्णञ्चाभवताम् ॥ १ ॥**

आदित्यः । ब्रह्म । इति । आदेशः । तस्य । उपव्याख्यानम् । असद् । एव । इदम् । अग्रे । आसीत् । तद् । सद् । आसीत् । तद् । समभवत् । तद् । आण्डम् । निरवर्त्तत । तद् । संवत्सरस्य । मात्राम् । अशयत । तद् । निरभिद्यत । ते । आण्डकपाले । रजतम् । च । सुवर्णम् । च । अभवताम् ॥ १ ॥

( १ ) सुपां सुलुक् पूर्व सवर्णाच्छेया डाड्या याजालः । अ० ७ । १ । ३९ ॥ इस सूत्र से सप्तमी का लुक् होजाता है।

भाष्यम्—आदित्य इति । स्थपतिविनिर्मितपदार्थप्रशंसनेन स्थपतेरेव सा प्रशंसा भवतीति न्यायेन सर्वेभ्यः पदार्थेभ्य आकृत्या गुणैश्च ज्यायसोमहीयसश्चादित्यस्य गुणनिर्देशेन तस्यैव सृष्टिकृतो ब्रह्मणः कौशलं महत्त्वञ्च स्तूयते । सर्वेषां स एव स्रष्टास्ति । अत आदित्यः प्रस्तूयते । आदित्योभास्करः । ब्रह्म । बृहन्नस्ति । इत्यादेश उपदेशो भवति । पुरातनानामृषीणामीदृशं कथनमुपदेशो वा वर्त्तते । सर्वेभ्यः सृष्टेभ्यो बृहत्तरत्वादादित्योऽपि ब्रह्म निगद्यते । तस्यादित्यस्योपव्याख्यानं भवति । अग्रे । आदित्यसृष्टेः पुरा । इदं सम्पूर्णं जगत् । असदेव अव्यक्तमेव । तमसावृतमेवासीत् । सूर्य्यं विना व्यवहाराभावादसदिदमासीदित्युक्तिः । न याथार्थ्येन । सत एव सज्जायते इति सर्वतन्त्र सिद्धान्तसिद्धत्वादित्यर्थः । तत् । ततः । सद् आसीत् । आदित्योत्पत्यनन्तरं जगदिदम् । सत् । आलोकसम्पन्नं व्यवहार दशा प्रवर्त्तकमभूत । यद्वा । तदेव विस्पष्टी करोति तत्सदासीदित्यनेन । असदेवेदमग्र आसीदित्यस्यैवानुवादस्तत्सदासीदिति । यद्यपि पुरा तदिदं जगत् सद् । अल्पतरनामरूपव्याकरणेनअङ्कुरीभूतं बीजमिवासीदेवेदं सम्पूर्णं जगत् । परन्तु सूर्यलोकं विना अव्यक्तमव्यवहार्यमलक्षणमासीत् । अत उक्तम् । असदेवेदमग्र आसीदिति । तदिदं जगत् समभवत् । ब्रह्मावेक्षणेन सम्यक् सर्वतउपजातप्रवृत्ति सत्कार्य्याभिमुखमभवत् । तत्ततः । आण्डम् । अण्डम् निरवर्त्तत अभवत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । इतिमनुः । तदण्डं सहस्रांशु समप्रभं ज्योतिर्मय गोलाकारमभवदित्यर्थः । आण्डमिति दैर्घ्यं छान्दसम् । तत तदण्डं संवत्सरस्य वर्षस्य प्रसिद्धस्य कालस्य । मात्रां परिमाणं बहुकालमित्यर्थः । अत्यन्तसंयोगे द्वितीया । अशयत । एकस्यामेवावस्थायांशयितमिवस्थितम् । तत्तत् संवत्सर परिमाणात् कालादूर्ध्वम् । तदण्डं निरभिद्यत खण्डशोऽभवत् । तस्मादेकस्मादण्डात् खण्डानां बहून्यपरिमितानि सहस्राणि अभवन् । तेभ्यः खण्डेभ्यः । ते । आण्डकपाले द्वे अण्डकपाले । रजतञ्च । रजतवच्छुभ्रम् देदीप्यमानमेकं कपालम् । सुवर्णञ्च । सुवर्णवज्जाज्वल्यमानम् । द्वितीयं खण्डम् । अभवताम् ॥ १ ॥

अनुवाद–आदित्य ब्रह्म ( बड़ा ) है यह उपदेश है उसका उपव्याख्यान ( किया जाता है ) आगे यह असत् ही था । तब सत् हुआ तब अण्ड हुआ । वह अण्ड बहुत दिनों तक उसी अवस्था में स्थित रहा । तब वह खण्ड २ होगया । उन में से दो अण्डकपाल एक रजत और दूसरा सुवर्ण हुए ॥ १ ॥

( १ ) ब्रह्मन् शब्द के ऊपर १८ वें खण्ड के अन्त में समीक्षा देखो ।

पदार्थः-( आदित्यः ) सूर्य ( ब्रह्म ) बड़ा है ( इति ) यह ( आदेशः ) उपदेश है। प्राचीन लोगों का यह कथन वा उपदेश है ( तस्य ) उसका (उपव्याख्यानम् ) तात्त्विक व्याख्यान किया जाता है (अग्रे) सूर्य की उत्पत्ति के पूर्व (इदम्) यह दृश्यमान जगत् ( असत्+एव ) अव्यक्त अव्याकृतनामरूप और तमसावृत ही था ( तत् ) तब ( सद्+आसीत् ) यह जगत् व्यक्त हुआ ( तत् ) तब ( समभवत् ) सब प्रकार से यह जगत् होना आरम्भ हुआ ( तत् ) तब ( आण्डम् ) एक आण्ड गोलाकार सदृश ज्योतिःसमूह ( निरवर्त्तत ) उत्पन्न हुआ ( तत् ) वह अण्ड ( संवत्सरस्य ) वर्षों की ( मात्राम् ) मात्रा परिमाण अर्थात् बहुत दिनों तक ( अशयत ) उसी अवस्था में शयन करता रहा। अर्थात् उसी अवस्था में वह अण्ड बहुत दिनों तक रहा तब ( तत् ) वह अण्ड ( निरभिद्यत ) टुकडा २ होगया। उन में से (ते+अण्डकपाले ) वे दो अण्ड कपाल ( रजतञ्च ) चांदी रजतवत् शुभ्र देदीप्यमान एक अण्ड और ( सुवर्णञ्च ) सुवर्ण सुवर्णवत् जाज्वल्यमान दूसरा ( अभवताम् ) हुए ॥ १ ॥

( १ ) "असद्+एव+इदम्+अग्र+आसीत्" इसी का अनुवाद "तत्+सद्+आसीत्" यह है। अर्थात् यह जगत् तो ( सत् ) सदा वर्त्तमान ही था परन्तु सूर्य्य की उत्पत्ति न होने से अन्धकारावृत्त होने से अव्यवहार्य्य अलक्षण था। इस हेतु असत् कहा गया है "सदेव सोम्येदमग्र आसीत्" छा० ६। २। १ ॥ हे प्रिय पुत्र पूर्व भी यह जगत् अव्यक्तावस्था में वर्त्तमान था। इसी अभिप्राय से तैत्तिरीय में कहा गया है। यथा-"असद्वा इदमग्र आसीत् ततो वै सदजायत"। २। ७। १ ॥ प्रथम यह विश्व अव्यक्त पश्चात् व्यक्त हुआ।

( २ ) ( तदण्ड० ) मनुस्मृति १। ९ ॥ वह अण्ड सहस्र सूर्य्यों की ज्योतिः समान उत्पन्न हुआ अर्थात् यह सम्पूर्ण विश्व ही यहां अभिप्रेत है इसी हेतु ब्रह्माण्ड इसका नाम है पक्षीके अण्ड के समान यह जगत् गोलाकार है ( आण्ड ) अण्ड और आण्ड दोनों प्रकार के शब्द आते हैं " आण्डजं जीवजमुद्भिज्जम्" छा० ६। ३। १ ॥ अण्डज जीवज और उद्भिज्ज ये तीन प्रकार के जीव होते हैं। इस सम्पूर्ण उपनिषद् में प्रायः तीन वार " आण्ड " शब्द आया है दोवार यहां और षष्ठ में एक वार। ऐतरेयी मैं "मुखं निरभिद्यत यथाऽण्डम्" १। ४ ॥ पक्षी के अण्डसमान मुख प्रस्फुटित हुआ। पुनः।"अण्डजानि च जारुजानिच स्वेदजानिच उद्भिज्जानिच"। ५। ३ अण्डज, जारुज, स्वेदज और उद्भिज्ज ये चार प्रकार के जीव होते हैं।

भाष्यम्—आदित्य इति । स्थपतिविनिर्मितपदार्थप्रशंसनेन स्थपतेरेव सा प्रशंसा भवतीति न्यायेन सर्वेभ्यः पदार्थेभ्य आकृत्या गुणैश्च ज्यायसोमहीयसश्चादित्यस्य गुणनिर्देशेन तस्यैव सृष्टिकृतो ब्रह्मणः कौशलं महत्त्वञ्च स्तूयते । सर्वेषां स एव स्रष्टास्ति । अत आदित्यः प्रस्तूयते । आदित्योभास्करः । ब्रह्म । बृहन्नस्ति । इत्यादेश उपदेशो भवति । पुरातनानामृषीणामीदृशं कथनमुपदेशो वा वर्त्तते । सर्वेभ्यः सृष्टेभ्यो बृहत्तरत्वादादित्योऽपि ब्रह्म निगद्यते । तस्यादित्यस्योपव्याख्यानं भवति । अग्रे । आदित्यसृष्टेः पुरा । इदं सम्पूर्णं जगत् । असदेव अव्यक्तमेव । तमसावृतमेवासीत् । सूर्य्यं विना व्यवहाराभावादसदिदमासीदित्युक्तिः । न याथार्थ्येन । सत एव सज्जायते इति सर्वतन्त्र सिन्द्धान्तसिद्धत्वादित्यर्थः । तत् । ततः । सद् आसीत् । आदित्योत्पत्यनन्तरं जगदिदम् । सत् । आलोकसम्पन्नं व्यवहार दशा प्रवर्त्तकमभूत । यद्वा । तदेव विस्पष्टी करोति तत्सदासीदित्यनेन । असदेवेदमग्र आसीदित्यस्यैवानुवादस्तत्सदासीदिति । यद्यपि पुरा तदिदं जगत् सद् । अल्पतरनामरूपव्याकरणेनअङ्कुरीभूतं वीजमिवासीदेवेदं सम्पूर्णं जगत् । परन्तु सूर्यलोकं विना अव्यक्तमव्यवहार्यमलक्षणमासीत् । अत उक्तम् । असदेवेदमग्र आसीदिति । तदिदं जगत् समभवत् । ब्रह्मावेक्षणेन सम्यक् सर्वतउपजातप्रवृत्ति सत्कार्य्याभिमुखमभवत् । तत्ततः । आण्डम् । अण्डम् निरवर्त्तत अभवत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । इतिमनुः । तदण्डं सहस्रांशु समप्रभं ज्योतिर्मय गोलाकारमभवादित्यर्थः । आण्डमिति दैर्घ्यं छान्दसम् । तत तदण्डं संवत्सरस्य वर्षस्य प्रसिद्धस्य कालस्य । मात्रां परिमाणं बहुकालमित्यर्थः । अत्यन्तसंयोगे द्वितीया । अशयत । एकस्यामेवावस्थायांशयितमिवस्थितम् । तत्तत् संवत्सर परिमाणात् कालादूर्ध्वम् । तदण्डं निरभिद्यत खण्डशोऽभवत् । तस्मादेकस्मादण्डात् खण्डानां बहून्यपरिमितानि सहस्राणि अभवन् । तेभ्यः खण्डेभ्यः । ते । आण्डकपाले द्वे अण्डकपाले । रजतञ्च । रजतवच्छुभ्रम् देदीप्यमानमेकं कपालम् । सुवर्णञ्च । सुवर्णवज्जाज्वल्यमानम् । द्वितीयं खण्डम् । अभवताम् ॥ १ ॥

अनुवाद—आदित्य ब्रह्म[1] ( बड़ा ) है यह उपदेश है उसका उपव्याख्यान ( किया जाता है ) आगे यह असत् ही था । तब सत् हुआ तब अण्ड हुआ । वह अण्ड बहुत दिनों तक उसी अवस्था में स्थित रहा । तब वह खण्ड २ होगया । उन में से दो अडण्कपाल एक रजत और दूसरा सुवर्ण हुए ॥ १ ॥

( १ ) ब्रह्मन् शब्द के ऊपर १८ वें खण्ड के अन्त में समीक्षा देखो ।

पदार्थः-( आदित्यः ) सूर्य ( ब्रह्म ) बड़ा है ( इति ) यह ( आदेशः ) उपदेश है । प्राचीन लोगों का यह कथन वा उपदेश है ( तस्य ) उसका (उपव्याख्यानम् ) तात्त्विक व्याख्यान किया जाता है (अग्रे) सूर्य की उत्पत्ति के पूर्व (इदम्) यह दृश्यमान जगत् ( असत्+एव ) अव्यक्त अव्याकृतनामरूप और तमसावृत ही था ( तत् ) तब ( सद्+ आसीत् ) यह जगत् व्यक्त हुआ ( तत् ) तब ( समभवत् ) सब प्रकार से यह जगत् होना आरम्भ हुआ ( तत् ) तब ( आण्डम् ) एक आण्ड गोलाकार सदृश ज्योतिःसमूह ( निरवर्त्तत ) उत्पन्न हुआ ( तत् ) वह अण्ड ( संवत्सरस्य ) वर्षों की ( मात्राम् ) मात्रा परिमाण अर्थात् बहुत दिनों तक ( अशयत ) उसी अवस्था में शयन करता रहा । अर्थात् उसी अवस्था में वह अण्ड बहुत दिनों तक रहा तब ( तत् ) वह अण्ड ( निरभिद्यत ) टुकडा २ होगया । उन में से (ते+अण्डकपाले ) वे दो अण्ड कपाल ( रजतञ्च ) चांदी रजतवत् शुभ्र देदीप्यमान एक अण्ड और ( सुवर्णञ्च ) सुवर्ण सुवर्णवत् जाज्वल्यमान दूसरा ( अभवताम् ) हुए ॥ १ ॥

( १ ) "असद्+एव+इदम्+अग्र+आसीत्" इसी का अनुवाद "तत्+सद्+आसीत्" यह है । अर्थात् यह जगत् तो ( सत् ) सदा वर्त्तमान ही था परन्तु सूर्य्य की उत्पत्ति न होने से अन्धकारावृत्त होने से अव्यवहार्य्य अलक्षण था । इस हेतु असत् कहा गया है "सदेव सोम्येदमग्र आसीत्" छा० ६ । २ । १ ॥ हे प्रिय पुत्र पूर्व भी यह जगत् अव्यक्तावस्था में वर्त्तमान था । इसी अभिप्राय से तैत्तिरीय में कहा गया है । यथा-"असद्वा इदमग्र आसीत् ततो वै सदजायत" । २ । ७ । १ ॥ प्रथम यह विश्व अव्यक्त पश्चात् व्यक्त हुआ ।

( २ ) ( तदण्ड० ) मनुस्मृति १ । ९ ॥ वह अण्ड सहस्र सूर्य्यों की ज्योतिः समान उत्पन्न हुआ अर्थात् यह सम्पूर्ण विश्व ही यहां अभिप्रेत है इसी हेतु ब्रह्माण्ड इसका नाम है पक्षीके अण्ड के समान यह जगत् गोलाकार है ( आण्ड ) अण्ड और आण्ड दोनों प्रकार के शब्द आते हैं " आण्डजं जीवजमुद्भिज्जम्" छा० ६ । ३ । १ ॥ अण्डज जीवज और उद्भिज्ज ये तीन प्रकार के जीव होते हैं । इस सम्पूर्ण उपनिषद् में प्रायः तीन वार " आण्ड " शब्द आया है दोवार यहां और षष्ठ में एक वार । ऐतरेयी मैं "मुखं निरभिद्यत यथाऽण्डम्" १ । ४ ॥ पक्षी के अण्डसमान मुख प्रस्फुटित हुआ । पुनः । "अण्डजानि च जारुजानिच स्वेदजानिच उद्भिज्जानिच" । ५ । ३ अण्डज, जारुज, स्वेदज और उद्भिज्ज ये चार प्रकार के जीव होते हैं ।

**तद्यद्रजतꣳ से यं पृथिवी। यत्सुवर्णꣳ सा द्यौः। यज्जरायु ते पर्व्वता। यदुल्वꣳ समेघो नीहारः। या धमनयस्ता नद्यः। यद्वास्तेय मुदकꣳ स समुद्रः ॥२॥**

तद् । यद् । रजतम् । सा । इयम् । पृथिवी । यत् । सुवर्णम् । सा । द्यौः । यद् । जरायु । ते । पर्व्वताः । यद् । उल्वम् । समेघः । नीहारः । याः । धमनयः । ताः । नद्यः । यद् । वास्तेयम् । उदकम् । सः । समुद्रः ॥२॥

भाष्यम्—तदिति । अलङ्कारेण वर्ण्यते । तयोर्द्वयोः कपालयोर्मध्ये । तद्यद्रजतम् । रजतधातुवद्दीप्यमानम् । कपालमासीत् । सा इयं पृथिवी । पृथिव्युपलक्षितमधोऽण्ड-कपालमित्यर्थः । यत् सुवर्णम् । सुवर्णवज्जाज्वल्यमानं सहस्र सूर्य समप्रभम् । सा द्यौः । द्युलोकोपलक्षितमूर्द्ध कपालमभूदित्यर्थः । यज्जरायु । जरायुसमम् । अण्डस्य स्थूलवेष्टन-मासीत् । ते । पर्व्वताः । पर्व्ववन्तो बभूवुः । यदुल्वम् । यत्सूक्ष्मं गर्भपरिवेष्टनम् । सः । समेघो नीहारः । मेघैः सह समेघः । नीहारः । अवश्यायो बभूव । यत् । वास्तेयम् । वस्तो वस्तिरूपे । गर्भाशयस्थे जाले भवमितिवास्तेयम् । उदकम् । आसीत् । समुद्रोऽभवत् * ॥ २ ॥

अनुवादः—उन दोनों कपालों में से जो रजत कपाल था वह यह पृथिवी है । जो सुवर्णकपाल था वह द्युलोक हुआ जो जरायु था वे पर्व्वत, जो सूक्ष्म गर्भवेष्टन था वह वह मेघ सहित नीहार, जो धमनिएं थीं वे नदिएं, जो वस्ति सम्बन्धी जल था वह समुद्र ॥ २ ॥

पदार्थः—( तत् ) उन दोनों कपालों में से ( यद्+रजतम् ) रजत धातुवत् शुभ्र और देदीप्यमान सहस्र सूर्यसम कपाल था ( सा+इयम्+पृथिवी ) वह यह पृथिवी है अर्थात् पृथिवी से उपलक्षित अधोभागस्थ अण्डकपाल है और ( यत्+सुवर्णम् ) जो सुवर्ण कपाल था ( सा+द्यौः ) द्युलोकोपलक्षित ऊर्ध्वभागस्थ कपाल है ( यद्+जरायु ) जो जरायुसम अण्ड का स्थूल वेष्टन था (ते+पर्व्वताः) वे पर्व्व वाले पदार्थ हुए ( यद् उल्वम् ) जो सूक्ष्म गर्भवेष्टन था ( नीहारः+समेघः ) वह जल को अतिशय हरण करने वाला मेघ हुआ ( यः+धमनयः ) जो धमनिएं थीं ( ताः+नद्यः ) वे नदिएं हुईं (यद्+वास्तेयम्+उदकम्) जो वस्ति=गर्भाशयस्थ जाल सम्बन्धी जल था (सः+समुद्रः) वह समुद्र हुआ ॥ २ ॥

---

* ताभ्यां स शकलाभ्याञ्च दिवं भूमिञ्चनिर्ममे। मध्ये व्योमदिशश्चाष्टा वपांस्थानञ्चशाश्वतम् । मनौ १ । १३ । इत्यप्यनु सन्धेयम् ॥

**अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्त्सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे (चैव) च कामाः ॥ ३ ॥**

अथ । यद् । तत् । अजायत । सः । असौ । आदित्यः । तम् । जायमानम् । घोषाः । उलूलवः । अनूदतिष्ठन् । सर्वाणि । च । भूतानि । सर्वे । च । कामाः । तस्मात् । तस्य । उदयम् । प्रति । प्रत्यायनम् । प्रति । घोषाः । उलूलवः । अनूत्तिष्ठन्ति । सर्वाणि । च । भूतानि । सर्वे । च । कामाः ॥ ३ ॥

भाष्यम्—अथेति । बहुकालानन्तरम् । तस्यकपालद्वयस्यान्तराले । यत्तत् । प्रसिद्धं महदद्भुतं गर्भरूपम् । गोलाकारम् । अजायत् । उत्पन्नमभूत् । सोऽसावादित्यः । तमादित्यम् । जायमानम् । अवलोक्य । उलूलवः । उरुरवः । विस्तीर्णरवाः । घोषाः । शब्दाः । अनूदतिष्ठन् । उदतिष्ठन्नुत्थितवन्तः । सूर्योत्पत्त्यनन्तरमेव जीवानां संभवः । उत्पन्नेषु जीवेषु । तेषां शब्दोद्भवः । अमुमेवार्थमग्रे सूचयति । तस्मादेवादित्यात् । आदित्यस्य निमित्तादेव सर्वाणि च भूतानि । तेषां सर्वे च कामाः संजाताः । यस्मादेवं तस्माद्धेतोः । इदानीमपि । तस्यसूर्यस्योदयं प्रति प्रत्यायनञ्चप्रति । प्रत्यागमनञ्चप्रति । सर्वदा उलूलवः । उरुरवः । विस्तीर्णरवा घोषाः शब्दाः । अनूत्तिष्ठन्ति । एवं सर्वाणि च भूतानि । सर्वे च कामाः । तन्निमित्तादुत्तिष्ठन्तीत्यर्थः ॥ ३ ॥

अनुवाद—अनन्तर उन दोनों के मध्य में जो वह ( परम प्रसिद्ध तेजोराशि ) उत्पन्न हुआ सो यह आदित्य है उस आदित्य को जायमान देख जगत् में विस्तीर्णनादमय घोष उत्पन्न हुआ । क्योंकि उसी ( आदित्य ) से सर्व प्राणी और सब कामनाएं उत्पन्न होते हैं इसी हेतु प्रतिदिन उस के उदय के प्रति और प्रत्यागमन के प्रति विस्तीर्णनादमय घोष होते हैं और सब प्राणी और सब कामनाएं उत्पन्न होते रहते हैं ॥ ३ ॥

पदार्थ-( अथ ) इसप्रकार जब दोनों अण्डकपालों से यह जगत् कार्योन्मुख होने लगा तब इन दोनों के मध्य में ( यत्+तत् ) जो वह एकतेजोराशि ( अजायत ) उत्पन्न हुआ ( सः+असौ+आदित्यः ) वह यह आदित्य है ( तम्+जायमानम् ) उस सूर्य को उत्पन्न हुए देख ( उलूलवः ) बहुविस्तीर्णनादमय ( घोषाः ) शब्द ( अनूद-

तिष्ठन् ) होने लगे ( तस्मात् ) उसी आदित्य के निमित्त से ( सर्वाणि+च+भूतानि ) सब प्राणी और ( सर्वे+च+कामाः ) सब कामनाएं होते हैं । जिस हेतु ऐसा होता है अतः ( तस्य+उदयम् ) उस सूर्य के ( उदयम्+प्रति ) उदय के प्रति अर्थात् सूर्य के उदय के समय और (प्रत्यायनम्+प्रति) सूर्य के प्रत्यागमन के प्रति अर्थात् सूर्यास्त के समय ( उलूलवः ) बहु विस्तीर्ण नादमय ( घोषाः ) शब्द ( अनूत्तिष्ठन्ति ) हुआ करते हैं और ( सर्वाणि+च+भूतानि ) सब प्राणी और ( सर्वे+च+कामाः ) सब काम ( मनोरथ ) उत्पन्न हुआ कहते हैं ॥ ३ ॥

**स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्यासो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन् निम्नेडेरन् ॥ ४ ॥**

सः । यः । एतम् । एवम् । विद्वान् । आदित्यम् । ब्रह्म । इति । उपास्ते । अभ्यासः । ह । यत् । एनम् । साधवः । घोषाः । आ । च । गच्छेयुः । उप । च । निम्रेडेरन् । निम्रेडेरन् ॥ ४ ॥

भाष्यम्—स य इति । स यो विद्वान् पुरुषः । एतमादित्यम् । एवम् । पूर्वोक्तगुणविशिष्टम् । विद्वान् जानन् सन् । आदित्यं ब्रह्मेति सर्वेषु सृष्टपदार्थेषु बृहन्नस्तीति । उपास्ते । पश्यति । तस्येदं फलम् । यदितिक्रिया विशेषणम् । एनमेवंविदं पुरुषम् । अभ्यासो ह । साधवो घोषाः । स्तुतिपरकाः शब्दाः । आचगच्छेयुः । आगच्छेयुश्च । उपच निम्रेडेरन् । उपनिम्रेडेरन् । न केवलमागनमात्रं घोषाणाम् । उपसुखयेयुश्च । उपसुखञ्च कुर्य्युरित्यर्थः । यत् । एनं साधवो घोषाः । आगच्छेयुरुपनिम्रेडेरन्निति । तदस्य विज्ञान प्रतापः । द्विरभ्यासोऽध्याय समाप्त्यर्थ आदरार्थश्च ॥ ४ ॥

इत्येकोनविंश खण्डस्य संस्कृतभाष्यं समाप्तम् ॥

इति श्रीकाव्यतीर्थ शिवशङ्करशर्म्मकृते छान्दोग्योपनिषद्भाष्ये

तृतीय प्रपाठकस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवादः—जो कोई विद्वान् इस आदित्य को इस प्रकार जानता हुआ ( सब सृष्ट पदार्थों में ) यह बहुत बड़ा है ऐसा जान विचार करता है, उस विद्वान् को शीघ्र ही प्रशंसापरक शब्द प्राप्त होते हैं । और वे उन्हें सुख देने वाले होते हैं यह इनके पुण्य प्रताप हैं ॥ ४ ॥

पदार्थः-( सः ) सो ( यः ) जो कोई ( एतम् ) इस ( आदित्यम् ) आदित्य को ( एवम् ) पूर्वोक्त गुण विशिष्ट ( विद्वान् ) जानता हुआ ( ब्रह्मेति ) सृष्ट पदार्थों में अतिशय बड़ा है यह जान ( उपास्ते ) विचार करता है उसको जो फल प्राप्त होता है सो कहते हैं ( एनम् ) इस विचार करने वाले को ( अभ्यासो ह ) अतिशीघ्र ( साधवः + घोषा) प्रशंसापरक शब्द (आ + च + गच्छेयुः) प्राप्त होते और ( उप+च+निम्रेडेरन्) केवल साधु शब्द ही नहीं प्राप्त होते हैं किन्तु वे उन्हें सुख भी पहुंचाते हैं ( यत् ) अर्थात् जो ये साधु शब्द प्राप्त होते हैं और सुख देते हैं वह सब उनके विज्ञान का प्रताप है ॥ ४ ॥ इत्येकोनविंश खण्डस्य भाषाभाष्यं समाप्तम् ॥ १९ ॥

इति श्रीकाव्यतीर्थ शिवशङ्करशर्म्मकृते छान्दोग्योपनिषद्भाष्ये तृतीय प्रपाठकस्य भाषाभाष्यं समाप्तम् ॥ ३ ॥

# अथ चतुर्थः प्रपाठकः प्रारभ्यते ॥

**जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस । स ह सर्वत आवसथान् मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥**

जानश्रुतिः । ह । पौत्रायणः । श्रद्धादेयः । बहुदायी । बहुपाक्यः । आस । सः । ह । सर्वतः । आवसथान् । मापयाञ्चक्रे । सर्वतः । एव । मे । अत्स्यन्ति । इति ॥१॥

भाष्यम्—जानश्रुतिरिति । जनैः श्रुतोजनश्रुतोजनेषु विख्यातः । तस्यापत्यं पुमान् जानश्रुतिः "अत इञ्" इतीञ् प्रत्ययः । पौत्रायणः । पौत्रस्यापत्यंपुमान्पौत्रायणः । "यञिञोश्च" इतिफक् । दीयतेयत् तद्देयं । दातव्यंवस्तु । श्रद्धापुरःसरं देयं यस्य स श्रद्धादेयः । श्रद्धासमन्वितोदाता शौण्ड इत्यर्थः। श्रद्धयादेयमितिश्रुति प्रमाणक इति भावः। बहु प्रचुरं प्रभूतं दातुं शीलमस्येति बहुदायी । सुप्यजातौणिनिस्ताच्छील्ये। इतिणिनिः। बहु प्रचुरं पाक्यं पक्तव्यं वस्तु गृहे यस्य स बहुपाक्यः । यस्य गृहे दिने दिने दानार्थं बहुविधाः पाका भवन्ति स बहुपाक्यः । ह शब्द ऐतिह्यार्थः । प्रसिद्धार्थश्च । तदित्थम् । बहुपाक्योबहुदायी श्रद्धादेयः पौत्रायणोजानश्रुतिर्नाम राजा । आस । आसीदिति । कस्मिंश्चिदितिहासे प्रसिद्धः कदाचित्तव कर्णगोचरोप्यस्तीति शिष्यं प्रति कश्चिदृषिराह । ह प्रसिद्ध इतिहासादिषु । स जानश्रुती राजा । सर्वतः । सर्वेषु स्वकीयेषु जनपदेषु । सार्व-

विभक्तिकस्तसिल् प्रत्ययः । आवसथान् । आसमन्तान्नानादिग् देशादागत्यजना निवसन्ति येषु ते आवसथाः । आश्रयगृहाः । धर्म्मशाला प्रभृतयः । तान् । मापयाञ्चक्रे । निर्मापितवान् । कारितवान् । किमर्थम् । सर्वतः । सर्वाभ्योदिग्भ्यो देशेभ्यश्चागत्य सर्वे अन्नाभिलाषिणो बुभुक्षवो जनाः । मे । मम । एव । नेतरस्य नृपस्येत्यर्थः । अन्नम् । तेष्वावसथेषु । अहर्निरात्रौ वा निवसन्तः । अत्स्यन्ति । भक्षयिष्यन्ति । विविध दिग्देशादेत्य जना ममावसथेषु निवसन्तो ममैवान्नमदन्तु इत्यभिरुचिः स राजा सर्वत्र निज विषयेषु बहून् आश्रय गृहान् निर्मापयामासेत्यर्थः ॥ १ ॥

अनुवाद—बहुपाक्य ( जिस के गृह पर विविध प्रकार के पाक होवें उसे बहुपाक्य कहते हैं ) बहुदायी ( बहुत देने वाला ) श्रद्धादायी ( श्रद्धापूर्वक दान देने वाला ) पौत्रायण जानश्रुति नामका एक राजा था । यह कथा इतिहास आदि में प्रसिद्ध है । उस प्रसिद्ध राजाने अपने सम्पूर्ण जनपदों में आवसथ (आवास=धर्म्मशालाएं ( बनवाये कि सब दिशाओं और देशों से आकर इन आवसथ ( धर्म्मशालाएं ) में निवास कर बुभुक्षु जन मेरेही अन्न को खावेंगे ( इस अभिप्राय से ) ॥ १ ॥

पदार्थः—( बहुपाक्यः ) विविधपाक युक्त ( बहुदायी ) बहुत देने वाला ( श्रद्धादेयः ) श्रद्धापूर्वक दान कर्त्ता ऐसा ( पौत्रायणः ) पौत्रायण=पौत्र के पुत्र का नाम पौत्रायण होता है । पिता, पितामह, प्रपितामह ये तीनों यदि जीवित हों तो प्रपौत्र को पौत्रायण कहते हैं ( जानश्रुतिः ) जानश्रुति नाम का ( ह ) अतिप्रसिद्ध राजा (आस) हुआ ( सः+ह ) उस प्रसिद्ध राजाने (सर्वतः) सर्वत्र अपने राज्य में ( आवसथान् ) धर्म्मशालाएं ( मापयाञ्चक्रे ) बनवाई । क्यों ? ( सर्वतः ) सब ही अन्नार्थी मनुष्य ( मे ) मेरे ( एव ) ही ( अत्स्यन्ति+इति ) अन्न को खावेंगे अर्थात् मेरे राज्य में मेरे ही अन्न को सब अन्नार्थी भोजन करें इस अभिप्राय से उस जानश्रुति राजा ने अपने राज्य भर में धर्म्मशालाएं बनवाई ॥ १ ॥

**अथ ह हꣳसा निशायामतिपेतुस्तद्धैवꣳ हꣳसो-हꣳ समभ्युवाद हो हो ( ऽयि ) हि भल्लाक्ष भल्लाक्ष ! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्माप्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥ २ ॥**

अथ । ह । हंसाः । निशायाम् । अतिपेतुः । तत् । ह । एवम् । हंसः । हंसम् । अभ्युवाद । हो । हो । हि । भल्लाक्ष । भल्लाक्ष । जानश्रुतेः । पौत्रायणस्य । समम् ।

दिवा । ज्योतिः । आततम् । तत् । मा । प्रसाङ्क्षीः । तत् । त्वा । मा । प्रधाक्षीः । इति ॥ २ ॥

भाष्यम्—अथेति । सदाधीनाभ्यः प्रजाभ्यो धनमाहृत्य निजप्रतिष्ठार्थं बहु ददद‍पि न कल्याणतरं पन्थानमारोढुमर्हतिराजा। जानश्रुतिः खलु केवलेन प्रजादुग्धेन दानेनैव निःश्रेयससाधनं मन्यमानोऽन्यस्मात् कल्याणतरात्कर्मणोविरराम । शुद्धचेतसो निश्छलस्य यथाज्ञान कर्मनिष्ठस्य जनस्यात्मा समये समये प्रसन्नो भूत्वा यथार्थकर्त्तव्यतां स्वस्मिन्नुद्भावयति । अयमेवादेशः क्वचिदाकाशवाणीत्युच्यते । विचारं विचारं तमादेशमनुसरञ्जनः सत्यं पन्थानमधिगच्छति। एवमेव मनसि किं कर्त्तव्यम् । कथं ममापवर्गलाभः। अनेन कर्मणा सेत्स्यति मोक्षो न वा। इतःपरमपि कर्त्तव्यमस्ति न वेति बहु विचारयन्नेव कदाचिज्जानश्रुती राजा निदाघरात्रौ शोकार्त्तः प्रासादतल एव निद्रितेऽभूत् । इमं स्वप्नञ्चाद्राक्षीत् । तत्स्वप्नसम्बन्धिन्याख्यायिकाऽलङ्कारेण वर्णयितुमारभ्यते । अथह कदाचित् स्वप्ने । हंसाः पक्षिविशेषाः । अत्र हंस आत्मोच्यते । हंसः । धर्मः । यज्ञः । वेनः । इत्यादि भूयांस आत्मपर्य्यायाः सन्ति निरुक्तौ । तत्सम्बन्धि विचारोऽपि हंसः तेन हंसा आत्म विचाराः । निशायां रात्रौ। स्वप्नकाले। अतिपेतुः । तस्योपरि । आजग्मुः । रात्रौ हृदयाकाश आपततान् आत्मविचारहंसान् राजा ददर्शेत्यर्थः । तद्धैवम् । तस्मिन्काले निपततां तेषां हंसानां मध्ये । एकोहंसः पृष्ठतो निपतन् सन् । अग्रतो निपतन्तमुड्डीयमानमन्यं हंसमेवं ह ऐतिह्ये अभ्युवाद । अब्रवीत् । हो हो हि इति । भो भो इति सम्बोध्य । क्वचित् हो हो यि इति पाठः । अस्याप्ययमेवार्थः । भल्लाक्ष भल्लाक्ष इति द्विरुक्तिरादरार्था आदरं दर्शयन् यथा तथा अब्रवीत् । पश्य पश्य भोराश्चर्यमेतत् । इति भावः । पौत्रायणस्य जानश्रुते राज्ञः । ज्योतिः । अन्न दानादिजनित प्रभावजः प्रतापः । दिवा । अन्तरिक्षेण । समम् । साकम् । आततम् । व्याप्तं प्रकीर्णं वर्त्तते। तत्। आकाशव्याप्तं ज्योतिः । मा प्रसाङ्क्षीः । तेन सह प्रसंजनमाकार्षीः । सम्बन्धंमाकुरु इतियावत् । कथम्। तत्प्रसञ्जनेन तज्ज्योतिः । त्वा। उल्लङ्घ्य गमिष्यन्तं त्वां मा प्रधाक्षीः। मादहतु इत्यर्थः । पुरुषव्यत्ययेन प्रधाक्षीरिति विज्ञेयम् । भल्ले मन्दे भद्रेवा अक्षिणी यस्य । तत्सम्बोधने । महात्मापुरुषोनातिक्रमणीयः । सतु अग्रेसरोहंसो महात्मानमतिक्रमितुमिच्छति । अतोभल्लाक्ष इति सम्बोधनपदं तस्मिन् युज्यते ॥ २ ॥

अनुवाद—एक राति में हंस ( आकाश मार्ग से ) उड़ रहे थे । उस समय एक (पृष्ठगामी) हंसने (अग्रगामी) हंस से कहा कि हो हो भल्लाक्ष भल्लाक्ष ! देखो क्या ही

आश्चर्य है। पौत्रायण जानश्रुति की ज्योति आकाश में व्याप्त हो रही है। उस ज्योति से सम्बन्ध मत करो ऐसा न हो कि वह तुमको भस्म कर देवे ॥ २ ॥

पदार्थः-( अथ+ह ) अब उस राजा के विषय में इतिहास का आरम्भ होता है। कदाचित् (हंसाः) आत्मविचार रूप हंस (निशायाम्) रात्रि में जब राजा शयन कर रहे थे उस स्वप्नावस्था में (अतिपेतुः) राजा के ऊपर आए अर्थात् मन में उत्थित हुए( तद्+ह ) वहां (एवम्) ऐसा (हंसः) एक पृष्ठगामी हंसने (हंसम्) अग्रगामी अन्य हंस को (अभ्युवाद) कहा ( हो, हो, हि ) हे हे ( भल्लाक्ष भल्लाक्ष ) मन्द दृष्टि मन्द दृष्टि ( पौत्रायणस्य ) पौत्रायण ( जानश्रुतेः ) जानश्रुति का ( ज्योतिः ) दानादि जनित महा प्रताप ( दिवा समम् ) द्युलोक के साथ ( आततम् ) व्याप्त होरहा है। द्युलोक तक इस की ज्योति फैल रही है ( तत् ) उस ज्योति के ( मा प्रसाङ्क्षीः ) साथ सम्बन्ध मत करो क्योंकि ( तत् ) वह ज्योति ( त्वा ) तुम को (मा+प्रधाक्षीः+इति ) दग्ध न कर देवे ॥ २ ॥

भाष्याशयः-सदाधीन प्रजाओं से धन आहरण कर निज प्रतिष्ठार्थ बहुत दान देने वाला भी राजा कल्याणतर मार्ग पर नहीं चढ़ सकता । जानश्रुति केवल प्रजाओं से दुहे हुए दान से ही निःश्रेयस साधन मानते हुए अन्य कल्याणतर कर्म्म से विरत होगये थे । परन्तु शुद्धचेता, निश्छल, और अपनी बुद्धि के अनुसार कर्म्म करते हुए जन का आत्मा समय२ पर प्रसन्न होकर यथार्थ कर्त्तव्यता को अपने में ही प्रकटित करता है। इस आदेश का नाम कहीं २ आकाशवाणी कहते हैं । उस आदेश को विचार जो कोई अनुसरण करता है। वह सत्य पथ को पालेता है । सो इस प्रकार क्या कर्त्तव्य है, कैसे मुझ को अपवर्ग मिलेगा, इस कर्म्म से मोक्ष सिद्ध होगा वा नहीं इस से भी कोई उत्तम कर्म्म है वा नहीं इत्यादि मन में जानश्रुति वारम्बार विचारते हुए ग्रीष्म ऋतु में शोक संतप्त हो प्रासाद के ऊपर ही निद्रित होगये। और इस स्वप्न को निद्रा में देखा। आत्मा में अनेक विचार तरंग उठ रही हैं । कभी तो यह विचार होता है कि दान के प्रताप से मेरी कीर्ति बहुत दूर तक फैल गई है। और कभी केवल दान से कुछ नहीं होता ज्ञान लाभ करना चाहिये । मेरे देश में ही कैसे ज्ञानी रैक्क नाम के ऋषि हैं। उन से ज्ञान शिक्षा लेनी चाहिये । मेरी कीर्ति रैक्क की नाई नहीं है, मुझे मिथ्या अहंकार है। इस से मोक्ष कदापि भी प्राप्त नहीं होगा । इत्यादि इस कथा का तात्पर्य्य है। हंस शब्द का अर्थ आत्मा होता है। यथा हंस धर्म्म, यज्ञ, वेन, मेघ, कृमि, भूमि आदि निरुक्त अ० १४ । ११ ॥ मूल में जो एक दूसरे से कहना आदि वर्णन है । वह केवल प्ररोचनार्थ और अलङ्कारार्थ है। अथवा स्वप्न में राजाने

हंसों को देखा। और उनके वचन भी मानो सुने इत्यादि वर्णन भी होसकता है ॥२॥

**तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳसयुग्वानमिव रैक्कमात्थेति। यो नु कथꣳसयुग्वा रैक्व इति ॥ ३ ॥**

तम्। उ। ह। परः। प्रत्युवाच। कम्। उ। अरे। एनम्। एतत्। सन्तम्। सयुग्वानम्। इव। रैक्कम्। आत्थ। इति। यः। नु। कथम्। सयुग्वा। रैक्कः। इति ॥३॥

भाष्यम्—तमुहेति। तमु। तमेव। ह। प्रसिद्धः। परः। अन्यः। प्रत्युवाच। किं प्रत्युवाचेत्याह अरे। अरे मन्ददृष्टे प्रियमित्र! कमु एनम्। अहो। कमेनं राजानम्। त्वम् सन्तम्। साधुम्। विज्ञानिनम्। सयुग्वानम्। रैक्कमिव उद्दिश्य। एतद्वचनं पूर्वोक्तसदृशम्। आत्थ। प्रशंससि। अप्रशस्यं कथं त्वं प्रशंससीत्यर्थः। इति प्रसिद्धोहंस उपदिशन्तमग्रगामिनं सुहृदं पृच्छति। नु। ननु। योमुनिस्त्वयेत्थं प्रशस्यते। स सयुग्वा रैक्कः। कथम्। कीदृशोस्तीतिमां कथय। इति संक्षेपार्थः। विशेषार्थस्त्वयम्। तं हंसं। राजानं प्रशंसन्तम्। उह एव परः। अग्रगामी हंसः तेनोक्तः सन्प्रत्युवाच किमुवाचेत्याह। कम्वर इति। कम् उ अरे इतिपदच्छेदः। उशब्दः। अप्यर्थः वितर्केवा। अरे निकृष्टार्थः। तदित्थम्। अरे निकृष्टोऽयं राजावर्त्तते। कमपि वराकं निकृष्टमेनं जानश्रुतिं राजानमीदृशं प्रति। सन्तं साधुं सयुग्वानम्। युगं वहतीतियुग्योबलीवर्दोऽश्वोवा। सोस्यामस्तीतियुग्या शकटी तयासह वर्त्तत इति सयुग्वायुग्यावानित्यर्थः। अकारोमत्वर्थीयः तं सयुग्वानम्। शकटी सहितं रैक्कं नाम मुनिमिव। यद्वा। युग्वागन्त्री शकटी तयासह वर्त्तत इति सयुग्वान्। एतत्पूर्वोक्तं वचनम्। त्वमत्यादरेण। आत्थ ब्रूषे इति। कम्वर इत्येकं पदम्वा। कंकुत्सितं वृणोति प्रशंसति इति कम्बरः। सम्बोधनपदम्। हे कुत्सित राजप्रशंसक मित्र। अयंभावः। अयं राजा न ब्रह्मिष्ठः। न च ज्ञानी। अज्ञानिनः पुरुषस्य न ज्योतिः क्वचित् प्रसरति। अतोस्य प्रशंसा न कार्य्या। अस्मिन् जगति अद्यतने काले एको रैक्कनामा ब्रह्मिष्ठो ज्योतिष्मानृषिर्वर्त्तते। तस्येदृशी प्रशस्तिर्भवितु मर्हति। तस्यैव ज्योतिर्द्युलोकेन सममाततमस्ति। स ऋषिर्नातिक्रमणीयः। यदि मोहात्तमपि कोप्यतिक्रमेत। स दग्धो भविष्यति। नैतस्य वराकस्य नृपस्याऽतिक्रमणेन किमपि भवितु मर्हति। अतस्त्वं रैक्कस्य समानं प्रशंसनमेतस्यमाकार्षीरिति भावः। स तु रैक्कः सर्वदैव शकटी मध्यास्य पर्यटति इति सयुग्वांल्लोके निगद्यते। सुहृदोक्तं वचनं निशम्य पृष्ठगामी हंसः पृच्छति। यो। रैक्कः त्वयेत्थं प्रशस्यते। स सयुग्वा रैक्कः। कथन्नु इति। केन प्रकारेण सम्प्रति वर्त्तते इति वर्ण्यताम् ॥ ३ ॥

अनुवाद—अग्रगामी दूसरा हंस पृष्ठगामी उसी हंस से बोला कि प्रसिद्ध सयुग्वा रैक्वमुनि की प्रशंसा से समान किस कुत्सित वराक राजा की प्रशंसा तुम कर रहे हो। पृष्ठगामी हंस पूछता है हे मित्र! जिसकी तुम प्रशंसा करते हो वह सयुग्वा रैक कैसा है? ॥३॥

पदार्थः—( तम्+उ+ह ) उसी से ( परः ) दूसरा ( प्रत्युवाच ) बोला कि (अरे) अरे मन्ददृष्टि प्रियमित्र (कम्+उ) अहो किस इस राजा के बारे में ( सन्तम् ) साधु ( सयुग्वानम् ) शकट वाले ( रयिक्वम्+इव ) रयिक्व ऋषि के समान (एवम्+एतद्) इस प्रकार इस प्रशंसा वचन को (आत्थ) तुम कह रहे हो। अर्थात् किस राजा की प्रशंसा रैक ऋषि की जैसी होनी चाहिये वैसी कर रहे हो। इतना सुन वह कहता है ( यः+नु ) जिसकी प्रशंसा आप करते हैं वह ( सयुग्वा+रयिक्वः ) सयुग्वा रयिक्व ( कथम् ) कैसे हैं ( इति ) यह मुझे कहो ॥ ३ ॥

भाष्याशयः—यह राजा न तो ब्रह्मिष्ठ न ज्ञानी है। अज्ञानी पुरुष की ज्योति कहीं भी नहीं फैलती। इस हेतु इसकी प्रशंसा नहीं करनी चाहिये हां इस जगत् में आज कल एक रयिक्व नाम ब्रह्मिष्ठ ज्योतिष्मान् ऋषि है। उसकी ऐसी प्रशस्ति होसकती है उसकी ज्योति द्युलोक पर्य्यन्त व्याप्त है। वह अनतिक्रमणीय अवश्य है। यदि मोहवश कोई उसको भी अतिक्रमण करे तो वह अवश्य दग्ध होजायगा। परन्तु इस वराक नृप के अतिक्रमण करने से कुछ भी नहीं होसकता अतः रयिक्व समान इसकी प्रशंसा नहीं करनी चाहिये।

सयुग्वा—वह रयिक्व सर्वदा शकटी ( गाड़ी ) पर चढ़कर चलते थे इस हेतु वह सयुग्वान् लोक में कहलाने लगे। युग्य नाम बैल वा घोड़े का है। बैल वा घोड़ा जिसमें जोता जाय उसे युग्या कहते हैं। अर्थात् शकट, वा शकटी, उस युग्य शकटी) के साथ जो सदा रहे उसे सयुग्वान् कहते हैं ॥ ३ ॥

**यथा कृताय विजितायाधरेयाः संयन्त्येव मेनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति।**

---

(१) सयुग्वान्। युग्य नाम बलीवर्द वा अश्व का है बलीवर्द वा अश्व के द्वारा जो शकटी ( गाड़ी ) चलती है। उसे युग्या शकटी कहते हैं। ऐसी शकटी हो जिस पुरुष को उसको सयुग्वा वा सयुग्वान् कहते हैं जिस कारण रैक्वनामा ऋषि सर्वदा शकटी पर ही यात्रा किया करते थे। अतः लोक में सयुग्वा नाम इनका प्रसिद्ध होगया।

(२) रैक्व, रैक, रयिक्व, रयिक्क, रैक्क इत्यादि अनेक प्रकार के पाठ देखे जाते हैं।

## यस्तद्वेद यत्सवेद स मयैतदुक्त इति ॥ ४ ॥

यथा । कृताय । विजिताय । अधरेयाः । संयन्ति । एवम् । एनम् । सर्वम् । तत् । अभिसमेति । यत् । किञ्च । प्रजाः । साधु । कुर्वन्ति । यः । तत् । वेद । यत् । सः । वेद । सः । मया । एतदुक्तः । इति ॥ ४ ॥

भाष्यम्–यथाकृतायेति । स रैक्वो येन प्रकारेण वर्त्तते तं प्रकारं त्वं शृणु इति भल्लाक्षो ब्रवीति । तत्प्रकारस्य दिदर्शयिषया दृष्टान्तं प्रस्तौति । यथा लोके कृताय । कृतो नाम यो द्यूत क्रीडायां प्रसिद्धश्चतुरङ्कः । तस्मै कृताय। विजिताय । तस्मिन् कृते विजिते-सतीत्यर्थः । इतरे । त्रिद्व्येकाङ्का अधरेयाः । त्रेताद्वापरकलिनामानः संयन्ति । अन्तर्भवन्ति । चतुरङ्के कृताये त्रिद्व्येकाङ्कानां विद्यमानत्वादन्तर्भवतीत्यर्थः । एवम् । अनेन प्रकारेण । एतत् सदृशमेव । एनं रैक्वं तत्सर्वम् अभिसमेति । अभितः समेति प्राप्नोति । रैक्वे सर्वमन्तर्भवतीत्यर्थः । किं तत् सर्वं रैक्वमभिव्याप्य समेतीति अग्रे दर्शयति । प्रजाः । सर्वे मनुष्याः । यत्किञ्च । यत्किञ्चित् साधु मंगलंकर्म्म कुर्वन्ति । तत्सर्वं रैक्वस्य कर्मणि अन्तर्भवति । सर्वासां प्रजानां साधूनि कर्माणि एकस्य रैक्वस्य कर्मणि अन्तर्भवन्ति । ईदृग्व्यापारो रैक्वोस्ति । अन्यं प्रभावं दर्शयति । लोके यः कश्चिदन्यः पुरुषः । यत्किमपि वेद्यं । वेद जानाति तत्सर्वं स रैक्वः वेद । अतः स एवंगुण विशिष्टः । एतदुक्तः । एतत्पूर्वोक्तगुण युक्तोस्तीति मया स उक्तः। प्रशंसित इत्यर्थः ॥४॥

अनुवाद–जैसे विजित कृत में अधरेय अन्तर्गत होजाते हैं वैसे ही प्रजाएं जो कुछ शुभ कर्म्म करती हैं । वे सब कर्म्म इस ( रैक्व) के कर्म में अन्तर्गत होते हैं । और जो कोई जो कुछ जानता । वह ( रैक्व ) वह सब जानता है मैंने ऐसा कहा है ॥ ४ ॥

पदार्थः–( यथा ) जैसे ( विजिताय ) जीते हुए ( कृताय ) कृत नाम द्यूत पात्र में ( अधरेयाः ) नीचे के सब पात्र ( संयन्ति ) अन्तर्गत होते हैं ( एवम् ) वैसे ही ( यत्+किञ्च+साधु ) जो कुछ शुभ कर्म्म ( प्रजाः ) प्रजाएं ( कुर्वन्ति ) करती हैं ( तत्+सर्वम् ) वह सब ही ( एनम् ) इस रैक्व में ( अभिसमेति ) अन्तर्गत होता है । और ( यः ) जो कोई ( यत् ) जो कुछ विद्या ( वेद ) जानता है ( सः ) वह रैक्व ( तद् ) उस सब विद्या वा ज्ञान को जानता है ( सः ) वह ऐसा है ( मया ) मुझ से ( एतदुक्तः ) ऐसा कहा गया है । इसका अर्थ यह है कि प्रजाओं के सब शुभ कर्म्म एक ओर और एक रैक्व के शुभ कर्म्म एक ओर । तथापि रैक्व का ही शुभ कर्म्म इन से बढ़ जायगा । और दूसरी बात यह है कि संसार में जो कोई जो कुछ जानता

है सो सब ही वह रैक्क जानता है । अर्थात् ऐसा तो शुभ कर्म्म करने वाला और ऐसा ज्ञानी वह रैक्क है । इसके तुल्य संसार में कोई नहीं है यह विस्पष्टार्थ है ॥ ४ ॥

**तदु ह जानश्रुतिः पौत्रायण उपशुश्राव । स ह सञ्जिहान एव क्षत्तार मुवाचाङ्गारे !'स सयुग्वानमिव रयिक्कमात्थेति । यो नु कथꣳ सयुग्वा रयिक्क' इति॥५॥**

तत् । उ । ह । जानश्रुतिः । पौत्रायणः । उपशुश्राव । सः । ह । सञ्जिहानः । एव । क्षत्तारम् । उवाच । अङ्ग । अरे । ह । सयुग्वानम् । इव । रयिक्कम् । आत्थ । इति । यः । नु । कथम् । सयुग्वा । रयिक्कः । इति ॥ ५ ॥

भाष्यम्—तदुहेति । ह प्रसिद्धः पौत्रायणः । पुत्रस्यापत्यं पौत्रः । तस्य पुत्रः पौत्रायणः । जानश्रुतिर्नाम राजा । तदु । तदेव । हंसवाक्यम् । रैक्कप्रशंसापरकम् । आत्मने निन्दोत्थापकम् । उपशुश्राव । श्रुतवान् । स ह । स प्रसिद्धोनृपः संजिहान एव । शयनं निद्रांवा परित्यजन्नेव "ओहाकृत्यागे शानच् । आत्मनेपदमार्षम्" । क्षत्तारम् । सारथिम् । प्रति "क्षत्तास्यात्सारथौद्वास्थः क्षत्रियाणां च शूद्रजः" इत्यमरः । उवाच । अङ्ग हे वत्स-सारथे ! "स्युप्याट् पाटङ्ग है हे भोः" इत्यमरः । सम्बोधनार्थाङ्गशब्दः अरे ह । अरे इति नीच सम्बोधनपदम् । अरे इति महाखेदोस्ति । इत्युक्त्वा राजा सर्वं श्रुतं तैरेव शब्दैस्तेनैव-क्रमेण च पुनरुक्तवान् । स युग्वानमित्यारभ्य आषष्ठप्रवाक समाप्तेः ॥ ५ ॥

अनुवाद—उस प्रसिद्ध पौत्रायण जानश्रुति नृप ने उस हंस के वचनों को सुना । शयन से उठता हुआ ही अपने सारथि से बोला कि हे वत्स ! बहुत खेद की बात है कि मेरे बारे में हंसों ने इस प्रकार वार्त्तालाप किया है कि 'इस राजा की प्रशंसा तुम सयुग्वा ऋषि की प्रशंसा के समान करते हो सो ठीक नहीं । तब दूसरे ने पूछा कि वह सयुग्वा रैक्क किस प्रकार का है' । इति ॥ ५ ॥

पदार्थः–( पौत्रायणः ) पौत्रायण ( जानश्रुतिः ) जानश्रुति नाम के राजा ने ( तदु ह ) उस हंसों के वचन को ( उपशुश्राव ) सुना ( स ह ) वह ( सञ्जिहानेव ) प्रातःकाल उठता ही ( क्षत्तारम् ) अपने सारथि से ( उवाच ) बोला कि ( अङ्ग ) हे मित्र ( अरे ) बहुत खेद की बात है इतना कह हंस की वार्ता उसी क्रम से सुनाई । "सयुग्वानमिवादि" का अर्थ तृतीय प्रवाक में देख लेना चाहिये ॥ ५ ॥

**यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ**

सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति। यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥

यथा । कृताय । विजिताय । अधरेयाः । संयन्ति । एवम् । एनम् । सर्वम् । तत् । अभिसमेति । यत् । किञ्च । प्रजाः । साधु । कुर्वन्ति । यः । तत् । वेद । यत् । सः । वेद । सः । मया । एतदुक्तः । इति ॥ ६ ॥

राजाने जैसा हंस ने कहा था वैसा ही सुनाया । चतुर्थप्रवाक ही यह है । अतः व्याख्यानादि कुछ नहीं किये गये । वहां ही देखो ॥ ६ ॥

स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय । तᳫं होवाच यत्रारे ब्राह्मणस्यान्वेषणातदेनमर्च्छेति ॥७॥

सः । ह । क्षत्ता । अन्विष्य । न । अविदम् । इति । प्रत्येयाय । तम् । ह । उवाच । यत्र । अरे । ब्राह्मणस्य । अन्वेषणा । तद् । एनम् । अर्च्छ । इति ॥७॥

भाष्यम्-सहेति । तं सयुग्वानं रैक्कं महर्षिं सारथे! मार्गयेतिनृपेण प्रहितः । स ह प्रसिद्धः । क्षत्ता सारथिः । इतस्ततः । अन्विष्य । मार्गणं कृत्वा । ग्रामाद्ग्रामं नगरान्नगरं गत्वा तं न प्राप्नोत् । अहो क्वास्ते स भगवानृषिः । प्रसिद्धः सन् कथं न जनैर्दृष्टः श्रुतोऽस्ति । कथं न मह्यं तं जना दर्शयन्ति । इति पौनःपुन्येन मार्गयन् पृच्छंश्च स सारथिः । न क्वापि तमविन्दत् । सारथिर्मनसिकथयति अहं तं नाविदम् । न व्यज्ञासिषम् । इति । अहं तं भगवन्तं न क्वापि मार्गयित्वाप्यवेदिषम् । किं करोमीत्येवं चिन्तयन् । राजानं प्रत्येयाय । प्रत्याजगाम । प्रत्यागतं तं सारथिं स राजोवाच । अरे यत्र यस्मिन् । निर्जने बने शून्ये समाधियोग्ये क्वचिद्गह्वरे उपासनार्हे विजने स्थाने वा क्वचिन्नदीपुलिनादिषु वा ईदृशेषु स्थानेषु यत्र यत्र ब्राह्मणस्य ब्रह्मविदः । अन्वेषणा अनुमार्गनं भवति । तत्तत्र तत्र । एनम् । रैक्कम् । अर्च्छ । गच्छ । तस्मिन् २ स्थाने तस्यान्वेषणां त्वं कुरु । इति सम्यग् बोधयित्वा पुनरपि सारथिः प्रेषितः ॥ ७ ॥

अनुवाद-वह प्रसिद्ध सारथि इतस्ततः अन्वेषण करके "मैंने उस ऋषि को न पाया" इस हेतु लौट आया । राजा ने पुनः उस सारथि से कहा कि अरे जहां ब्रह्मविद् की अन्वेषणा होनी चाहिये वहां उन की अन्वेषणा करो ॥ ७ ॥

पदार्थः-हे सारथे ! उन सयुग्वा रैक्क महर्षि की अन्वेषणा करो ऐसा कह उस सारथि को राजाने उन के अन्वेषण के लिये बाहर भेजा ( स ह ) वह ( क्षत्ता ) सारथि ( अन्विष्य ) खोजकर ( न+अविदम् ) मैंने उन्हें नहीं जाना । मैने उस ऋषि को नहीं

पाया ( इति ) इस हेतु ( प्रत्येयाय ) लौटकर चला आया । पुनः ( तम्+ह ) उस सारथि से राजाने बुझाकर ( उवाच) कहा (अरे) बहुत खेद की बात है । हे सारथे ! ( यत्र ) जहां ( ब्राह्मणस्य ) ब्रह्मविद् ऋषियों की ( अन्वेषणा ) अन्वेषणा खोज होती है ( तत् ) वहां ( एनम् ) इस ऋषि के निकट ( अर्च्छ ) जाओ । वहां उन्हें खोजो ॥ ७ ॥

**सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश । तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहꣳ ह्यरा३इति ह प्रतिजज्ञे । स ह क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥**

सः । अधस्तात् । शकटस्य । पामानम् । कषमाणम् । उपोपविवेश । तम् । ह । अभ्युवाद । त्वम् । नु । भगवः । सयुग्वा । रयिक्वः । इति । अहम् । हि । अरा३ । इति । ह । प्रतिजज्ञे । सः । ह । क्षत्ता । अविदम् । इति । प्रत्येयाय ॥८॥

भाष्यम्—स इति । स इत्थं संबोध्य प्रेषितः सारथिः । शकटस्य । अधस्तात् ।अधोभागे । आसीनम् । पामानम् । विचर्चिकाम् । पामपामे विचर्चिका इत्यमरः ॥ कषमाणम् । कण्डूयमानं सयुग्वानं रैक्वं ददर्शेत्यर्थः । दृष्ट्वा च । उपोपविवेश । तस्य उप समीपे । सादरं सविनयञ्चोपविष्टवान् । उपविश्य च । तं ह । रैक्वम् । अभ्युवादोवाच । उक्तवान् । भगवः । हे पूजावन् भगवन् ! त्वं नु नु इत्यव्ययम् । पृच्छायाम् "नु पृच्छयां विकल्पेच"इत्यमरः । ननु त्वमेव जगति प्रसिद्धः सयुग्वा रैक्व इति ? भगवान् एव खलु कच्चित् सयुग्वा रैक्व उच्यते ? । इत्येवं पृष्टोहम् हि । अरा३अरे अवोद्धर्मनुष्य । अहमेव रैक्व उच्ये इति प्रतिजज्ञे । अभ्युपगतवान् । स्वीकृतवान् । ततः स ह क्षत्ता तं विदित्वा । अहो अद्याहं तं भगवन्तमविदमिति राजानं प्रत्येयाय । प्रत्याजगाम ॥ ८ ॥

इति प्रथम खण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद—वह सारथि उस रैक्व ऋषि को शकट के नीचे बैठे हुए और विचर्चिका को आस्वासन करते हुए देख उनके समीप आदर विनय के साथ बैठ गया और पूछा कि हे भगवन् ! क्या आप ही सयुग्वा रैक्व हैं ? अरे मैं ही हूं । इतनी बात कह स्वीकार किया पश्चात् यह सारथि उन्हें पहचान "मैंने उन्हें पाया" इस हेतु लौट आया ॥८॥

पदार्थः-(सः) वह सारथि ( शकटस्य ) शकट ( गाड़ी ) के ( अधस्तात् ) नीचे भाग में बैठे हुए और ( पामानम् ) पामानामक दाद का ( कषमाणम् ) कण्डूयन करते हुए उन रैक्क को देखा और देखकर ( उपोपविवेश ) विनय और आदर से उन के निकट बैठ गया और बैठ कर ( तम्+ह+अभ्युवाद ) उन से पूछा कि ( भगवः ) हे भगवन् ( नु ) क्या ( त्वम् ) आप ही ( सयुग्वा+रैक्कः+इति ) सयुग्वा रैक्क कहलाते हैं (इति) तब ऋषि ने (अरे) अरे अबोद्धा मनुष्य (अहम्+हि) मैं ही सयुग्वा रैक्क कहलाता हूं ( इति ह ) इस प्रकार ( प्रतिजज्ञे ) स्वीकार किया। तब (सः+ह+क्षत्ता) वह सारथि ( अविदम् ) मैंने महर्षि को जाना ( इति ) इस हेतु ( प्रत्येयाय ) राजा के निकट लौट आया ॥ ८ ॥ इति प्रथमखण्डस्य भाषाभाष्यं समाप्तम् ॥ १ ॥

* अथ द्वितीयः खण्डः *

## तदुह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे । तꣳ हाभ्युवाद ॥ १ ॥

तद् । उ । ह । जानश्रुतिः । पौत्रायणः । षट् । शतानि । गवाम् । निष्कम् । अश्वतरीरथम् । तद् । आदाय । प्रतिचक्रमे । तम् । ह । अभ्युवाद ॥ १ ॥

भाष्यम्—तदुहेति। उ एवार्थः । ह प्रसिद्धार्थः । प्रसिद्धो जानश्रुतीराजा पौत्रायणः । तदु तदैव । रैक्कस्यान्वेषणानन्तरमेवाविलम्बेनेत्यर्थः । गवां धेनूनां षट् शतानि । निष्कं कण्ठहारमुरोभूषणम्वा “साष्टेशतेसुवर्णानां हेम्न्युरोभूषणे दले। दीनारेपिच निष्कोऽस्त्री” इतिकोशः । अश्वतरीरथम् । अश्वतरीभ्यां लघ्वीभ्यामश्वाभ्यां युक्तं रथम् ‘वत्सोक्षाश्वर्षभेभ्यश्चतनुत्वे’ ५ । ३ । ९१ ॥ ष्टरच् प्रत्ययः । अत्र काशिका “अश्वेनाश्वायामुत्पन्नोऽश्वः । तस्य तनुत्वमन्यपितृकता” । अश्वायां गर्दभेन जातः पशु विशेषोऽश्वतरः । स्त्रीत्व विवक्षायामश्वतरी । तत्सर्वं धनंगवादि। आदाय गृहीत्वा । प्रतिचक्रमेरैक्कसमीपं प्रतस्थे। तमभ्युपेत्य। तं ह तं प्रसिद्धं रैक्कमृषिम्। अभ्युवाद उवाच । अभिवदेर्लिटि रूपमिदम् “लिट्यभ्यासस्योभयेषाम्” ६ । १ । १७ ॥ इति संप्रसारणम् ॥ १ ॥

अनुवादः—उसी समय वह प्रसिद्ध जानश्रुति पौत्रायण छःसौ धेनु गायें, एक निष्क, और एक अश्वतरी युक्त रथ ये सब धन मुनि के लिये लेकर चले और उस प्रसिद्ध रैक्क ऋषि के समीप जा बोले ॥ १ ॥

पदार्थः–( तद्+उ ) उसी समय ( ह ) प्रसिद्ध (जानश्रुतिः+पौत्रायणः ) जानश्रुति पौत्रायण राजाने ( षट्+शतानि ) छःसौ (गवाम् ) धेनु गायें (निष्कम्) सुवर्णमणि मुक्तादि अनर्घ्य वस्तु से बने हुए हार ( माला ) को निष्क कहते हैं । जो कण्ठ में धारण किया जाता है और ( अश्वतरीरथम् ) छोटी २ घोड़ियों से वा खच्चरियों से युक्त रथ ( तद् ) पूर्वोक्त उन गवादिक धनों को ( आदाय ) लेकर ( प्रतिचक्रमे) ऋषि समीप गमनार्थ यात्रा की और वहां जाकर ( तम्+ह ) उस प्रसिद्ध रैक्व ऋषि से ( अभ्युवाद ) बोले ॥ १ ॥

भाष्याशयः–निष्क–इस शब्द के अनेक अर्थ होते हैं अमरकोश में लिखा है कि १०८ सुवर्णों ( मोहर ) का समूह । सुवर्ण मात्र, उरोभूषण, एक पल और दीनार इन सब के अर्थ में निष्क शब्द का प्रयोग होता है । पाणिनि सूत्रों में इस की बहुत चर्चा आई है । यथा–"असमासे निष्कादिभ्यः" ५ । १ । २० ॥ इस सूत्र से विदित होता है कि निष्क एक सिक्काविशेष का नाम था । "द्वि त्रि पूर्वान्निष्कात्"५ ।१।३०॥ इस से भी पूर्ववत् ही विदित होता है । मालूम होता है कि जिस प्रकार आज कल भी रुपये में छिद्र कर सूत में गांथ उसे कण्ठ में लटका लेते हैं । तद्वत् पूर्व समय में भी निष्क कोई बहुमूल्य सिक्का होता होगा । उसी को कण्ठ में धारण करते होंगे । पीछे वह उरोभूषण होगया हो ।

अश्वतरी–अश्वतर शब्द से स्त्रीलिङ्ग में अश्वतरी बनता है । पाणिनि सूत्र के अनुसार 'तनुरश्वः अश्वतरः' तनु अश्व को अश्वतर कहते हैं । परन्तु पाणिनि सूत्र टीकाकारों का आशय अन्यसा प्रतीत होता है वह अश्व अश्वतर कहलाता है जो अन्य पिता से उत्पन्न हो अर्थात् अश्वा में गर्दभ आदि से जो पशु उत्पन्न हो उसे अश्वतर कहना चाहिये । अर्थात् जिस को भाषा में प्रायः 'खच्चर' कहते हैं । परन्तु हमें अश्वतर शब्द का अर्थ वर्णसङ्कर प्रतीत नहीं होता है क्योंकि ऐतरेय ब्राह्मण में * एक ऋषि का नाम अश्वतर आया है पुनः एक प्रसिद्ध उपनिषद् का नाम श्वेताश्वतर आया है पुनः इसी उपनिषद् में ५–११–१ आश्वतराश्व ऋषि का नाम आया है । अतः प्रतीत होता है कि यह शब्द वर्णसङ्कर अर्थ में प्रयुक्त नहीं होता था । कोई कहते हैं कि अश्वतर नाम तो वर्णसंकर वा खच्चर का ही है । इस में सन्देह नहीं परन्तु आप पूछेंगे कि ऋषि वा उपनिषद् का यह नाम कैसे हुआ?

* स ह बुलिल आश्वतर आश्वितर वैश्वजितो होता सन्नीक्षां चक्रे । ऐत० ब्रा० पञ्चिका ६ । कण्डिका० ३० ॥

मालूम पड़ता है कि नियोग से जिनकी उत्पत्ति होती हो उनका नाम अश्वतर रखते हों। अथवा जो अपने कुल से आचार्य कुल में प्रविष्ट हो आचार्यकुल के ही गोत्र-वाले हो जाते थे वे प्रायः अश्वतर कहलाते हों। इसी प्रकार जो उपनिषद् दो आचार्यों की सम्मति से सम्बन्ध रखने वाली हो उसे अश्वतरी कहते हों। कोई इस विषय में यह भी कहते हैं कि कृष्ण और श्वेत यजुर्वेद दोनों से सम्बन्ध रखनेवाली उपनिषद् अश्वतरी कहलाती हो। परन्तु यह बात अश्रद्धेय है क्योंकि यजुर्वेद न तो शुक्ल और न कृष्ण है किन्तु साधारण लोग भ्रम से मूलवेद को शुक्ल और काण्व शाखा को कृष्ण यजुर्वेद कहते हैं। इस पर बहुतसी अविश्वसनीय कथाएं भी बना रक्खी हैं॥ १ ॥

## रैक्केमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथोऽनु म एतां भगवो ! देवताꣳशाधि यां देवतामुपास्स इति ॥ २ ॥

रैक्क। इमानि। षट्। शतानि। गवाम्। अयम्। निष्कः। अयम्। अश्वतरीरथः। अनु। मे। एताम्। भगवः। देवताम्। शाधि। याम्। देवताम्। उपास्से। इति ॥ २ ॥

भाष्यम्—रैक्केति। जानश्रुतिः पौत्रायणो ब्रवीति। हे भगवन् ऋषे रैक्क ! मया। आनीतानि। इमानि सन्निहितानि। गवां धेनूनां षट् शतानि सन्ति। तानि। गृहाण। अयं निष्क उरोभूषणञ्च। इममपि। आदत्स्व। अयमश्वतरीरथश्च आरोहणाय अश्वतरीभ्यां तन्वीभ्यामश्वाभ्यां युक्तोरथः। तमपिगृहाण। अनु पश्चात्। हे भगवः ! हे भगवन् ! 'मतुवसोरु सम्बुद्धौछन्दसि' ८। ३। १ इति रुः। यां देवतां त्वमुपास्से। तामेतां देवताम्। मे मह्यम्। शाधि। उपदिशेति भगवन्तं त्वां सविनयं प्रार्थये शासु अनुशिष्टौ ॥ २ ॥

अनुवाद—( जानश्रुति पौत्रायण भगवान् रैक्क से निवेदन करते हैं कि ) हे ऋषे रैक्क ! ये छःसौ गायें, यह निष्क, और यह अश्वतरी रथ ( आपके लिये मैंने लाये हैं आप उन्हें ग्रहण करें) तत्पश्चात् हे भगवन् ऋषे ! जिस देवता की आप उपासना करते हैं उस देवता के विषय में मुझको शिक्षा देवें। ( यही आप से प्रार्थना ) ॥ २ ॥

पदार्थः-( रैक्क ) हे ऋषे रैक्क! ( इमानि ) ये (गवाम्+षट्+शतानि) छःसौ गायें ( अयम् ) यह ( निष्कः ) निष्क=मुहरें ( अयमश्वतरीरथः ) यह अश्वतरी युक्त रथ ( आप के लिये लाये गये हैं। उन्हें आप ग्रहण करें ) ( अनु ) पश्चात् ( भगवः ) हे

भगवन् ( याम्+देवताम्+उपास्से ) जिस देवता की उपासना आप करते हैं ( एताम् ) उस देवता का ( मे ) मेरेलिये ( शाधि ) उपदेश देवें इति ॥ २ ॥

भाष्याशयः—ये राजा प्रकृति से ही दानशूर थे। इस हेतु ऋषि के प्रसन्नार्थ अपने मनोरथ के अनुकूल गो प्रभृति धन ले गये । ऋषियों को यज्ञादि में घृत आदिक सामग्रियों की प्रचुरतया आवश्यकता होती थी अतः गौ की संख्या सब से अधिक छः सौ थीं । परन्तु प्राचीन ऋषि, शुश्रूषु, श्रद्धालु, आचारवान्, शान्त, दान्त ब्रह्मनिष्ठ, अन्तेवासी ( ब्रह्मचारी वा शिष्य ) को ब्रह्मज्ञान दिया करते थे। धनकी प्रत्याशा से नहीं, परन्तु राजा जिज्ञासु के लक्षणों से युक्त हो ऋषि के निकट नहीं पहुंचे थे । किन्तु राजभाव युक्त और किञ्चिद् राजकीय अहङ्कार सम्मिलित हो ब्रह्मज्ञान शिक्षार्थ पहुंचे । अतएव महर्षि ने शूद्र शब्द से सम्बोधन किया । जिसका आगे वर्णन होगा ॥ २ ॥

**तमुह परः प्रत्युवाचाह हारेत्वा शूद्र ! तवैव सह गोभिरस्त्विति । तदुह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥**

तत् । उ । ह । परः । प्रत्युवाच । अह । हारेत्वा । शूद्र । तव । एव । सह । गोभिः । अस्तु । इति । तद् । उ । ह । पुनः । एव । जानश्रुतिः । पौत्रायणः । सहस्रम् । गवाम् । निष्कम् । अश्वतरीरथम् । दुहितरम् । तत् । आदाय । प्रतिचक्रमे ॥ ३ ॥

भाष्यम्—तमिति । हेतिप्रसिद्धः । परोऽन्यो सुप्रसिद्धोवा रैक्व ऋषिः । तमु । तं जानश्रुतिं पौत्रायण मेव । प्रत्युवाच । "अहेत्ययं निपातो विनिग्रहार्थी योऽन्यत्रेह त्वनर्थकः । एव शब्दस्य प्रयोगात्" इति शङ्करः । हे शूद्र अनभिज्ञ विवेक रहित ! सम्प्रत्यपि विवेकशून्यं शिष्यमवलोक्याचार्य्यः कथयति । अरे गर्दभ अरे वृषभ इत्यादि । अगर्दभोपि बालकोऽज्ञानात्कर्त्तव्याकर्त्तव्यविचारशून्यत्वाद्वा गर्दभ उच्यते। तथैव अशूद्रोऽपि जानश्रुतिः शोकापन्नत्वात् शूद्रवद् व्यवहाराद्वा शूद्र इत्युच्यते । शुश्रूषयाचार्य्य स्तोषयितव्यो न तुधनैः। धनहरणंहि जानश्रुतेः शूद्रवद् व्यवहारः । हारेत्वा । हारैः विविधैमाल्यैर्युक्ता सती इत्वा गन्त्री गमनशीला शकटिका । यद्वा हारेण निष्केण युक्ता । इत्वा । गन्त्री शकटिका । गोभिः सह । गवां षड्भिः शतैः सार्धम् । तवैव अस्तु । इति । एताभिः

सामग्रीभिर्मगनास्ति किमपि प्रयोजनम् । त्वमेवसर्वं गृहाण । इत्यभिप्रायः । हेतिप्रसिद्धः । अथ जानश्रुतिः पौत्रायणो भगवतो रैक्स्यास्वीकृतिपरकं पूर्वोक्तं वचनं निशम्य । तदु तदैव । पुनरेव गवां सहस्रम् । निष्कम् । अश्वतरीरथम् । एकां दुहितरं निजपुत्रीञ्च तत् सर्वं तदा । आदाय । गृहीत्वा । प्रतिचक्रमे । रैक्वं प्रति प्रतस्थे ॥ ३ ॥

अनुवाद–पूजनीय ( भगवान् रैक्व ) उससे बोले कि हे शूद्र * विविधहार से युक्त हो गमन करने वाली और गौ सहित यह शकटी ( वा रथ ) तुम को ही रहे । इसे सुन उसी समय वे जानश्रुति पौत्रायण पुनरपि एक सहस्र गौ, एक निष्क, एक अश्वतरी रथ और एक निज पुत्री को ले तब रैक्व के निकट चले ॥ ३ ॥

पदार्थः–( ह ) प्रसिद्ध ( परः ) दूसरा, अन्य अथवा मान्य पूज्य रैक्व (तम्+उ) उसी जानश्रुति से ( प्रत्युवाच ) बोले ( अह ) अरे ( शूद्र ) शूद्र ( हारेत्वा ) हारों से वा निष्करूपहार से युक्त और ( गोभिः+सह ) छःसौ गौ सहित रथ (तवैव) तुमको ही ( अस्तु ) रहै ( इति ) इसे सुनकर ( तदु ) उसी समय ( ह+जानश्रुतिः+पौत्रायणः ) वे प्रसिद्ध जानश्रुति पौत्रायण ( पुनरेव ) फिर ( सहस्रम्+गवाम् ) एक सहस्र गौ ( निष्कम् ) एकनिष्क ( अश्वतरीरथम् ) अश्वतरी रथ तथा ( दुहितरम् ) एक निज कन्या ( तत् ) तब इन सब धनों को ( आदाय ) साथ ले (प्रतिचक्रमे) रैक्व मुनि के निकट चले ॥ ३ ॥

भाष्याशयः–दुहिता- विद्या ग्रहणार्थ पूर्व समय के राजा आचार्य को सर्वस्व समर्पण करने को भी संकोच नहीं करते थे । रैक्व यद्यपि ब्रह्म ज्ञानी थे । परन्तु धनाढ्य नहीं । विवाहार्थी उन्हें जान प्रसन्न करने को राजा ने अपनी निज दुहिता दे दी । इससे अनुमान कर सकते हैं कि पुराकाल में राजा लोग कहां तक विद्याभिलाषी वा ज्ञानभिक्षुक हुआ करते थे । ऐसे २ योग से संसार में बड़े लाभ और आनन्द होते थे । क्योंकि वीरता भी विद्या विना शोभित नहीं । जब विद्यावान्, आचार्य्यवान्, वीर्य्यवान्, शान्त, दान्त, जितेन्द्रिय, पूर्ण ब्रह्मचारी, ब्रह्मज्ञादि पुरुष के संसर्ग से वीर वधूटी में सन्तान भी वैसे ही उत्पन्न होते हैं तो देश में सदा कल्याण ही होता रहता है । निर्बल, दुराचारी, मूर्ख, आलसी, अब्रह्मचारी से जब वैसे २ ही सन्तान होने लगते हैं । तब ही देश की

---

* शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि । ३४ । क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् । ३५ । इत्यादि वेदान्तसूत्र और इस प्रपाठक के नवम खण्ड की समीक्षा में शूद्रशब्द पर विचार देखो ।

श्री, लक्ष्मी, सम्पत्ति, आरोग्यता, विद्वत्ता, उत्साहसम्पन्नता आदि गुण क्षीण होते २ एक दिन सर्वथा लुप्त ही होजाते हैं । अतः सर्वदा ईदृग् विवाह स्वतन्त्रता पूर्वक होना चाहिये । यह शिक्षा इस आख्यायिका से मिलती है ॥ ३ ॥

**तछ्हाभ्युवाद-रैक्वेदछ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः! शाधीति ॥ ४ ॥**

तम् । ह । अभ्युवाद । रैक्व । इदम् । सहस्रम् । गवाम् । अयम् । निष्कः । अयम् । अश्वतरीरथः । इयम् । जाया । अयम् । ग्रामः । यस्मिन् । आस्से । अनु । एव । मा । भगवः । शाधि । इति ॥ ४ ॥

भाष्यम्—तमिति । स ह प्रसिद्धो जानश्रुतिः पौत्रायणः । तं रैक्वंप्रति । अभ्युवादोवाच । हे भगवन् रैक्व महर्षे ! इदं गवां । धेनूनां सहस्रम् । सहस्रसंख्याका गाव इत्यर्थः । अयं निष्क उरोभूषणम् । अयम् अश्वतरीरथः तन्वीभ्यामश्वाभ्यांयुक्तोरथः । इयं जाया । इयं मम दुहिता भगवतो जायार्थमानीता । अयंग्रामः । यस्मिन् ग्रामे त्वमास्से तिष्ठसि । एतत्सर्वं हे मुने गृहाण । हे भगवः ! हे भगवन् यां देवतां त्वमुपास्से तामेव देवताम् । मा मांप्रति । अनु पश्चात् शाधि शिक्षस्व इति ॥ ४ ॥

अनुवाद—वे प्रसिद्ध जानश्रुति पौत्रायण इन ऋषि रैक्व से बोले कि हे भगवन् रैक्व ! यह एक सहस्र गायें, यह निष्क, ( उरोभूषण) यह अश्वतरीरथ, आपकी धर्मपत्नी होने के लिये मेरी यह दुहिता और यह ग्राम जिसमें आप निवास करते हैं इन सब का आप ग्रहण करें । हे भगवन् ! तत्पश्चात् जिस देवता की आप उपासना करते हैं उसका उपदेश मुझे देवें । इति ॥ ४ ॥

पदार्थः—( तम्+ह ) उस प्रसिद्ध ऋषि से ( अभ्युवाद ) वे जानश्रुति पौत्रायण बोले कि महर्षे ( रैक्व ) रैक्व (इदम् ) यह (गवाम्+सहस्रम् ) एक सहस्र गायें ( अयं निष्कः) यह उरोभूषण निष्क (अयमश्वतरीरथः) यह अश्वतरी युक्त रथ (इयम्+जाया) आप की धर्म्म पत्नी होने के लिये यह मेरी कन्या (अयम्+ग्रामः) यह ग्राम (यस्मिन्) जिस ग्राम में (आस्से) आप वर्त्तमान हैं । ये सब वस्तुएं आप के लिये हैं आप इनका कृपा पूर्वक ग्रहण करें ( अनु ) तत्पश्चात् ( भगवः ) हे भगवन्! (मा) मुझ को (शाधि) शिक्षा देवें ( एव ) निश्चय हे भगवन् ! कृपाकर मुझे अवश्य उस देवता के विषय में उपदेश देवें जिस की उपासना आप करते हैं । यही सविनय आप से निवेदन है॥४॥

**तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽऽजहारेमाः शूद्रानेनैव मुखेनाऽऽलापयिष्यथा इति । ते हैते रैक्वपर्णानाम महावृषेषु यत्रास्मा उवास । तस्मै होवाच ॥ ५ ॥**

तस्याः । ह । मुखम् । उपोद्गृह्णन् । उवाच । आजहार । इमाः । शूद्र । अनेन । एव । मुखेन । आलापयिष्यथाः । इति । ते । ह । एते । रैक्वपर्णाः । नाम । महावृषेषु । यत्र । अस्मै । उवास । तस्मै । ह । उवाच ॥ ५ ॥

भाष्यम्-तस्याइति । हेति प्रसिद्धो रैक्वः । तस्या राजदुहितुः । मुखम् । वदनमास्यम् । उपोद्गृह्णन् । कराभ्यां गृहीत्वा निजसमीपमानीय ऊर्ध्वं कुर्वन् मुखं स्पृहयन्नित्यर्थः । जानश्रुतिं प्रति उवाच । यद्वा । राज्ञो दुहितुरेव मुखं विद्यादाने तीर्थम् उपोद्गृह्णन् जानन्नुवाच । हे शूद्र विवेक शून्य ! । यद् । इमा गोप्रभृतीः सम्पत्तीः । भवान् आजहार आनीतवानस्ति । तत्साधु कृतम् इतिशेषः । किन्तु । अनेन मुखेन । हे राजन्! त्वं निज दुहितुरनेन मुखेनैव । माम् आलपयिष्यथा भाषयिष्यथाः । इदं तव दुहितृमुखमेव मां तव शिक्षकं करिष्यति । न अन्यानि धनानि । तत्स्थानस्य कीर्तिमाह । महावृषेषुमहावृषनामसु देशेषु । ते ह एते ग्रामाः । रैक्वपर्णाःनाम रैक्वपर्णनामानः । यत्र येषु ग्रामेषु । स उवास सवासंकृतवान् । अस्मैरैक्वाय तान् । ग्रामान् राजा ददौ इति वाक्य शेषः । तस्मै ग्रामान् दत्तवतेराज्ञेह रैक्व उवाच उपदिदेश ॥ ५ ॥ इति द्वितीय खण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद-राजाकी उस पुत्री के मुख को प्यार करते हुए वा राज दुहिता के मुख को ही विद्या दानमें द्वार जानते हुए वे रैक्व बोले कि हे शूद्र आपने जो ये गौ प्रभृति धन सम्पत्तिएं लाई हैं सो आपने अच्छा किया है । परन्तु आप अपनी इस पुत्री के मुख से ही मुझ को बोलवावेंगे । महावृष देश में जो ये रैक्वपर्ण नाम ग्राम हैं जहां रैक्व रहते थे वे ग्राम राजाने रैक्व को दिये । पश्चात् उस राजा को उपदेश किया ॥५॥

पदार्थः-(तस्याः+ह) राजा की उस पुत्री के ( मुखम् ) मुख को ( उपोद्गृह्णन् ) प्यार करते हुए वा विद्या दान में मुख को ही द्वार जानते हुए (ह) प्रसिद्ध ऋषि रैक्व ( उवाच ) बोले ( शूद्र ) हे शूद्र ( इमाः ) जो ये गो प्रभृति सम्पात्तिएं आप ( आजहार ) लाये हैं सो अच्छा ही किया है परन्तु ( अनेन+एव ) इसी ( मुखेन ) मुख से अर्थात् हे राजन् ! अपनी पुत्री के इस मुख के द्वारा ही आप ( आलापयिष्यथाः ) मुझ को बोलवावेंगे ( इति ) तत्पश्चात् ( महावृषेषु ) महावृष देश में ( ते+एव ) जो ये ग्राम हैं जो ( रैक्वपर्णानाम ) रैक्वपर्ण नाम से अब प्रसिद्ध हैं (यत्र+उवास) जहां

रैक्क रहते थे वे ग्राम राजा ने ( अस्मै ) रैक्व को दिये । तत्पश्चात् ( तस्मै ) उस राजा से ( उवाच ) रैक्व बोले ( ह ) यह बात अन्य इतिहास आदि में प्रसिद्ध है ॥ ५ ॥

इति द्वितीय खण्डस्य भाषाभाष्यं समाप्तम् ॥ २ ॥

* अथ तृतीयः खण्डः *

**वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति * ॥ १ ॥**

वायुः । वाव । संवर्गः । यदा । वै । अग्निः । उद्वायति । वायुम् । एव । अप्येति । यदा । सूर्यः । अस्तम् । एति । वायुम् । एव । अप्येति । यदा । चन्द्रः । अस्तम् । एति । वायुम् । एव । अप्येति ॥ १ ॥

* इस प्रकरण के समान ही वर्णन बृहदारण्यकोपनिषद् प्रथमाध्याय पञ्चम ब्राह्मण २१ वें प्रवाक से लेकर समाप्ति पर्य्यन्त देखो । वहां वायु और प्राण को अधिदैवत और अध्यात्मोपासना में श्रेष्ठ कहा गया है यथा "स यथैषां प्राणानां मध्यमः प्राणः । एवमेतासां देवतानां वायुः । निम्लोचन्ति ह्यन्या देवताः । न वायुः । सैषाऽनस्तमिता देवता यद्वायुः । २२ । अथैष श्लोको भवति । यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छतीति । प्राणाद्वा एष उदेति । प्राणेऽस्तमेति । तं देवाश्चक्रिरे धर्म्मᳬ स एवाद्य स उ श्व इति । यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं चरेत् । प्राण्याच्चैवपान्याच्च" इत्यादि अर्थ-(यथा) जैसे (एषाम्+प्राणानाम्) इन इन्द्रियों में (सः+मध्यमः+प्राणः) वह मध्यम प्राण श्रेष्ठ है ( एवम् ) वैसे ही ( एतासाम्+देवतानाम् ) अग्नि सूर्य्य चन्द्र आदि देवताओं के मध्य ( वायुः ) वायु है ( हि ) क्योंकि ( अन्याः+देवताः ) अन्य देवता ( निम्लोचन्ति ) अस्त=विनष्ट होते हैं परन्तु ( न+वायुः० ) वायु अस्त नहीं होता ( अथैषः+श्लोकः+भवति ) इस विषय में एक श्लोक है ( यतः+च+उदेति+सूर्य्यः ) सूर्य्य जहां से उदित होता है ( अस्तम्+यत्र+च+गच्छति ) और जहां अस्त होता है । सूर्य्य कहां से और कहां उदित और अस्त होता है सो कहते हैं ( प्राणाद्+वै+एषः+उदेति ) प्राण से ही यह सूर्य आदि उदित होते हैं ( प्राणे+अस्तम्+एति ) प्राण में ही अस्त होते हैं ( ते+देवाः० ) इसी को देव=विद्वद्गण धर्म्म=पूज्य मानते थे । वही आज वही कल रहेगा । इत्यादि प्रकरण देखो । यहां अलङ्कार से वर्णन करते हुए वायु और प्राण नामधारी ईश्वर के ही गुण दिखलाते हैं । प्रदान वदेव तदुक्तम् । वेदान्त सू० ३ । ३ । ४ ३ । इस सूत्र के ऊपर श्रीशङ्कराचार्य्य का विचार देखो ॥

भाष्यम्—वायुरिति । वावशब्द एवार्थः । वायुर्ब्रह्म । सर्वेषां गतिप्रदम् । संवर्गः संवर्जनात्संग्रहणात्संग्रसनाद्वा संवर्गः । वायुर्वाव । वायुः सर्वगतिप्रद ईश्वरः । वाव एव । संवर्गः । संग्रहकृद् ग्रासयिता भक्षयितेत्यर्थः । कथं तस्य संवर्गत्वमित्याह । यदा यस्मिन् काले । वै निश्चितम् अग्निर्दाहकशक्तिविशेषः पदार्थानाम् । उद्वायति । उद्वासनं प्राप्नोति उपशाम्यततीयर्थः । तदा । वायुमेव । ब्रह्मैव अप्येति अप्ययं प्रलयं प्राप्नोति । सृष्टयवसाने परमविकरालाग्निज्वाला पदार्थेभ्यः समुत्थाय सर्वाणि वस्तूनि भस्मसात्कृत्वा स्वयमुपशाम्यति । विषयाभावात् । अत्र शंका भवति । ननु आधारीभूतपदार्थाभावादुपशान्तोऽग्निः क्व विलीयते । स्वकारण इति चेत् । किं तस्य कारणमिति । अग्नि परमाणुर्नित्य इतिचेत् । स च प्रमाणुः क्व तिष्ठति । सर्वत्रगे वियदवलम्बिनि वाह्ये नित्ये वायाविति चेत् । स च किमाधारोऽस्ति । इति पृष्टे सर्वं ब्रह्मणि वाव पर्यवसाने समास्ते । इत्येवमेव वद्यन्ति सूरयः । अतः सर्वेषामीश्वर एवाधारोस्तीत्यवधार्य्यते । अत उक्तमग्निर्वायुमप्येति वायुरत्र ब्रह्मवाच्येव । प्रकरणाद् वक्ष्यमाणनिर्धारणाच्च । तथैव । यदा सूर्योऽस्तमेति विनश्यति तदा वायुमेवाप्येति ब्रह्मण्येवाप्ययं प्राप्नोति । यदा चन्द्रोऽस्तमेति । वायुमेवाप्येति ब्रह्मण्येवलीयते । द्वितीयोऽर्थः—वायुर्वाह्योवायुर्मरुदित्यर्थः । सर्वे हि पदार्था वायुमाश्रित्य तिष्ठन्ति । यत्र वायुलेशो न विद्यते । तत्र क्षणमपि वह्निज्वाला प्रकाशयितुं न पारयति । अतोग्निर्वा सूर्यो वा चन्द्रो वा यदास्तं विनाशं प्राप्नोत्यवसाने तदा वाह्ये वायावेव प्रविलीयन्ते । प्रत्यहं दृश्यते प्रदीप्तः प्रदीपः क्षणे क्षणे उपशम्योपशम्य क्व याति । वायुमेव प्रविशत्यसंदिग्धमेतत् । इत्थं सर्वे पदार्था वाय्वाधारा विज्ञेयाः । उत्तरत्राप्येवमूह्यम् ॥ १ ॥

अनुवाद—निश्चय वायु ( ब्रह्म ) ही संवर्ग है । निश्चय, जब अग्नि उपशान्त होती है तब वायु में ही लीन होती है । निश्चय जब सूर्य विनष्ट होता है तब वायु में ही लीन होता है । निश्चय, जब चन्द्र विनष्ट होता है तब वायु में ही लीन होता है ॥ १ ॥

पदार्थः-( वायुः ) सबों का गतिप्रद ईश्वर ( वाव ) ही ( संवर्गः ) ग्रसन करने वाला है ( यदा ) जब ( वै ) निश्चय ( अग्निः ) पदार्थोंकी दाहक शक्ति (उद्वायति) उपशान्ति को प्राप्त होती है । तब ( वायुम्+एव ) ईश्वर में ही ( अप्येति ) लीन होती हैं ( यदा ) जब ( सूर्यः ) सूर्य ( अस्तम् ) विनाश को ( एति ) प्राप्त होता है तब ( वायुम्+एव+अप्येति ) ईश्वर में ही प्रलीन होता है ( यदा ) जब ( चन्द्रः+ अस्तम्+एति ) चन्द्र विनाश को प्राप्त होता है तब ( वायुम्+एव+अप्येति ) ईश्वर में ही लीन होता है ॥ १ ॥

भाष्याशयः—वायु—ईश्वर और वाह्यमरुत को वायु कहते हैं यहां वायु शब्द केवल ब्रह्म वाचक ही है । क्योंकि प्रकरण और वक्ष्यमाण विशेषणों से वही स्थिर होता है हम प्रत्यक्ष देखते हैं कि यह वाह्यवायु ( हवा ) सबों को गति देता है और सब इसी में लीन होता है । तद्वत् सम्पूर्ण ब्रह्माण्ड की गति देने वाला केवल एक ब्रह्म ही है । और अन्त में भी सब पदार्थ उसी में लीन होता है । ऐसा वायु शब्द द्वारा ईश्वर की उपासना करे । संवर्ग—यहां संवर्ग विद्या का आरम्भ हुआ है । जो अपने में सबों का संग्रह करले अथवा जो ग्रसन करे अर्थात् खा जाय अथवा अपने में मिला ले उसे संवर्ग कहते हैं ॥ १ ॥

**यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति । वायुर्ह्येवै-तान्सर्वान्संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥**

यदा । आपः । उच्छुष्यन्ति । वायुम् । एव । अपियन्ति । वायुः । हि । एव । एतान् । सर्वान् । संवृङ्क्ते । इति । अधिदैवतम् ॥ २ ॥

भाष्यम्—यदेति । यदा यस्मिन् काले । आपः जलानि । उच्छुष्यन्ति उच्छोषमाप्नुवन्ति विनश्यन्ति । तदा । वायुमीश्वरमेवापियन्ति प्रविशन्ति । हि यतः । वायुरेव ब्रह्मैव । एतान् अग्निप्रभृतीन् सर्वान् । संवृङ्क्ते संगृह्णाति संहरति स्वस्मिन् । इत्यधिदैवतम् ॥२॥

अनुवाद—जब जल शुष्क होता है तो वायु में ही प्रलीन होता है क्योंकि वायु ही इन सबों का अपने में संहार करता है । इति अधिदैवत ॥ २ ॥

पदार्थः—( यदा ) जब ( आपः ) जल ( उच्छुष्यन्ति ) सूखता है वा विनष्ट होता है । तब ( वायुम्+एव+अपियन्ति ) ब्रह्म में ही नाश को प्राप्त होता है ( हि ) क्योंकि ( वायुः+एव ) वायु ही ब्रह्म ही ( एतान्+सर्वान् ) इन सब अग्नि, सूर्य, चन्द्र और जलका ( संवृङ्क्ते ) अपने में संहार करता है ॥ २ ॥

**अथाध्यात्मं-प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान् संवृङ्क्त इति ॥ ३ ॥**

अथ । अध्यात्मम् । प्राणः । वाव । संवर्गः । सः । यदा । स्वपिति । प्राणम् । एव । वाग् । अप्येति । प्राणम् । चक्षुः । प्राणम् । श्रोत्रम् । प्राणम् । मनः । प्राणः । हि । एव । एतान् । सर्वान् । संवृङ्क्ते । इति ॥ ३ ॥

भाष्यम्-अथेति । अधिदैवतसंवर्गोपासन दर्शनानन्तरम् अध्यात्ममात्मनि संवर्गोपासन दर्शनामिदमुच्यते । अस्मिञ्छरीरे मुख्यः प्राण एव संवर्गः सर्वेषां संग्रहीता ग्रसयिता । तद्यथा । यदा । यस्मिन् काले स पुरुषः । स्वपिति सुषुप्त्यावस्थां प्राप्नोति । तदा वाग् वागिन्द्रियविषयः । प्राणमेवाप्येति प्राण एव प्रलयं प्राप्नोति । तथैव । चक्षुः । श्रोत्रम् । मनः । एतानि त्रीण्यपि । प्राणमेवापियन्ति । हि यतः । प्राण एव । एतान् सर्वान् वागादिविषयान् । संवृङ्क्ते संहरति स्वस्मिन् संनिवेशयति । प्राण शब्दोपि द्व्यर्थः । ईश्वरः शरीरान्तःसंचारी वायुश्च । यथास्मिँल्लघौ कलेवरे मुख्ये प्राणे सर्वाणीन्द्रियाणि समासते । तथैव ब्रह्माण्डशरीरे स्थिते प्राणवाच्ये ब्रह्मण्येवावसाने जगद्व्यापाराः समासते । अतः प्राणत्वेन ब्रह्मोपासीतेत्यर्थः ॥ ३ ॥

अनुवाद--अब अध्यात्म कहा जाता है । प्राण ही संवर्ग है । जब वह ( पुरुष ) सोता है । तब वचन प्राण में ही लीन होता है । प्राण में ही चक्षु, प्राण में ही श्रोत्र, प्राण में ही मन, लीन होता है क्योंकि इन सबों का प्राण ही अपने में संहार करता है । इति ॥ ३ ॥

पदार्थः-(अथ) अधिदैवत संवर्गोपासन कथन के अनन्तर (अध्यात्मम्) अध्यात्म संवर्गोपासन कहा जाता है ( प्राणः ) मुख्य प्राण ( वाव ) ही (संवर्गः) ग्रसन करता है ( सः ) वह पुरुष ( यदा ) जब ( स्वपिति ) सुषुप्ति अवस्था को प्राप्त होता है तब ( वाग् ) वागिन्द्रिय विषय ( प्राणम्+एव ) प्राण को ही ( अप्येति ) प्राप्त होता है । इसी प्रकार (चक्षुः) नेत्र विषय (प्राणम्) प्राण को ही (श्रोत्रम्) श्रोत्र विषय ( प्राणम् ) प्राण को ही (मनः) मन विषय ( प्राणम् ) प्राण को ही प्राप्त होता है ( हि ) क्योंकि (प्राणः) प्राण ही ( एतान्+सर्वान् ) इन सकल इन्द्रिय विषयों को ( संवृङ्क्ते ) अपने में संहार करता है ॥ इति ॥ ३ ॥

भाष्याशयः-प्राण शब्द भी यहां दो अर्थों का प्रतिपादक है । एक तो ईश्वर दूसरा शरीरान्तःसंचारी वायु । जैसे सुषुप्त्यवस्था में इस लघु कलेवर में स्थित मुख्य प्राण में ही सब इन्द्रिय व्यापार प्रलीन होते हैं । वैसे ही ब्रह्माण्डरूप शरीरस्थ ब्रह्म में ही सम्पूर्ण जगत् व्यापार ब्रह्म में प्रविष्ट होते हैं । अतः प्राण शब्द द्वारा ईश्वर की उपासना करनी चाहिये । यह अध्यात्म वर्णन है । और प्राण शब्द वायुवत् ईश्वर वाचक है ऐसा प्रकरण और वक्ष्यमाण विशेषणों से अवधारण करे ॥ ३ ॥

**तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु॥४॥**

तौ । वै । एतौ । द्वौ । संवर्गौ । वायुः । एव । देवेषु । प्राणः । प्राणेषु ॥ ४ ॥

भाष्यम्–ताविति । उपसंहरति । तौ वै एतौ द्वौ संवर्गौस्तः । देवेषु सूर्य्यादिषु । वायुर्वायुनाम्ना प्रसिद्धः । प्राणेषु वागादिष्विन्द्रियेषु । प्राणः प्राण नाम्ना विख्यातः । अधिदैवताध्यात्मभेदेन संवर्गस्य द्वैविध्यम् । न तु यथार्थतयाद्विधात्वम् ॥ ४ ॥

अनुवाद—निश्चय, वे ये दो संवर्ग हैं देवों में वायु ही और प्राणों में प्राण ॥४॥

पदार्थः–( तौ ) वे ( वै ) निश्चय ( एतौ ) ये ( द्वौ ) दो ( संवर्गौ ) संवर्ग हैं ( देवेषु ) देवों में तो ( वायुः+एव) वायु नामसे ही और (प्राणेषु) वाग् आदि इन्द्रियों में ( प्राणः ) मुख्य प्राण नाम से वह संवर्ग प्रसिद्ध है ॥ ४ ॥

भाष्याशयः–यहां उपसंहार करते हैं । यथार्थ में दो संवर्ग नहीं हैं किन्तु अधि दैवत और अध्यात्म भेद से संवर्ग दो प्रकार के हैं यथार्थ में नहीं ॥ ४ ॥

## अथ ह शौनकञ्च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे । तस्मा उ ह न ददतुः ॥ ५ ॥

अथ । ह । शौनकम् । च । कापेयम् । अभिप्रतारिणम् । च । काक्षसेनिम् । परिविष्यमाणौ । ब्रह्मचारी । बिभिक्षे । तस्मै । उ । ह । न । ददतुः ॥ ५ ॥

भाष्यम्–अथेति । हेतीतिहासार्थः । कदाचित् । कापेयं कपिगोत्रप्रभवम् । शौनकं शुनकस्यापत्यं शौनकस्तंशौनकनामानम् । तथा काक्षसेनिं कक्षसेनस्यापत्यंकाक्षसेनिस्तम् । अभिप्रतारिणमभिप्रतारिनामानञ्च प्रति । कश्चिद् ब्रह्मचारी । बिभिक्षे याचितवान् । कथं भूतौ तौ । परिविष्यमाणौसूपकारैर्भोजनार्थं विविधानि पक्वान्यन्नानि भोज्यमानौ । अर्थात्तौ यदा भोजनायोपविष्टावास्ताम् । तदैव कश्चिद् ब्रह्मचारी तौ बिभिक्ष इत्यर्थः । तस्मै ब्रह्मचारिणे उ ह न ददतुर्भिक्षां न ददतुर्नदत्तवन्तौ । हेति प्रसिद्धमेतत् ॥ ५ ॥

अनुवाद—कदाचित् खाते हुए कापेय शौनक और काक्षसेनि अभिप्रतारी-नामवाले किन्हीं राजाओं से एक ब्रह्मचारी ने भिक्षा मांगी । उस को उन्होंने भिक्षा नहीं दी ॥ ५ ॥

पदार्थः–( अथ ) अनन्तर ( ह ) कदाचित् ( परिविष्यमाणौ ) जिन को भोजनार्थ विविध अन्नादि सूपकार देरहे हैं। ऐसे जो (कापेयम् ) कपिगोत्रोत्पन्न (शौनकम्+च) शौनक और ( काक्षसेनिम् ) कक्षसेन का पुत्र ( अभिप्रतारिणम् ) अभिप्रतारी इन दोनों से ( ब्रह्मचारी ) किसी ब्रह्मचारी ने ( बिभिक्षे ) भिक्षा मांगी परन्तु ( तस्मै+इह ) उस ब्रह्मचारी को ( न+ददतुः ) उन्होंने भिक्षा नहीं दी ॥ ५ ॥

**स होवाच—महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय ! नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥**

सः । ह । उवाच । महात्मनः । चतुरः । देवः । एकः । कः । सः । जगार । भुवनस्य । गोपाः । तम् । कापेय । न । अभिपश्यन्ति । मर्त्याः । अभिप्रतारिन् । बहुधा । वसन्तम् । यस्मै । वै । एतद् । अन्नम् । तस्मै । एतद् । न । दत्तम् । इति ॥ ६ ॥

भाष्यम्—सहेति । स ह प्रसिद्धो ब्रह्मचारी तावुवाच । एकोमुख्यो देवो द्योतनो जगताम् कः सुखस्वरूपःप्रजापतिरीश्वरो योऽसौ वर्तते स वायुनामा च प्राणनामा । चतुरो महात्मनोमहान-ग्निः सूर्यश्चन्द्र आपश्चेति एतान् महतश्चतुरो देवान् । वाक् चक्षुः श्रोत्रं मनश्चेति महान्ति चत्वारीन्द्रियाणि । जगार ग्रसितवान् । कथं भूतः स देवः । भुवनस्य गोपाः भवन्त्यस्मिन् भूतानीति भुवनं भूरादिः सर्वलोकस्तस्य गोपा गोपायिता रक्षितेत्यर्थः । हे कापेय ! तथा हे अभिप्रतारिन् ! बहुधा बहुषु स्थानेषु वसन्तंविद्यमानम् । तं 'क' नामानं प्रजापतिमीश्वरम् । मर्त्या मरणधर्म्माणोऽविवेकिनो जना वा । नाभिपश्यन्तिनावलोकयन्ति । पुनः यस्मै ब्रह्मणे कनाम्ने । वै निश्चितम् । एतत्सर्वमन्नं वर्त्तते । जगति सर्वमन्नं ब्रह्मार्थमेवास्ति । तस्मै ब्रह्मणे । युवाभ्याम् । एतदन्नम् । न दत्तमिति । नह्यात्मार्थं केवलमहंभिक्षे । किन्त्वहं ब्रह्माधीये । ब्रह्मवचनानि सर्वत्र प्रख्यापयितुं ब्रह्मपठामि तेन ब्रह्मणो रक्षा भवति । यदि मह्यं युवां भिक्षांनदत्थ स्तेन युवां ब्रह्महननं कुरुथः । इदमपि जानीतं ब्रह्मणो रक्षणैनैव सर्वमन्नं रक्षितं भवति । अतो वास्तवेन ब्रह्मैव सर्वमन्नं ग्रहीतु मर्हति । अहन्तु तदेवाधीये । अतो मह्य-मददानौ युवां ब्रह्मणे न दत्थः । अहोयुवयो रविवेकः ॥ ६ ॥

अनुबादः—उन दोनों से वह ब्रह्मचारी कहने लगा कि जो भुवन का रक्षक एक देव सुख स्वरूप 'क' नामधारी ईश्वर है । वह अग्नि, सूर्य, चन्द्र और जल इन चारों महादेवों को और वाग्, चक्षु, श्रोत्र और मन इन चारों महाइन्द्रियों को खायाकरता है । हे कापेय ! तथा हे अभिप्रतारी ! सर्वत्र रहते हुए उस (ब्रह्म) को मर्त्यजन नहीं देखते हैं जिसी के लिये यह अन्न है । उस को यह अन्न तुम दोनों ने नहीं दिया ॥६॥

पदार्थः—(सः+ह) वह ब्रह्मचारी शौनक और अभिप्रतारी से (उवाच) कहने लगा कि जो ( भुवनस्य ) संपूर्ण विश्व का ( गोपाः ) रक्षक ( एकः) एक ही ( कः ) सु-

खस्वरूप आनन्दप्रद ( देवः ) सर्व प्रकाशक ईश्वर है ( सः ) वह ( महात्मनः ) बड़े ( चतुरः ) चारों को अर्थात् अग्नि, सूर्य, चन्द्र, और जल इन चारों देवों को वाणी, चक्षु, श्रोत्र तथा मन इन चारों बड़े इन्द्रियों को (जगार) खाया करता है ( कापेय) हे कापेय! तथा ( अभिप्रतारिन् ) हे अभिप्रतारिन्! (मर्त्याः) अज्ञानी जन( बहुधा+वसन्तम् ) सर्वत्र वसते हुए ( तम् ) उस सुखस्वरूप देव को ( न+अभिपश्यन्ति ) नहीं देखते हैं। हे राजन्! ( यस्मै ) जिसके लिये ( वै ) निश्चय ( एतद्+अन्नम् ) यह अन्न है ( तस्मै ) उसके लिये ( एतद् ) यह अन्न ( न+दत्तम् ) नहीं दिया ॥ ६ ॥

भाष्याशयः- ब्रह्मचारी कहता है कि मैं केवल अपने लिये ही अन्न नहीं मांगता हूं किन्तु मैं वेद का अध्ययन कर रहा हूं। ब्रह्म के वचनों को सर्वत्र प्रख्यात करने के लिये मैं वेद पढ़ रहा हूं। उससे वेद की रक्षा होती है जो ईश्वर की वाणी है, इस अवस्था में यदि मुझको आप दोनों भिक्षा नहीं देते हैं तो उससे आप दोनों ब्रह्म का हनन कर रहे हैं। आप यह भी जानें कि यह ब्रह्म की ही रक्षा से सर्व अन्न होते हैं अतः यथार्थ में उसी के लिये अन्न है। मैं उसी का अध्ययन करता हूं तो मुझे अन्न न देना ब्रह्म को अन्न न देने के तुल्य है ॥ ६ ॥

**तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायाऽऽत्मा देवानां जनिता प्रजानाꣳ हिरण्य दꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानोयदन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे । दत्तास्मैभिक्षामिति ॥ ७ ॥**

तद् । उ । ह । शौनकः । कापेयः । प्रतिमन्वानः । प्रत्येयाय । आत्मा । देवानाम् । जनिता । प्रजानाम् । हिरण्यदंष्ट्रः । बभसः । अनसूरिः । महान्तम् । अस्य । महिमानम् । आहुः । अनद्यमानः । यत् । अनन्नम् । अत्ति । इति । वै । वयम् । ब्रह्मचारिन् । आ । इदम् । उपास्महे । दत्त । अस्मै । भिक्षाम् । इति ॥ ७ ॥

भाष्यम्—तदिति। ह प्रसिद्धः शौनकः कापेयः। तद्+ उतदेव पूर्वोक्तं ब्रह्मचारिवचनं प्रतिमन्वानो मनसा विचारयन् सन्। ब्रह्मचारिणं प्रत्येयायाऽऽजगाम। आगत्य ब्रह्मचारिणमुवाच । हे ब्रह्मचारिन्! यं त्वमवोचोमहात्मनश्चतुरोदेव इत्यादिना। तं वयन्तु पश्यामः। कथमिति। स 'क' नामा प्रजापतिरात्मास्ति। स्थावराणां जङ्गमानाञ्च स एवात्मा विद्यते।

"सूर्य्य आत्मा जगतस्तस्थुषश्चेति प्रमाणमपि । पुनर्देवानांसूर्यचन्द्रादीनां सर्वेषां देवानाम्। जनितोत्पादयिता स एवास्ति । पुनः प्रजानां स्थावरजङ्गमादीनांभक्षणे इतिवाक्यशेषः । हिरण्यदंष्ट्रोऽमृतदंष्ट्रोऽभग्नदन्त इतियावत् । पुनः । बभसोभक्षणशीलः । पुनः । अनसूरिः सूरिर्मेधावीनसूरिरसूरिस्तत्प्रतिषेधेऽनसूरिः सूरिरेवेत्यर्थः । इदृशःसोस्ति । तं वयं जानीमः । हे ब्रह्मचारिन् ! ब्रह्मविदोजनाः । अस्यब्रह्मणो महान्तं महिमानं विभूतिम् । आहुः कथयन्ति । यद्यस्मात् । अनद्यमानःस्वयमन्यैरभक्ष्यमाणः सन् । अनन्नं नान्नमित्यनन्नमत्तुमयोग्यमप्यग्निवागादिदेवतारूपमन्नम् । अत्ति भुङ्क्ते । इति । ईदृशं ब्रह्मास्तीति वयं जानीमः । हे ब्रह्मचारिन् ! वै निश्चितमेव । इदं सर्वत्रभासमानंब्रह्म । वयम् । आ+उपास्महे । आसमन्तात् । सर्वथैवोपास्मह इत्यर्थः इति ब्रह्मचारिणं प्रति कथयित्वा स्वकीयान् किंकरान् कथयति । हे किंकराः! अस्मै ब्रह्मचारिणे भिक्षां यूयं दत्त । इति ब्रह्मचारिन्नेदमित्यत्र ब्रह्मचारिन्+न+इदम् इति पदच्छेदं कृत्वा । इदं ब्रह्म नोपास्महे परमेवब्रह्म वयमुपास्महे । इत्येवं व्याख्यानं कुर्वन्ति केचित् तन्नसमीचीनम् ॥ ७ ॥

अनुवाद—शौनक कापेय ब्रह्मचारी के उसी पूर्वोक्त वचन को मन में विचारते हुए ब्रह्मचारी के निकट आए और बोले कि वह आत्मा है। देवों का उत्पादन करने वाला है । प्रजाओं का अभग्न दन्तवाला भक्षक है । परमज्ञानी है । इसकी महान् महिमा को ब्रह्मज्ञानी लोग कहते हैं । जिस कारण स्वयं अनद्यमान हो अनन्न को भी भक्षण करता है । हे ब्रह्मचारिन्! निश्चय, हम लोग इस की उपासना करते हैं। हे किङ्करो! इस ब्रह्मचारी को भिक्षा दो ॥ ७ ॥

पदार्थः—( शौनकः+कापेयः ) कापेय शौनक ( तद्+उ+ह ) ब्रह्मचारी के उस वचन को ( प्रतिमन्वानः ) मन में पुनः २ विचारते हुए (प्रत्येयाय) ब्रह्मचारी के निकट आये और आकर वक्ष्यमाण रीति से बोले कि हे ब्रह्मचारी ! हम लोग उस'क' नामधारी ब्रह्म को जानते हैं । कैसे ! सो आगे दिखलाते हैं ( आत्मा ) वह ब्रह्म वायु प्राण इत्यादि नामवाला सकल स्थावर और जङ्गम का आत्मा है और ( देवानाम्+जनिता ) सूर्य, चन्द्र, अग्नि जलादि देवों का उत्पन्न करने वाला है और ( प्रजानाम् ) स्थावर जङ्गमादि सकल प्राणियों का ( बभसः ) भक्षक है । पुनः वह कैसा है ( हिरण्य दंष्ट्रः ) अभग्नदन्त अर्थात् जिसके दांत कभी भी टूटने वाले नहीं हैं अर्थात् अजर है । पुनः ( अनसूरिः ) परमविज्ञानी है । पुनः ( अस्य ) इसकी ( महान्तम् ) महान् (महिमानम् ) महिमा विभूति को ( आहुः ) ब्रह्मविद् लोग कहते हैं ( यत् ) जिस कारण ( अनद्यमानः ) स्वयं अभक्ष्यमाण होता हुआ ( अनन्नम् ) जो अन्न नहीं है अर्थात्

अग्नि, सूर्य, चन्द्र, जल आदिक तथा वाणी, चक्षु, श्रोत्र, मन आदिकरूप अन्न को ( अत्ति ) खाता है ( इति ) ऐसी इसकी महिमा है ( ब्रह्मचारिन् ) हे ब्रह्मचारिन्! (वै) निश्चय ( वयम् ) हम लोग (इदम्) इसकी (आ+उपास्महे) अच्छी तरह उपासना करते हैं इतना ब्रह्मचारी से कह कर शौनक कापेय अपने किङ्करों से कहते हैं कि हे किङ्करो! (अस्मै) इस ब्रह्मचारी को ( भिक्षाम् ) भिक्षा ( दत्त ) दो इति ॥ ७ ॥

**तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दशकृतꣳ सैषा विराडन्नादी तयेदꣳ सर्वं दृष्टꣳ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥**

तस्मै । उ । ह । ददुः । ते । वै । एते । पञ्च । अन्ये । पञ्च । अन्ये । दश । सन्तः । तत् । कृतम् । तस्मात् । सर्वासु । दिक्षु । अन्नम् । एव । दशकृतम् । सा । एषा । विराट् । अन्नादी । तया । इदम् । सर्वम् । दृष्टम् । सर्वम् । अस्य । इदम् । दृष्टम् । भवति । अन्नादः । भवति । यः । एवम् । वेद । यः । एवम् । वेद ॥८॥

भाष्यम्—तस्मा इति । कापेयेन शौनकेनाभिहिताः किङ्कराः । तस्मै उ ह तस्मै ब्रह्मचारिणे भिक्षाम् । ददुर्दत्तवन्तः । इदानीमन्नं प्रशंसन्ति । ते वै एते ये ग्रस्यन्तेऽग्न्यादयो यश्चतेषांग्रसितावायुः । एते पञ्च । अन्ये वागादिभ्योऽन्ये । अग्निसूर्य्यचन्द्रापोभोज्याश्चत्वारः । वायुर्भक्षकश्चपञ्चमः । तथाच । अन्ये पञ्च अग्न्यादिभ्योऽन्ये वाक् चक्षुः श्रोत्रं मनश्चभक्ष्याश्चत्वारः पदार्थाः । प्राणोभक्षकश्चपञ्चमः सर्वे मिलित्वा दश भवन्ति । एते दश । सन्तो विद्यमाना सर्वत्रैव । तत्कृतम् । तत्सर्वं कृतमित्यभिधीयते । कृतमुत्कृष्टं द्यूतमिववा । दिशोऽपि दशैवसन्ति । अतोदिग्भिः सार्धमलङ्कारेणोपमापयति तस्मादेव कारणात्सर्वासु दशसु दिक्षु । अन्नमेव प्रथमं जीवनाधारत्वेन प्रशस्यते । यतो हि तदन्नं दशकृतं दशसु दिक्षु कृतं विहितं भवति । सा । विधेय प्रधान्यात्स्त्रीत्वम् । तदन्नमेव विराट् निगद्यते । सर्वत्रैव या विराजते सा विराट् । वेदे दशाक्षरा विराड् वृत्तिरपि भवति । सा विराट् अन्नादी अन्नादिनी अपि । तया विराजा अन्नेन द्वारभूतेन । इदं सर्वं दृष्टं भवति । अन्नं विना किमपि न दृश्यत इत्यर्थः । फलं निर्दिशति । यो ब्रह्मविद् । एवं वेद एवं जानाति । अस्यापि ब्रह्मविदः । इदं सर्वं दृष्टं भवति । सोऽपि । अन्नादी भवति । द्विरभ्यास उपासनासमाप्त्यर्थः ॥८॥ इति तृतीय खण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद-उन्होंने उसको भिक्षा दी । वे अन्य पांच ( अग्नि, सूर्य, चन्द्र, जल और वायु ) और अन्य पांच ( वाग्, चक्षु, श्रोत्र, मन और प्राण ) ये मिलकर दश होते हैं। वे कृत सदृश हैं। उस हेतु सब दिशाओं में अन्न ही दशकृत है। वह यह विराट् है। जो अन्नादी भी है। उस से यह सब देखा जाता है। इस को यह सब दृष्ट हो जाता है और यह अन्नाद होता है जो ऐसा जानता है जो ऐसा जानता है ॥ ८ ॥

पदार्थः-जब कापेय शौनक ने अपने दासों को भिक्षा प्रदानार्थ आज्ञा दी तब (तस्मै+उ+ह ) उस ब्रह्मचारी को ( ददुः ) उन दासों ने भिक्षा दी आगे अन्न की प्रशंसा करते हैं ( ते+वै ) वे ( एते ) ये ( अन्ये+पञ्च ) वागादि से अन्य पांच अग्नि सूर्य्यादि और ( अन्ये+पञ्च) अग्न्यादि से अन्य पांच वागादि ( दश+सन्तः ) ये सब मिल कर १० होते हैं । ये दश ( तत्+कृतम् ) उस कृत के समान हैं ( तस्मात् ) उस हेतु ( सर्वासु ) सब (दिक्षु ) दिशाओं में ( अन्नमेव ) अन्न ही (दशकृतम् ) दश कृत है ( सा+एषा ) वह यह ( विराट् ) विराट् कहलाती है ( अन्नादी ) जो विराट् अन्नादी भी है ( तया ) विराट् रूप अन्न के द्वारा ( इदम् ) यह ( सर्वम् ) सब ( दृष्टम् ) देखा जाता है । क्योंकि अन्न विना कुछ भी भासित नहीं होता। आगे फल कहते हैं (अस्य) इस उपासक का ( इदम्+सर्वम्+दृष्टम्+भवति ) यह सर्व दृष्ट होता है (यः+एवम्+वेद ) जो ऐसा जानता है ( य एवं वेद ) जो ऐसा जानता है ॥ ८ ॥

भाष्याशय=कृत-प्राचीनकाल में एक प्रकार की क्रीड़ा होती थी जिस में १०पात्र होते थे। चार पात्र ऐसे होते थे जिनके ऊपर (४) चार का अङ्क लिखा रहता था । उन चारों पात्रोंका एक नाम "कृत" । तीन पात्रों के ऊपर तीन का (३) अङ्क रहता । उन तीनों का नाम "त्रेता" । दो पात्रों के ऊपर दोका (२) अङ्क रहता था । उन दोनोंका नाम "द्वापर" और एक पात्र के ऊपर एकका (१) अङ्क रहताथा उसका नाम "कलि" होता था । इस प्रकार ४+३+२+१=१० दश पात्र होते थे । इस क्रीड़ा का नाम भी " कृत " ही था । यहां पांच अध्यात्म और पांच अधिदैवत दश देव हैं । अतः इन देवों की उपमा कृत से दीगई है ॥ इति संक्षेपः ॥ इतितृतीय खण्डस्य भाषाभाष्यं समाप्तम्॥३॥

* अथ चतुर्थः खण्डः *

**सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति ! विवत्स्यामि। किंगोत्रोन्वहमस्मीति ॥ १ ॥**

सत्यकामः । ह । जाबालः । जबालाम् । मातरम् । आमन्त्रयाञ्चक्रे । ब्रह्मचर्यम् । भवति । विवत्स्यामि । किंगोत्रः । अनु (नु) । अहम् । अस्मि । इति ॥ १ ॥

भाष्यम्—सत्यकाम इति । ऐतिह्ये हकारःप्रसिद्धः । तेन पुरातनी लोकप्रसिद्धाऽऽख्यायिकाऽऽरभ्यते न काऽपि नूतनेति हशब्देन ध्वन्यते । जाबालोजबालाया एतन्नाम्न्याः स्त्रिया अपत्यं जाबालः । जनकस्यानुद्देशान्मातृनाम्नैव परिचेय इत्यर्थः । सत्यकामोनाम्ना सत्यकामः । सत्येब्रह्मणि कामो यस्य सः । यद्वा । सत्यःसत्ययुक्तःकामो यस्य सः । एतन्नामकः कश्चित्कुमारः । जबालांजबालानाम्नीं स्वीयां मातरम् । आमन्त्रयाञ्चक्रे आमन्त्रितवान्पृष्टवान् । हे भवति ! हे पूजनीये मातः ! "भवतीति सम्बोधन पदम्" ब्रह्मचर्यस्वाध्यायाभ्यसनाय आचार्य्यकुले ब्रह्मचर्यं विवत्स्यामि करिष्यामि । अनेकार्थत्वादुपसर्गवशाच्च सकर्मकोऽत्र वसधातुर्गृह्यते । यद्वा । भवतीति क्रियापदम् । सत्यकामः पृच्छति । हे मातः ! बालकानां मुखाच्छ्रूयते । गुरुकुले वेदाध्ययनाय ब्रह्मचर्यं ब्रह्मचर्यनामकं व्रतं भवति । तदर्थं विवत्स्यामि । प्रवासंकरिष्यामि । त्वां परित्यज्य गुरुकुलं प्राप्य वासं करिष्यामीत्यर्थः । सोऽहं किंगोत्रोऽस्मि । इति । अनु । अन्वपृच्छादितिवाक्यशेषः । यद्वा । नु इतिप्रश्ने अर्थात् मम किं गोत्रमस्ति । कस्मिन् कुलेऽहमुत्पन्नोऽस्मि इति हे मातर्मांकथय । आचार्य्यो हि विज्ञातकुलगोत्रं माणवकमुपनीयाध्यापयतिस्मेति सत्यकामस्य किंगोत्रोहमस्मि इति प्रश्नस्य जिज्ञासा । यद्वा । सांप्रतिक व्यवहारवत्पुराप्याचार्य्यः कुलगोत्रादिकं पृच्छतिस्मेति जिज्ञासा । यद्वा । स्वकुलगोत्राऽऽगतविद्यायाः प्रथममध्ययनं कर्त्तव्यम् । तत्कुलादिपरिचयेनैव विधातुं समर्थोभविष्यामि गुरुश्चापि । इत्यतः प्रश्नस्यावकाशः ॥१॥

अनुवाद—सत्यकाम जाबाल ने अपनी माता जबाला से जिज्ञासा की कि हे भवति पूजनीय माता ! मैं ब्रह्मचर्य के लिये आचार्यकुल में वास करूंगा मेरा गोत्र क्या है? ॥१॥

पदार्थः—( ह ) यह शब्द इतिहास सूचक है अर्थात् प्रसिद्ध ही इतिहास यहां कहा जाता है ( जाबालः ) जबाला नाम की किसी स्त्री के पुत्र ( सत्यकामः ) सत्य-

---

१—( भवति ) यह सम्बोधन पद है । पूज्य, मान्य, आदरणीय आदि अर्थ होते हैं। "भवान्" ( आप ) इसीका बनता है । स्त्रीलिङ्ग के सम्बोधन में "भवति" होता है यद्यपि व्याकरण शास्त्र में कहीं२कहा गया है कि त्यदादिशब्दों का सम्बोधन नहीं होता है परन्तु यह एकदेशी सिद्धान्त है अथवा "भवति" को क्रिया पद मानने से भी अर्थ होसकता है ( ब्रह्मचर्य्यं भवति ) हे माता ! मैं सुनता हूं कि ब्रह्मचर्य्य नामक एक व्रत होता है ( विवत्स्यामि ) उसके लिये मैं प्रवास करूंगा इत्यादि योजना करनी ।

काम नामक एक कुमार ने ( मातरम्+जबालाम् ) माता जबाला से ( आमन्त्रयाञ्चक्रे जिज्ञासा की कि ( भवति ) हे परमपूजनीय माता ! ( ब्रह्मचर्यम् ) वेदाध्ययनार्थ ब्रह्मचारी सम्बन्धी व्रत को ( विवत्स्यामि ) करूंगा । सो हे जननि ! ( किं गोत्रः ) किस गोत्र वाला ( अहम् ) मैं ( अस्मि ) हूं ( अनु+इति ) इसबात को तू कह । अथवा ऐसा उसने पूछा । किसी की सम्मति से यहां 'नु' शब्द का प्रयोग है जो प्रश्न बाधक है और किन्हीं पुस्तकों में "नु" वा "अनु" नहीं है ॥ १ ॥

भाष्याशयः—जाबाल—पूर्व समय में प्रायः माता के नाम से पुत्र प्रसिद्ध हुआ करता था । सत्यकाम के पिता का पता भी नहीं था इस कारण भी सत्यकाम अपनी माता के नाम से ही पुकारा जाता था । जबाला उसकी माता का नाम है । संस्कृत में जबाला के पुत्र को जाबाल कहते हैं । गोत्र—आचार्य्य लोग माणवक के प्रथम कुल, गोत्र, शीलस्वभाव जान पश्चात् अध्ययन करावाया करते थे । इसी कारण सत्यकाम को निज गोत्र पूछना पड़ा । यद्वा । जैसे आजकल स्कूल में नाम जाति गोत्र आदि बालकों के पूछे जाते हैं तद्वत् पुरातन समय में भी कुलगोत्रादि का परिचय पूछते होंगे अतः गोत्र की जिज्ञासा हुई हो । यद्वा । निज गोत्र में प्रचलित विद्या का अध्ययन प्रथम करना चाहिये सो गोत्र जाने विना न तो मैं उसे पढ़ सकता हूं न आचार्य्यजी ही पढ़ा सकते हैं इस हेतु सत्यकाम जाबाल ने अपनी माता से गोत्र की जिज्ञासा की हो ॥ १ ॥

**साहैनमुवाच—नाऽहमेतद्वेद तात ! यद्गोत्रस्त्वमसि । बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे । साऽहमेतन्नवेद यद्गोत्रस्त्वमसि । जबाला तु नामाऽहमस्मि सत्यकामो नाम त्वमसि । स सत्यकाम एव जाबालो ब्र(ब्रु)वीथा इति ॥ २ ॥**

सा । ह । एनम् । उवाच । न । अहम् । एतद् । वेद । तात । यद्गोत्रः । त्वम् । असि । बहु । अहं । चरन्ती । परिचारिणी । यौवने । त्वाम् । अलभे । सा । अहम् । एतत् । न । वेद । यद्गोत्रः । त्वम् । असि । जबाला । तु । नाम । अहम् । अस्मि । सत्यकामः । नाम । त्वम् । असि । सः । सत्यकामः । एव । जाबालः । ब्रवीथाः । इति ॥ २ ॥

भाष्यम्—साहेति । हेतिहासेषु प्रसिद्धा सा जबाला । एनं निजपुत्रं सत्यकामं

प्रति । उवाच । हे तात ! प्रिय पुत्र ! यद्गोत्रो यद् गोत्रं यस्य स यद्गोत्रः । त्वमसि । एतदहं न वेद न जानामि । कस्मान्नवेत्सीति प्रत्युक्ताग्रे कथयति । बहु यथा तथा भर्तृगृहे आतिथेयं चरन्ती कुर्वन्ती । परिचारिणी परिचरणशीला सेवातत्परैवाहमासम् । अतः परिचरणचित्ततया गोत्रादिस्मरणे मम चेतो नाऽभूत् । प्राप्ते च यौवने त्वामलभे लब्धवत्यस्मि । तदैव ते पिता पञ्चत्वमगमत् । अहन्त्वनाथा संवृत्ता । शोकार्त्ता साहं गोत्रादिकं कमपि न पृष्टवती । यद्वा । परिचारिणी सेवकारिणी सती । अहं बहु । बहून् पुरुषान् इति यावत् । सामान्ये नपुंसकमेकवचनञ्चेति । चरन्ती सेवमाना । यौवने त्वामलभे त्वां जनितवत्यस्मि । साहं बहुपुरुषसंसर्गतया । एतत्तव गोत्रं न वेद यद्गोत्रस्त्वमसीति । तर्हि त्वं किमपि जानासि न वेति । एतदेवाहं जानामि । अहं तु जबाला नामास्मि जगति प्रसिद्धा त्वमसि सत्यकामो नाम । यदि तवाचार्य्यः कोऽपि पृच्छेत्त्वां नामगोत्रादिकम् । तर्हीदं वाच्यम् । अहं नागतः सत्यकामो जाबाल एवास्मि अर्थात् परमप्रसिद्धाया जबालयाः पुत्रोऽस्मि अतोनाहमप्रसिद्धोस्मि एतेनैव मम परिचयोज्ञातव्यः किं गोत्रादि जिज्ञासयेतिभावः । अनेन प्रकारेणाचार्य्यं प्रति स त्वं ब्रवीथा ब्रूहि ॥ २ ॥

अनुवादः—वह उससे बोली कि हे तात ! मैं यह नहीं जानती हूं कि किस गोत्र वाला तू है । मैं सेवकी होकर बहुत सेवा में लगी हुई थी । यौवन में मैंने तुझको प्राप्त किया । यद्वा । मैं सेवकी होकर बहुत ( पुरुषों ) की सेवा करती हुई यौवन में तुझको जनी । सो मैं यह नहीं जानती हूं कि किस गोत्र वाला तू है। हे तात! मेरा नाम जबाला है और तेरा नाम सत्यकाम है (यदि कोई आचार्य्य तेरे गोत्र आदि पूछे तो) तू यह कहना कि मैं निश्चय सत्यकाम जावाल हूं ॥ २ ॥

पदार्थः—( ह ) इतिहास में प्रसिद्धा ( सा ) वह जबाला ( एनम् ) इस अपने पुत्र से ( उवाच ) बोली ( न+अहम्+एतत्+वेद ) मैं इसको नहीं जानती हूं (तात) हे प्रिय पुत्र! ( यद्गोत्रः ) जिस गोत्र वाला अर्थात् जिस गोत्र का ( त्वमसि ) तू है । क्योंकि ( बहु ) स्वामी के गृह पर अनेक प्रकार की सेवा को ( चरन्ती ) करती हुई ( परिचारिणी+अहम् ) परिचारिणी सेवकी मैं थी (यौवने) यौवन अवस्था में (त्वाम्+अलभे ) तुझको मैंने पाया । यद्वा ( बहु ) बहुत पुरुषों की ( चरन्ती ) सेवा करती हुई ( परिचारिणी ) सेवकी ( अहम् ) मैं (यौवने) यौवनावस्था में ( त्वाम् ) तुझको (अलभे) जनी । अतः (सा+अहम्) वह सेवा करने वाली मैं (एतत्) यह (न+वेद) नहीं जानती हूं ( यद्गोत्रस्त्वमसि ) जिस गोत्र वाला तू है ( तु ) परन्तु (जबाला+नाम+अहमस्मि) जबाला नाम्नी मैं जगत् में प्रसिद्धा हूं और ( सत्यकामः+नाम+त्वमसि ) सत्य काम नामी

तू है ( सः ) वह तू ( सत्यकामः+एव+जाबालः) सत्यकाम जाबाल मैं हूं ऐसा ही पूछे जाने पर ( ब्रवीथाः+इति ) कहना ( इति ) अर्थात् परम प्रसिद्ध जबाला का मैं पुत्र हूं. इस हेतु मैं अप्रसिद्ध नहीं हूं इसी से मेरा परिचय जानें । गोत्रादि की जिज्ञासा से क्या इसी भाव से जाबाल शब्द का प्रयोग हुआ है ॥ २ ॥

**स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥ ३ ॥**

सः । ह । हारिद्रुमतम् । गौतमम् । एत्य । उवाच । ब्रह्मचर्यम् । भगवति । वत्स्यामि । उपेयाम् । भगवन्तम् । इति ॥ ३ ॥

भाष्यम्—सहेति । स ह सत्यकामो जाबालः । हारिद्रुमतं हरिद्रुमतोऽपत्यं हारिद्रुमतम् । गौतमं गौतमगोत्रोत्पन्नं कञ्चिदपि महर्षिम् । एत्य प्राप्य । इण् गतौ । उवाच । हे भगवन् ! भगवति पूजावति त्वयि । अहं ब्रह्मचर्यं वत्स्यामि । भगवतो निकटे स्वाध्यायाय ब्रह्मचर्यं चरिष्यामि । इति हेतोः । भगवन्तं पूजावन्तं श्रीमन्तं त्वां शिष्यतया उपेयामुपगच्छेयं प्राप्तोऽस्मीति ॥ ३ ॥

अनुवाद—वह प्रसिद्ध ( सत्यकाम जाबाल ) गौतम हारिद्रुमत ऋषि के निकट जा बोला कि आप के निकट मैं स्वाध्यायार्थ ब्रह्मचर्य धारण करूंगा इसी अभिप्राय से आप की सेवा में मैं आया हूं । इति ॥ ३ ॥

पदार्थः—( सः+ह ) वह प्रसिद्ध सत्यकाम जाबाल ( गौतमम् ) गौतम गोत्रोत्पन्न ( हारिद्रुमतम् ) हारिद्रुमान् नाम के ऋषि के पुत्र हारिद्रुमत से ( एत्य ) निकट जा ( उवाच ) बोला कि हे भगवन् ! ( भगवति ) परमपूजनीय आप के समीप ( ब्रह्मचर्यम्+वत्स्यामि ) स्वाध्यायार्थ ब्रह्मचर्य को धारण करूंगा इसी हेतु (भगवन्तम्) आप के समीप ( उपेयाम् ) प्राप्त हुआ हूं ( इति ) यही आप से प्रार्थना है ॥ ३ ॥

**तꣳहोवाच—किंगोत्रो नु सोम्यासीति । स होवाच—नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरꣳसा मा प्रत्यब्रवीद् "बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्नवेद यद्गोत्रस्त्वमसि । जबाला तु ना-**

माऽहमस्मि सत्यकामो नाम त्वमसीति" सोऽहꣳ सत्यकामो जाबालोऽस्मि भो इति ॥ ४ ॥

तम् । ह । उवाच । किंगोत्रः । नु । सोम्य । असि । इति । सः । ह । उवाच । न । अहम् । एतद् । वेद । भोः । यद्गोत्रः । अहम् । अस्मि । अपृच्छम् । मातरम् । सा । मा । प्रत्यब्रवीद् । बहु । अहम् । चरन्ती । परिचारिणी । यौवने । त्वाम् । अलभे । सा । अहम् । एतत् । न । वेद । यद्गोत्रः । त्वम् । असि । जबाला । तु । नाम । अहम् । अस्मि । सत्यकामः । नाम । त्वम् । असि । इति । सः । अहम् । सत्यकामः । जाबालः । अस्मि । भोः । इति ॥ ४ ॥

भाष्यम्—तमिति । तमित्थमुक्तवन्तं सत्यकामं ह प्रति । स हारिद्रुमत उवाच । सोम्य! हे प्रियतात! त्वं किंगोत्रो नु । नु इति प्रश्ने । इत्याचार्येणाभिहितः स सत्यकामो होवाच । हे भगवन्! यद्गोत्रोऽहमस्मि एतदहं न वेद । स्वकीयं गोत्रं न जानामि । यदि त्वं न जानासि तर्हि मातरं पितरं स्वबन्धुम्वा कथं ना प्राक्षीः । गोत्रमज्ञात्वा कथमहं त्वामुपनेष्ये । इत्याशयेन पुनः स कथयति । स्वगोत्रं मातरमपृच्छम् । सा मम माता । मा मां प्रति । अब्रवीत् । तथाहि । बहु अधिकं यथा स्यात्तथा । परिचारिणी स्वभावतः सेवापरायणाऽहम् । तव पितरं चरन्ती सेवमाना । यौवने । त्वामलभे प्रसूतवती । सेवातत्परतया गोत्रादिजिज्ञासा मया न कदापि कृता । अतः साहं 'यद्गोत्रस्त्वमसी'ति एतन्नवेद । तु परन्तु । जबालाऽहमस्मि । नाम प्रसिद्धम् । जगति जबाला नामधेयेनैव सर्वत्राऽहं प्रसिद्धास्मि । यद्वा । नाहमप्रसिद्धास्मि । प्रायः सर्वोऽपि जनो मां सम्यग् वेत्ति । यत्र यत्र मम नामधेयं त्वंकथयिष्यसि तत्र २ मां नाम्नैव ज्ञास्यति । गुरुं प्रति मम नाम वाच्यम् । तेनैव तव कार्य्यं सेत्स्यति । किंगोत्रादिजिज्ञासयेति भावः प्रतीयते । अतः सत्यकामो मातृनामैव कीर्तयति "सोऽहं जाबालोऽस्मि" परम प्रसिद्धाया जबालाया अहंपुत्रोऽस्मि मम मातुर्नाम तवापि कर्णगोचरीभूतं स्यात् कदाचित् । इति ॥ ४ ॥

अनुवाद—(महर्षि हारिद्रुमत ने) उस से पूछा कि हे प्रिय तात! तेरा गोत्र क्या है? पश्चात् वह सत्यकाम बोला हे भगवन्! मैं यह नहीं जानता हूं कि किस गोत्र का हूं। मैंने अपनी माता से पूछा था उस ने मुझ को कहा कि 'बहुत सेवा करती हुई सेवकी मैंने यौवन में तुझ को प्राप्त किया सो मैं नहीं जानती हूं कि किस गोत्र का तू है। जबाला नाम वाली मैं हूं और सत्यकाम नामक तू है'। हे भगवन्! सो मैं सत्यकाम जाबाल हूं ॥ ४ ॥

पदार्थः-( तम्+ह ) उस सत्यकाम जाबाल से (उवाच) ऋषिने पूछा कि (सोम्य) हे प्रियतात ! ( किंगोत्रः+नु ) तेरा गोत्र क्या है ? (इति) इसके बाद (सः+ह+उवाच) वह बोला ( भोः ) हे भगवन् ! ( न+अहम्+एतद्+वेद ) मैं इस को नहीं जानता हूं ( यद्गोत्रः+अहम्+अस्मि ) जिस गोत्र का हूं ( मातरम् ) माता से ( अपृच्छम् ) मैंने पूछा ( सा+मा+प्रत्यब्रवीत् ) उस ने मुझ से कहा कि (बहु) बहुत ( चरन्ती ) सेवा करती हुई ( परिचारिणी ) सेवा परायणा ( अहम् ) मैंने ( यौवने ) यौवनावस्था में ( त्वाम्+अलभे ) तुझ को प्राप्त किया ( सा+अहम् ) सो मैं ( एतत्+न+वेद ) यह नहीं जानती हूं ( यद्गोत्रः+त्वम्+असि ) जिस गोत्र वाला तू है (जबाला+तु) परन्तु जबाला ( नामाहमस्मि ) नामवाली मैं हूं ( सत्यकामः+नाम त्वमसि ) सत्यकाम नामा तू है ( इति ) ( भोः ) हे भगवन् ! ( सः+अहम् ) सो मैं ( सत्यकामः ) सत्यकाम ( जाबालः+अस्मि ) जाबाल हूं ( इति ) ॥ ४ ॥

भाष्याशयः-१–जबाला–यहां 'जबाला' और 'नाम' शब्द के प्रयोग से यह भी भाव प्रतीत होता है कि मेरा "जबाला" यह नाम जगत् में सर्वत्र सुप्रसिद्ध है । मैं जगत् में अप्रसिद्ध । नहीं हूं सब कोई प्रायः मुझ को जानते हैं । जहां २ मेरा नाम कहोगे । वहां २ मेरे नाम से ही तुम को सब कोई जान जायंगे इस हेतु केवल मेरा नाम ही अपने गुरु से कहना । इसी से तुम्हारा कार्य्य होजायगा । गोत्रादि की जिज्ञासा से क्या । इसी हेतु सत्यकाम माता के नाम का ही कीर्त्तन करता है अर्थात् जगत् सुप्रसिद्धा जबाला का पुत्र हूं । मेरी माता जी का नाम प्रायः आप लोगों का भी कर्णगोचर हुआ होगा । २–बहु+चरन्ती–अपने पति की सेवा विशेष रूपसे करती हुई । यद्वा । बहुतों की सेवा करती हुई ये दोनों अर्थ घट सकते हैं परन्तु गोत्र की अज्ञानता सूचित करती है कि द्वितीय अर्थ ही ठीक है । क्योंकि कौन ऐसी होगी कि जो अपने स्वामी श्वशुर आदिक के नाम न जानती हो ॥ ४ ॥

**तᳬं होवाच–नैतदब्राह्मणो विवक्तुमर्हति । समिधᳬं सोम्याऽऽहरोप त्वा नेष्ये । न सत्यादगा इति । तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति । ता अभिप्रस्थापयन्नुवाच–नासहस्रेणाऽऽवर्तयेति । स ह वर्षगणं प्रोवास । ता यदा सहस्रᳬं सम्पेदुः ॥ ५ ॥**

तम्। ह। उवाच। न। एतद्। अब्राह्मणः। विवक्तुम्। अर्हति। समिधम्। सोम्य। आहर। उप। त्वा। नेष्ये। न। सत्यात्। अगाः। इति। तम्। उपनीय। कृशानाम्। अबलानाम्। चतुःशताः। गाः। निराकृत्य। उवाच। इमाः। सोम्य। अनुसंव्रज। इति। ताः। अभिप्रस्थापयन्। उवाच। न। असहस्रेण। आवर्त्तेय। इति। सः। ह। वर्षगणम्। प्रोवास। ताः। यदा। सहस्रम्। सम्पेदुः ॥५॥

भाष्यम्–तंहेति। तं सत्यकामं जाबालं प्रति। ह प्रसिद्धः स महर्षिरुवाच। हे सोम्य प्रियतात! अब्राह्मणो ब्राह्मणभिन्नोऽन्यः कश्चित्। एतन्निजदोषोद्घाटकं पूर्वोक्तसमं वचनम्। विवक्तुं प्रकाशयितुम्। नार्हति। ब्रह्मस्वभावः पुरुषआर्जवात् सत्यपरायणत्वान्निजदोषमपि न कदापि संगूहति। द्वितीयपापभयात्। एकं त्वाचरितमेव। तद्गोपनायान्यदनृतं कथंकारं वक्तव्यम्। योऽन्यथा कर्तुमिच्छति स द्विगुणं पापमाचरति। अतः स्वभाव एव ब्राह्मणस्यस्वदोषं न कदापि गोपायतीति। यस्मिन् स्वभावत एव सत्यता विद्यते स एव ब्राह्मणो भवितुमर्हति। अतस्त्वं हे सोम्य! ब्राह्मणोऽसि। यतस्त्वम्। सत्यात् सत्यधर्मात्। न अगाः। नागमः। नापेतवानसि। न रहितोऽसि सत्यान्न दूरं गतोसीत्यर्थः। अतः। हे सोम्य! उपनयनसंस्कारार्थं समिधं होमकाष्ठम्। आहर। आनय। त्वा। त्वाम्। उपनेष्ये। उपनीतं करिष्ये। व्यवहितेनोपेन सम्बन्धः। इति तं सत्यकामं जाबालमुपनीय उपनीतं कृत्वा। कृशानां क्षीणानाम्। दुर्बलानामबलानां गवां मध्ये। चतुःशताः चत्वारि शतानि प्रमाण मासाम्। ताः। गाः। निराकृत्य निष्काश्य। तं नवोपनीतं शिष्यमुवाच। हे सोम्य! इमाश्चतुःशतपरिमिता गाः। अनुसंव्रज। चारयितुमनुगच्छ। इत्याचार्य्येणोक्तः। ता गाः। गोष्ठाद् अभिप्रस्थापयन् वनं गमयन् सन् स सत्यकाम आचार्य्यमुवाच। असहस्रेण गवां सहस्रेण विना न आवर्तेय इति। यावत् सहस्रमेकं गवां न भविष्यति तावन्नाहमावर्तिष्ये न निवर्तिष्ये इति। स ह सत्यकामो गाश्चारयन्। वर्षगणं बहूनि वर्षाणि। प्रोवास प्रवासं कृतवान्। ता गावो यदा यस्मिन् काले सहस्रमेकसहस्रसङ्ख्याकाः। सम्पेदुः सम्पन्ना बभूवुः। तदाहैनमृषभोऽभ्युवाद इत्युत्तरेण सम्बन्धः ॥ ५ ॥

अनुवादः–उस (सत्यकामजाबाल) से वे ऋषि बोले कि अब्राह्मण इसको प्रकाश नहीं कर सकता। हे सोम्य! तू सत्य से पृथक् नहीं हुआ है। अतः हे सोम्य उपनयन की सामग्री समिध लावो तेरा उपनयन मैं करूंगा इति। उसका उपनयन कर कृश और दुर्बल चारसौ गायें निकाल ऋषि उससे बोले कि हे सोम्य! इन गौओं के पीछे २ जा। उसने इन गौओं को वन को प्रस्थापित करता हुआ अपने गुरु से कहा कि जब

तक ये गायें एक सहस्र न होजावेंगी तबतक मैं नहीं लौटूंगा । वह बहुत वर्षों प्रवास में रहा । जब वे गायें सहस्र हुईं तब ऋषभ उनसे बोला । इसका उत्तरखण्ड से सम्बन्ध है ॥ ५ ॥

पदार्थः—( तम्+ह ) उस प्रसिद्ध सत्यकाम से ( उवाच ) ऋषि बोले कि (एतत् ) इस विषय को ( अब्राह्मणः ) अब्राह्मण ( विवक्तुम् ) प्रकाशित करने को (न+अर्हति ) समर्थ नहीं होसकता । अतः ( सोम्य ) प्रिय ! ( समिधम् ) होम सामग्री समिधा ( आहर ) ले आओ ( त्वा ) तुझको ( उप+नेष्ये ) उपनीत करूंगा क्योंकि ( सत्यात् ) सत्यरूप धर्म से ( न+अगाः+इति ) पृथक् नहीं हुए हो । इतना कह ( तम्+उपनीय ) उसको उपनीत बना ( कृशानाम् ) क्षीण ( अबलानाम् ) दुर्बल गौओं के मध्य से ( चतुःशताः+गाः ) चार सौ गौ ( निराकृत्य ) गोष्ठ से निकास कर ( उवाच ) सत्यकाम से बोले कि ( सोम्य ) हे प्रियशिष्य ! ( इमाः ) इन गौओं के ( अनुसंव्रज ) चराने को पीछे २ जाओ । तत्पश्चात् ( ताः ) उन गौओं को (अभिप्रस्थापयन् ) बन को प्रस्थापित करता हुआ सत्यकाम (उवाच) बोला कि (असहस्रेण) सहस्र गौओं के विना ( न+आवर्त्तेय+इति ) मैं नहीं लौट कर आऊंगा (सः+ह) वह ( वर्षगणम् ) अनेक वर्ष ( प्रोवास ) वन में रहा ( ताः ) वे गौएं ( यदा ) जब (सहस्रम्) सहस्र (सम्पेदुः) हुईं* ॥ ५ ॥ इति चतुर्थ खण्डस्य भाषाभाष्यं समाप्तम् ॥ ४ ॥

※ अथ पञ्चमः खण्डः ※

**अथ हैनमृषभोऽभ्युवाद—सत्यकाम३इति भगव ! इति ह प्रति शुश्राव । प्राप्ताः सोम्य ! सहस्रꣳ स्मः प्रापय न आचार्यकुलम् ॥ १ ॥**

अथ । ह । एनम् । ऋषभः । अभ्युवाद । सत्यकाम । इति । भगवः । इति । ह । प्रतिशुश्राव । प्राप्ताः । सोम्य । सहस्रम् । स्मः । प्रापय । नः । आचार्यकुलम् ॥ १ ॥

भाष्यम्—अथेति । सन्त्युपदेशका जगति सर्व एव पदार्थाः । तेषामाचार्य्यस्तु प्रथमोऽस्ति । योह्यक्षरशोऽध्यापयति । स्फटिकहृदयो विमलमानसोऽन्तर्मुखीनो धीरः कश्चित् सर्वेषु चेतनाचेतनाविशेषेषु प्रकीर्णा महती मैशीर्विद्याः प्रत्यक्षवदवलोकयति । सर्वस्मात्सर्व-

* संस्कारपरामर्शात्तदभावाभिलापाच्च । ३६ ॥ तदभावनिर्धारणे च प्रवृत्तेः ३७ । (१ । ३ ) इत्यादि वेदान्तसूत्र और नवम खण्ड की अन्तिम समीक्षा देखो ॥

स्मात्तामनुभवेनावलोकनेन विवेकेन च विदित्वाऽऽदाय हृदि निधाय च मुनिर्भवति । मननादेव मुनिः । एतादृक् पुरुषो यत्रैव गच्छति तत्रैव ब्राह्मीं शक्तिं विस्पष्टामनुभवैकगम्यां पश्यति । सत्यकामो गाश्चारयन्नपि तत्संचारानुचारोपवेशनगोष्ठीबन्धनप्रमोदामोदादिदर्शनेन ताभ्या अपि सुशिक्षामग्रहीत् । इमामेव शिक्षां कोमलमतीनामुपकाराय परस्परसम्वादरूपेणोपदिशति । अथ हैनमित्यादिना । अथानन्तरम् । ऋषभो गवां स्वामी वलीवर्दः 'भोः सत्यकाम३' इत्येनं सत्यकाममभ्युवादोवाच । ह ऐतिह्यार्थः । अथ सत्यकामः हे भगवः किमस्तीति प्रतिशुश्रावोत्तरं दत्तवान् । तत ऋषभः कथयति । हे सोम्य सुन्दरमूर्त्ते सत्यकाम ! वयं सर्वे सहस्रं सहस्र संख्याताम् प्राप्तागताः । यद्वा । सहस्रसंख्याका वयं सम्प्रति जाताः । इयमेव तवापि प्रतिज्ञासीत्साचेदानीं पूर्णा । अतः नोऽस्मान् । आचार्य्यकुलमाचार्य्यस्थानम् । प्रापय नय ॥ १ ॥

अनुवाद—अनन्तर ऋषभ (वलीवर्द) हे सत्यकाम ३ ऐसा पुकारकर इस (सत्यकाम) से बोल उठा । तत्पश्चात् हे भगवन् ! ( क्या है ) ऐसा प्रतिवचन सत्यकाम ने दिया । तब पुनः वलीवर्द बोला कि सोम्य सत्यकाम ! हम लोग एक सहस्र हो गये । अतः हम लोगों को आचार्य्यकुल ले चलो ॥ १ ॥

पदार्थः—(अथ ) अनन्तर ( ऋषभः ) बैल (वलीवर्द) (एनम् ) इस सत्यकाम से (अभ्युवाद) बोला कि ( सत्यकाम३) हे सत्यकाम अर्थात् सत्यकाम को इसके नाम से जोर से वह वलीवर्द पुकार उठा । तब ( भगवः ) हे भगवन् ( क्या है ? ) ( इति ) ऐसा ( प्रतिशुश्राव ) सत्यकाम ने प्रत्युत्तर दिया । तब पुनः वह ऋषभ बोला कि ( सोम्य ) हे सुन्दर मूर्त्ति सत्यकाम ! हम लोग ( सहस्रम् ) एक सहस्र (प्राप्ताः+स्मः) हो गये । इस हेतु ( नः ) हम लोगों को आचार्य्यकुल को ( प्रापय) ले चलो (इति) ( ह ) यह शब्द इतिहास सूचक है ॥ १ ॥

भाष्याशयः—जगत् में प्रायः सब ही पदार्थ उपदेशक हैं । उन में आचार्य प्रथम हैं जो अक्षरशः ब्रह्मचारियों को पढ़ाते हैं । जिनका हृदय स्फटिकवत्, है मन स्वच्छ विमल है । सदा अन्तर्मुखीन रहते हैं । ऐसे कोई २ पुरुष चेतन अचेतन सब पदार्थों में विस्तीर्ण महती ईश्वरीय विद्या को प्रत्यक्षवत् देखते हैं । उन २ पदार्थों से अनुभव अवलोकन और विवेक के द्वारा उस विद्या को देख जान हृदय में रख वे मुनि हो जाते हैं क्योंकि मुनि मनन से ही होते हैं ऐसे पुरुष जहां२ जाते हैं वहां उसी ब्राह्मी शक्ति को जो केवल अनुभव गम्य है देखते हैं सत्यकाम गायों को चराते हुए इनके संचार, अनुचार, उपवेशन, गोष्ठीबन्धन, प्रमोद, आमोद आदिक भावों को देख उनसे

भी शिक्षा ग्रहण किया करते थे इसी शिक्षा को कोमल बुद्धिवाले के उपकार के लिये सम्वादरूप से आगे दिखलाते हैं ॥ १ ॥

**ब्रह्मणश्च ते पादं ब्रवाणीति। ब्रवीतु मे भगवानिति। तस्मै होवाच–प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैषवै सोम्य! चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥**

ब्रह्मणः । च । ते । पादम् । ब्रवाणि । इति । ब्रवीतु । मे । भगवान् । इति । तस्मै । ह । उवाच । प्राची । दिग् । कला । प्रतीची । दिग् । कला । दक्षिणा । दिग् । कला । उदीची । दिग् । कला । एषः । वै । सोम्य । चतुष्कलः । पादः । ब्रह्मणः । प्रकाशवान् । नाम ॥ २ ॥

भाष्यम्–ब्रह्मण इति । पुनरपि ऋषभो ब्रवीति । च किञ्च । ते तुभ्यम् । ब्रह्मणः परेशस्य । पादं स्थानम् । ब्रवाणि यदितवोत्कटेच्छास्यात्तर्ह्यहं ब्रह्मस्थानं तुभ्यमुपदिशेयम् । इत्यृषभेणोक्तः सत्यकामः कथयति । भगवान् ब्रह्मणः पादं मां प्रति ब्रवीतु उपदिशत्विति । इत्युक्तवते तस्मै सत्यकामाय ह । स ऋषभ उवाच । तस्य पादस्य । प्राचीदिक् पूर्वादिग् । एकाकला भागोस्ति प्रतीची पश्चिमादिग् । द्वितीया कलास्ति । दक्षिणादिक् तृतीया कलास्ति । उदीची उत्तरादिग् । चतुर्थीकलास्ति । हे सोम्य! ब्रह्मणः । एषचतुष्कलः चतस्रः कला यस्य स चतुष्कलः । पादः । प्रकाशवान् नाम वर्त्तते । प्रशस्तः प्रकाशोऽस्यास्तीतिप्रकाशवान् । अयमभिप्रायोस्ति । प्राची प्रभृतयश्चतस्रोदिशो ब्रह्मणः स्थानमस्ति । अस्य प्रकाशवानिति नामधेयमस्ति । चतुर्दिक्षु ब्रह्मणो प्रकाशव्याप्तिरिति दर्शयति ॥ २ ॥

अनुवाद–(हे सौम्य सत्यकाम! यदि तेरी कांक्षा हो तो) तुझ से मैं ब्रह्म के एक पाद का वर्णन करूं ( यह सुन सत्यकाम कहता है कि ) भगवान् ( कृपाकर ) मुझे उपदेश देवें । यह सुन वह उस को उपदेश देने लगे ( हे सोम्य! ब्रह्म के पाद की ) एक कला प्राची ( पूर्व ) दिशा है । द्वितीया कला प्रतीची ( पश्चिम ) दिशा है । तृतीया कला दक्षिण दिशा है चतुर्थी कला उदीची (उत्तर) दिशा है । हे सोम्य! ब्रह्म का यह चतुष्कल पाद प्रकाशवान् नाम से प्रसिद्ध है ॥ २ ॥

पदार्थः–सत्यकाम से ऋषभ कहता है कि हे सोम्य ( ते ) तुझ को (ब्रह्मणः+च) ब्रह्म की महिमारूपी (पादम्+ब्रवाणि) पाद का उपदेश करूं । अर्थात् यदि तेरी इच्छा

श्रवणार्थ हो और श्रद्धा पूर्वक यदि तुम सुनना मनन करना चाहते हो तो तुम से मैं कहूं क्योंकि श्रद्धावान् को ही विद्या देनी चाहिये (इति) ऋषभ के वाक्य समाप्त होने पर वे बोले कि (भगवान्) आप कृपया (मे) मुझ जिज्ञासु शिष्य को (ब्रवीतु) उपदेश देवें (इति) यह सुन (तस्मै+ह+उवाच) उस को उपदेश देने लगे कि सौम्य! ब्रह्म के पादकी एक (कला) कला (प्राचीदिग्) पूर्वदिशा है। द्वितीया (कला) कला (प्रतीचीदिग्) पश्चिमदिशा है। तृतीया (कला) कला (दक्षिणा+दिग्) दक्षिण दिशा है। चतुर्थी (कला) कला (उदीची+दिग्) उत्तरदिशा है (सोम्य) हे सोम्य! (ब्रह्मणः+एषः+चतुष्कलः+पादः) ब्रह्म का यह चतुष्कल पाद (प्रकाशवान्+नाम) प्रकाशवान् नाम से प्रसिद्ध है ॥ २ ॥

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते। प्रकाशवानस्मिँल्लोके भवति। प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥**

सः। यः। एतम्। एवम्। विद्वान्। चतुष्कलम्। पादम्। ब्रह्मणः। प्रकाशवान्। इति। उपास्ते। प्रकाशवान्। अस्मिन्। लोके। भवति। प्रकाशवतः। ह। लोकान्। जयति। यः। एतम्। एवम्। विद्वान्। चतुष्कलम्। पादम्। ब्रह्मणः। प्रकाशवान्। इति। उपास्ते ॥ ३ ॥

भाष्यम्—स य इति। स यः पुरुषो ब्रह्मणश्चतुष्कलं पादम्। एवं पूर्वोक्तगुण विशिष्टम्। विद्वान् जानन् सन्। प्रकाशवान् इति मत्वा उपास्ते विचारयति। सोऽस्मिँल्लोके प्रकाशवान् भवति। पुनः प्रकाशवतो लोकाञ्जयति। ये ये प्रकाशवन्तस्तादृशो लोकाः सन्ति तान् तद्विद्यया जानन्ति। अनेकार्थत्वादवबोधनार्थको जयतिरत्रगृह्यते। आदरार्था द्विरुक्तिः ॥३॥

इति पञ्चमः खण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद—जो कोई पुरुष ब्रह्म के इस चतुष्कल पाद को इस प्रकार जानता हुआ 'प्रकाशवान्' समझ विचारता है वह इस लोक में प्रकाशवान् होता है। और इस विद्या के प्रभाव से अन्य प्रकाशवान् लोक लोकान्तरों को भी जान लेता है जो इस ब्रह्म के चतुष्कल पाद को ऐसा जानता हुआ 'प्रकाशवान्' समझ विचारता है ॥३॥

पदार्थः—(सः+यः) सो जो कोई (ब्रह्मणः) ब्रह्म के (एतम्+चतुष्कलम्+पादम्) इस चतुष्कल पाद को (एवम्+विद्वान्) ईदृगुण सहित जानता हुआ (प्रकाशवान्+

इति ) और प्रकाशवान् मान (उपास्ते) उपासना करता है वह विद्वान् (अस्मिन्+लोके) इस लोक में ( प्रकाशवान् ) प्रकाशवान् होता है और ( प्रकाशवतः+ह+लोकान् ) प्रकाशवान् लोकों का ( जयति ) विजयी वा ज्ञानी होता है ( य एतमेव० ) पूर्ववत् । बारम्बार अभ्यासार्थ "य एवम्" इत्यादि दो वार कहागया है ॥ ३ ॥

इति पञ्चम खण्डस्य भाषाभाष्यं समाप्तम् ॥ ५ ॥

※ अथ षष्ठः खण्डः ※

**अग्निष्टे पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार । ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥**

अग्निः । ते । पादम् । वक्ता । इति । सः । ह । श्वोभूते । गाः । अभिप्रस्थापयाञ्चकार । ताः । यत्र । अभि । सायम् । बभूवुः । तत्र । अग्निम् । उपसमाधाय । गाः । उपरुध्य । समिधम् । आधाय । पश्चात् । अग्नेः । प्राङ् । उपोपविवेश ॥ १ ॥

भाष्यम्—अग्निरिति । सत्यकाम ! । ते तुभ्यम् । अग्निः । ब्रह्मण एकंपादम् । वक्ता वक्ष्यति प्रकाशयिष्यति । इत्यृषभःसत्यकाममुवाचेति पूर्वं खण्डेन सम्बन्धः । तद् वचनमाकर्ण्य । स ह श्वोभूते प्रस्फुटिते प्रातःकाले । गाः । अभिप्रस्थापयाञ्चकार । तस्मात्स्थानात् सर्वागाश्चालयामास । गुरोराश्रमंप्रतीतिशेषः । ताश्च गावो यदृच्छयाऽरण्ये विचरन्त्य आचार्य्यकुलाभिमुख्यः प्रस्थिताः । यत्र । यस्मिन् देशे काले वा । ता गावोऽभिसायं रात्रौ । बभूवुः । रात्रिमध्ये वर्तमाना बभूवुः । यद्वा । यत्राभिसायंसन्ध्यां बभूवुः । प्रापुः । भू प्राप्तावपि । यद्वा सायमभिलक्षीकृत्यबभूवुः । तत्र तस्मिन् स्थाने । स सत्यकामः । अग्निमाहवनीयाग्निम् । उपसमाधाय आयोज्य । गा उपरुध्य कस्यांचिद्गोष्ठ्यां बध्वा निवार्य्य स्थापयित्वा वा । समिधं होमसामग्रीभूतानिकाष्ठानि । आधायाग्नौ संयोज्य । अग्नेः पश्चात् । प्राङ्प्राङ्मुखःसन् । उपोपविवेश अग्नेः समीपमुपविवेशेत्यर्थः ॥ १ ॥

अनुवाद—"सत्यकाम से ऋषभ ने कहा कि हे सत्यकाम !" ब्रह्म के ( द्वितीय ) पाद का उपदेश तुम से अग्नि करेंगे ( इतना वचन कह ऋषभ वहां से चले गये ) अनन्तर वह प्रसिद्ध सत्यकाम दूसरे दिन प्रातःकाल गौवों को (आचार्य्यकुल की ओर)

ले चला । जहां उन गौओं को सन्ध्याकाल प्राप्त हुआ वहां वह सत्यकाम गौओं को ( किसी गोष्ठी में ) बन्द कर वा बांध, अग्नि प्रज्वलित कर उसमें समिधायें दे अग्नि के पीछे उसके समीप पूर्वाभिमुख हो बैठ गये ॥ १ ॥

पदार्थः-( अग्निः ) अग्नि ( ते ) तुम से ( पादम् ) ब्रह्म के अन्य पाद का अर्थात् द्वितीयपाद का ( वक्ता इति ) उपदेश वा व्याख्यान करेंगे । इतना कह ऋषभ वहां से चले गये । इतनी बात पूर्व खण्ड से सम्बन्ध रखती है ( सः+ह ) वह प्रसिद्ध सत्यकाम ( श्वोभूते ) दूसरे दिन प्रातः काल ( गाः ) गौवों को ( अभिप्रस्थापयाञ्चकार ) आचार्य कुल की ओर ले चले ( ताः ) उन गौवों ने ( यत्र ) जिस समय वा स्थान में ( अभिसायम् ) सन्ध्या को ( बभूवुः ) प्राप्त किया अर्थात् जहां गौवों को सन्ध्या होगई ( तत्र ) वहां वह सत्यकाम ( अग्निम्+उपसमाधाय ) अग्नि को प्रज्वलित कर ( गाः+उपरुध्य ) किसी गोष्ठी में गौओं को बन्द वा छेककर (समिधम्+आधाय ) हवन सामग्री का अग्नि में आधान कर ( अग्नेः+पश्चात् ) अग्नि के पीछे ( प्राङ् ) प्राचीन मुख हो ( उपोपविवेश ) अग्नि के समीप ही बैठगये ॥ १ ॥

**तमग्निरभ्युवाद-सत्यकाम३ इति । भगव ! इति प्रतिशुश्राव ॥ २ ॥**

तम् । अग्निः । अभ्युवाद । सत्यकाम३ । इति । भगवः । इति । प्रतिशुश्राव ॥२॥

भाष्यम्-तमिति । अग्निः । तं सत्यकामं जाबालम् । अभ्युवादाऽऽह्वयामासोवाच । भोः सत्यकाम३इति । दूरात्सम्बोधनमेतत् । अग्निवचनं श्रुत्वा सत्यकामः । हे भगवो-भगवन् पूज्य ! किमस्ति । इति ह प्रति शुश्राव प्रत्युत्तरं दत्तवान् ॥ २ ॥

अनुवाद— सत्यकाम३ सत्यकाम३ कहकर अग्नि ने सत्यकाम को दूर से ही पुकारा ( अग्नि के वचन सुनकर सत्यकाम ने ) हे भगवन् ! क्या है ऐसा प्रत्युत्तर दिया ॥ २ ॥

पदार्थः-( अग्निः ) अग्नि ( तम् ) उस सत्यकाम को ( सत्यकाम३ ) हे सत्यकाम २ कहकर दूर से ही ( अभ्युवाद ) पुकार उठे । अग्नि के इस वचन को सुन सत्यकाम ने ( भगवः+इति ) हे भगवन् ! पूज्य माननीय ? क्या है । ऐसा ( प्रतिशुश्राव ) प्रत्युत्तर दिया यह विषय सर्वत्र प्रसिद्ध है ॥ २ ॥

**ब्रह्मणः सोम्य ! ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति । तस्मै होवाच-पृथिवी कलाऽन्तरिक्षं**

**कला द्यौः कला समुद्रः कलैष वै सोम्य ! चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥**

ब्रह्मणः । सोम्य । ते । पादम् । ब्रवाणि । इति । ब्रवीतु । मे । भगवान् । इति । तस्मै । ह । उवाच । पृथिवी । कला । अन्तरिक्षम् । कला । द्यौः । कला । समुद्रः । कला । एषः । वै । सोम्य । चतुष्कलः । पादः । ब्रह्मणः । अनन्तवान् । नाम ॥३॥

भाष्यम्—ब्रह्मण इति । हे सोम्य प्रियपात्र सत्यकाम ! ते तुभ्यम् । ब्रह्मणः परमेशस्य । पादमुक्तादन्यत्स्थानम् । ब्रवाणि कच्चित् ? यदि तवाभिलाषःस्यात्तर्हि कथयेयमिति सत्यकाममग्निरुवाच । ततः सत्यकामोब्रूते । भगवान् । मेमह्यम् । ब्रवीतिवपदिशतु । इत्यहं प्रार्थये । अनन्तरम् । सोऽग्निः । तस्मै ह सत्यकामाय । उवाचोपदिदेश । किमुपदिदेशेति काङ्क्षायां पृथिव्यादि प्रारभ्यते । ब्रह्मण एका कला स्थानं पृथिवी । द्वितीयाकलाऽन्तरिक्षं पृथिव्या ऊर्ध्वं द्युलोकादधोवर्तिस्थानम् । तृतीया कलाद्यौरस्तिद्युलोकम् । चतुर्थीकलासमुद्र एव । हे सोम्य ! ब्रह्मण एषचतुष्कलः । चतस्रः कला यस्मिन् यस्यवा स चतुष्कलः । पादः । अनन्तवानितिनामधेयम् । अस्य पादस्यानन्तवानितिनामधेयं वर्त्तत इत्यर्थः ॥ ३ ॥

अनुवाद—अग्नि कहते हैं कि हे सोम्य ! मैं तुम से ब्रह्म के अन्यपाद का उपदेश करूं ( अर्थात् यदि उपदेश सुनने की तुम्हारी कामना हो तौ मैं उपदेश करूं ) (इस वचन को सुन सत्यकाम जाबाल ने उत्तर दिया ) भगवान् कृपाकर मुझे उपदेश देवें । तब अग्नि उस से बोले कि सोम्य ! उस ब्रह्म की एक कला ( पाद ) पृथिवी, द्वितीया कला अन्तरिक्ष, तृतीया कला द्युलोक और चतुर्थी कला समुद्र है । हे सोम्य ! निश्चय कर ब्रह्म के इस चतुष्कल पाद का नाम अनन्तवान् है ॥ ३ ॥

पदार्थः—अग्नि सत्यकाम से कहते हैं ( सोम्य ) हे सोम्य ! ( ब्रह्मणः ) ब्रह्म के ( पादम् ) स्थान का ( ते ) तुझ से ( ब्रवाणि+इति ) व्याख्यान करूं यदि ब्रह्म ज्ञान श्रवणार्थ तुम्हें उत्कट इच्छा हो तो मैं उपदेश दूं यह सुन सत्यकाम कहता है ( भगवान् ) भगवान् पूजनीय आप ( मे ) मुझ से ( ब्रवीतु+इति ) उस का उपदेश कृपाकर देवें ( तस्मै+ह ) उस सत्यकाम को ( उवाच ) वे अग्नि उपदेश देने लगे कि ( कला+पृथिवी ) उस ब्रह्म की प्रथम कला पृथिवी है ( कला+अन्तरिक्षम् ) द्वितीया कला अन्तरिक्ष है ( द्यौः+कला ) तृतीया कला द्युलोक है ( कला+समुद्रः ) चतुर्थ कला समुद्र है ( सोम्य ) हे भव्यमूर्त्ते सत्यकाम ! ( वै ) निस्सन्देह (ब्रह्मणः) ब्रह्म

के ( एषः ) यह ( चतुष्कलः ) चतुष्कला सम्पन्न ( पादः ) स्थान (अनन्तवान् नाम) अनन्तवान् नाम का है जिस का अन्त नहीं और जो सर्वत्र प्रसिद्ध है ॥ ३ ॥

**स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिंल्लोके भवत्यनन्तवतो ह लोकाञ्जयति । य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनन्त वानित्युपास्ते ॥ ४ ॥**

सः । यः । एतम् । एवम् । विद्वान् । चतुष्कलम् । पादम् । ब्रह्मणः । अनन्तवान् । इति । उपास्ते । अनन्तवान् । अस्मिन् । लोके । भवति । अनन्तवतः । ह । लोकान् । जयति । यः । एतम् । एवम् । विद्वान् । चतुष्कलम् । पादम् । ब्रह्मणः अनन्तवान् । इति । उपास्ते ॥ ४ ॥

भाष्यम्—सय इति । स यो ब्रह्मवित् पुरुषः ब्रह्मणः । एतं सर्वत्र दृश्यमानम् । चतुष्कलम् । पृथिव्यन्तरिक्षद्युसमुद्रा इति चतस्रः कलायस्मिन् सः । तं चतुष्कलम् । पादं स्थानम् । एवं पूर्वोक्त गुण सहितं विद्वान् जानन् सन् अनन्तवानिति विदित्वा । उपास्ते सम्यग् विचारयति । स उपासकोऽपि । अस्मिन् मर्त्यलोके । अनन्तवान् भवति जायते । पुनः । अनन्तवतो लोकाञ्जयति जानाति य एवमित्यादि द्विरुक्तिर्गौरवार्था॥४॥

इति षष्ठखण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद–जो कोई ब्रह्मविद् पुरुष ब्रह्म के इस चतुष्कल पाद को पूर्वोक्त गुण सहित जानता हुआ " अनन्तवान् " ऐसा जान विचारता है वह इस लोक में अनन्तवान् होता है और अनन्तवान् लोकों का विजय करता है जो कोई ब्रह्म के इस चतुष्कल पाद को ऐसा जानता हुआ "अनन्तवान्" समझ विचारता है ॥ ४ ॥

पदार्थः–(सः+यः) सो जो कोई ब्रह्मविद् पुरुष (ब्रह्मणः) ब्रह्म के (एतम्) इस (चतुष्कलम् ) पृथिवी, अन्तरिक्ष, द्युलोक और समुद्ररूप चार कला वाले ( पादम् ) पाद को (एवम्+विद्वान्) पूर्वरूप जानता हुआ ( अनन्तवान्+इति ) अनन्तवान् समझकर ( उपास्ते) विचारता है वह ( अस्मिन्+लोके ) इस लोक में (अनन्तवान्+भवति) अनन्तवान् होता है (अनन्तवान् होने से अभिप्राय ईश्वर की अनन्त महिमा जानने से है) और ( अनन्तवतः+लोकान्+ह ) अनन्तवान् लोकों का (जयति ) जय करता है अर्थात् मोक्ष पाता है (यः+एतमेवम्) इत्यादि पूर्ववत् ॥ ४ ॥

इति षष्ठ खण्डस्य भाषाभाष्यं समाप्तम् ॥ ६ ॥

※ अथ सप्तमः खण्डः ※

**हꣳसस्ते पादं वक्तेति। स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार। ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥**

हंसः। ते। पादम्। वक्ता। इति। सः। ह। श्वोभूते। गाः। अभिप्रस्थापयाञ्चकार। ताः। यत्र। अभि। सायम्। बभूवुः। तत्र। अग्निम्। उपसमाधाय। गाः। उपरुध्य। समिधम्। आधाय। पश्चात्। अग्नेः। प्राङ्। उपोपविवेश ॥ १ ॥

भाष्यम्-हंस इति। हे सोम्य सत्यकाम जाबाल! अतः परम्। ते तुभ्यम्। हंसः। ब्रह्मणस्तृतीयं पादं वक्तेति वक्ष्यति उपदेक्ष्यतीति अग्निः सत्यकाममुवाचेति पूर्व खण्डेन सम्बन्धः। कथयित्वा चाग्निस्तस्मात् प्रतस्थे। अनन्तरम्। स ह श्वोभूते गा इत्यादि पूर्ववद् व्याख्येयम्। सर्वाणि पदानि व्याख्यातानि ॥ १॥

अनुवाद-हे सत्यकाम अब इसके पीछे हंस तुम से ब्रह्म के एक पाद का वर्णन करेंगे इतना वचन कह अग्नि वहां से चले गये। पश्चात् अन्य दिवस प्रातःकाल वे प्रसिद्ध सत्यकाम गौवों को (आचार्य कुल की ओर) ले चले जहां पर गौवों को सन्ध्या होगई वहां वे सत्यकाम उन गौवों को किसी गोष्ठी में अवरुद्ध कर अग्नि की आयोजनाकर समिधाएं उसमें दे अग्नि के पीछे और उसी के समीप पूर्वाभिमुख हो बैठ गये ॥ १ ॥

पदार्थः-(हंसः) हंस (ते) तुझ से (पादम्) ब्रह्म के एक पाद का (वक्ता) उपदेश करेंगे (इति) इतना वचन कह अग्नि वहां से चले गये। यह पूर्व खण्ड से सम्बन्ध रखता है। पश्चात् (सः+ह) वह प्रसिद्ध सत्यकाम (श्वोभूते) दूसरे दिन प्रातःकाल (गाः) गौवों को (अभिप्रस्थापयाञ्चकार) आचार्य कुल की ओर लेचले (ताः) उन गौवों ने (यत्र) जहां (अभिसायम्) सन्ध्या को (बभूवुः) प्राप्त किया। अर्थात् जहां उन गौवों को सन्ध्या प्राप्त हुई (तत्र) वहां वह सत्यकाम जाबाल (अग्निम्+उपसमाधाय) अग्नि को समीप में जला (गाः+उपरुध्य) गौवों को छेक (समिधम्+आधाय) समिधाएं अग्नि में डाल (पश्चात्) तदनन्तर (प्राङ्) पूर्वाभिमुख हो (अग्नेः) अग्नि के (उपोपविवेश) अति समीप बैठ गये ॥ १ ॥

**तꣳ हꣳस उपनिपत्याभ्युवाद-सत्यकाम३इति। भगव ! इति ह प्रतिशुश्राव ॥ २ ॥**

तम् । हंसः । उपनिपत्य । अभ्युवाद । सत्यकाम३ । इति । भगवः । इति । ह । प्रतिशुश्राव ॥ २ ॥

भाष्यम्--तमिति । हंसः । उपनिपत्य । सत्यकामस्य समीपमागत्य । सत्यकाम ३ इति सम्बोध्य तं सत्यकामम् । अभ्युवाद । आजुहाव । सोऽपि । हे भगवो भगवन्! किमस्ति । इति । ह । प्रतिशुश्राव । प्रत्युत्तरं ददौ ॥ २ ॥

अनुवाद--हंस उसके समीप आ हे सत्यकाम ! हे सत्यकाम! ऐसे उसको पुकारने लगे । तदनन्तर हे भगवन् ! क्या आज्ञा होती है ऐसा उसने उत्तर दिया ॥ २ ॥

पदार्थः--( हंसः ) हंस ( उपनिपत्य ) सत्यकाम के समीप आकर (सत्यकाम३) हे सत्यकाम! इस प्रकार सम्बोधन कर ( तम् ) उसको ( अभ्युवाद ) पुकारने लगे। पश्चात् ( भगवः+इति ) हे भगवन्! क्या है क्या आज्ञा होती है ऐसा (प्रतिशुश्राव ) प्रत्युत्तर उसने दिया ॥ २ ॥

**ब्रह्मणः सोम्य ! ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाचाग्निः कला सूर्य्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य ! चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥**

ब्रह्मणः । सोम्य । ते । पादम् । ब्रवाणि । इति । ब्रवीतु । मे । भगवान् । इति । तस्मै । ह । उवाच । अग्निः । कला । सूर्यः । कला । चन्द्रः । कला । विद्युत् । कला । एषः । वै । सोम्य । चतुष्कलः । पादः । ब्रह्मणः । ज्योतिष्मान् । नाम ॥ ३ ॥

भाष्यम्--ब्रह्मण इति । हे सोम्य सत्यकाम! ते तुभ्यम् । अहम् । ब्रह्मणः । महेशानस्य । तृतीयं पादम् । स्थानम् । ब्रवाणि कथयेयम् । उपदिशेयमिति यावत् । यदि तवाभिलाषःस्यात् । इति वचनमाकर्ण्य । "भगवान् मे ब्रवीतु" इति सत्यकामः प्रत्युवाच । पश्चात् । तस्मै ह प्रसिद्धाय सत्यकामाय हंस उवाच । यत् । ब्रह्मणः पादस्य । एका कला अग्निरस्ति । द्वितीया कला सूर्यः । तृतीया कला चन्द्रः । चतुर्थी कला विद्युत् । हे सोम्य ! वै निश्चितम् । ब्रह्मण एष चतुष्कलः । अग्निसूर्यचन्द्रविद्युतश्चतस्रः कला अंशाभागा यस्मिन् । स चतुष्कलः पादः । नाम । नाम्ना । ज्योतिष्मान् इति । प्रशस्तानि ज्योतींषि अस्येति । ज्योतिष्मानिति । नामेति प्रसिद्धं वा ॥ ३ ॥

अनुवाद—हे सोम्य! सत्यकाम! मैं तुम से ब्रह्म के तृतीयपाद का उपदेश करूं (यदि तेरी इच्छा हो) इसे सुन सत्यकाम कहते हैं कि कृपया मुझको भगवान् उपदेश देवें। तब हंस उसे उपदेश देने लगे कि हे सोम्य! ब्रह्म के पाद की एक कला अग्नि, द्वितीय कला सूर्य, तृतीय कला चन्द्रमा और चतुर्थीकला विद्युत् है। हे सोम्य! ब्रह्म के इस चतुष्कल पाद का नाम ज्योतिष्मान् है ॥ ३ ॥

पदार्थः—(सोम्य) हे सोम्य सुन्दर सत्यकाम (ब्रह्मणः) ब्रह्म के (पादम्) रहने की जगह का (ते) तुझ से मैं (ब्रवाणि) उपदेश करूं यदि तुम्हारी इच्छा हो तो मैं तुमसे ब्रह्म के स्थान का उपदेश करूं (इति) इस वचन को सुन सत्यकाम कहते हैं कि (भगवान्) परमपूजनीय आप (मे+ब्रवीतु+इति) मुझसे ब्रह्म के पाद का उपदेश कृपया करें। तत्पश्चात् (तस्मै) उस सत्यकामार्थ (ह+उवाच) वह प्रसिद्ध हंस बोले वा उपदेश करने लगे कि हे सत्यकाम! (अग्निः+कला) ब्रह्म के पाद की एक कला अग्नि है (सूर्यः+कला) द्वितीया कला सूर्य है (चन्द्रः+कला) तृतीया कला चन्द्रमा है (विद्युत्+कला) चतुर्थी कला विद्युत् है (सोम्य) हे सोम्य (ब्रह्मणः) ब्रह्म के (एषः) यह (चतुष्कलः) चतुष्कल (पादः) स्थान (ज्योतिष्मान्+नाम) ज्योतिष्मान् नाम का है अथवा ज्योतिष्मान् नाम से प्रसिद्ध है ॥ ३ ॥

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥४॥**

सः। यः। एतम्। एवम्। विद्वान्। चतुष्कलम्। पादम्। ब्रह्मणः। ज्योतिष्मान्। इति। उपास्ते। ज्योतिष्मान्। अस्मिन्। लोके। भवति। ज्योतिष्मतः। ह। लोकान्। जयति। यः। एतम्। एवम्। विद्वान्। चतुष्कलम्। पादम्। ब्रह्मणः। ज्योतिष्मान्। इति। उपास्ते ॥ ४ ॥

भाष्यम्—स य इति। ब्रह्मणो ज्योतिष्मतः पादस्य तत्त्ववेत्तापि ज्योतिष्मान् भवति। तथा ज्योतिष्मतो लोकान् सम्यग् विदित्वा तेषामखिलगुणग्रामावबोधेन विजयी भवतीत्युपचर्यते। पदानि सर्वाणि व्याख्यातप्रायाण्येव सन्ति ॥ ४ ॥

इति सप्तम खण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवादः—जो कोई ब्रह्मविद् ब्रह्म के इस चतुष्कल पाद को पूर्वोक्त प्रकार से जानता हुआ "ज्योतिष्मान्" समझ कर विचारता है। वह इस लोक में ज्योतिष्मान् होता है और निश्चय ज्योतिष्मान् लोगों का विजयी होता है। जो कोई इसको ऐसा जानता हुआ ब्रह्म के इस चतुष्कल पाद को ज्योतिष्मान् जान विचारता है ॥ ४ ॥

पदार्थः—( सः ) सो (यः) जो कोई ब्रह्मविद् पुरुष ( ब्रह्मणः+एतम्+चतुष्कलम्+पादम् ) ब्रह्म के इस चतुष्कल पाद को (एवम्+विद्वान्) ऐसा जानता हुआ ( ज्योतिष्मान्+इति ) ज्योतिष्मान् समझ (उपास्ते ) विचारता है (अस्मिन्+लोके+ज्योतिष्मान्+भवति ) वह इस लोक में ज्योतिष्मान् होता है तथा ( ज्योतिष्मतः+ह+लोकान्+जयति ) ज्योतिष्मान् लोकों का विजयी होता है ( यः ) इत्यादि पूर्ववत् ॥ ४ ॥

इति सप्तम खण्डस्य भाषाभाष्यं समाप्तम् ॥

* अथाष्टमः खण्डः *

**मद्गुष्टे पादं वक्तेति। स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार। ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥**

मद्गुः। ते। पादम्। वक्ता। इति। सः। ह। श्वोभूते। गाः। अभिप्रस्थापयाञ्चकार। ताः। यत्र। अभि। सायम्। बभूवुः। तत्र। अग्निम्। उपसमाधाय। गाः। उपरुध्य। समिधम्। आधाय। पश्चात्। अग्नेः। प्राङ्। उपोपविवेश ॥ १ ॥

भाष्यम्—मद्गुरिति। हे सोम्य सत्यकाम! अतः परमेकं पादं ब्रह्मणः। ते तुभ्यम्। मद्गुर्जलचरपक्षिविशेषः। वक्ता। वक्ष्यति। उपदेक्ष्यति। इति कथयित्वा हंसोऽगमत्। अन्यानि सर्वाणि पदानि पूर्ववद् वर्त्तन्ते। अतो न व्याख्यायन्ते ॥ १ ॥

अनुवाद—हे सोम्य सत्यकाम! तुम से ब्रह्म के एक पादका उपदेश मद्गु करेंगे। यह कह हंस वहां से चले गये। तदनन्तर वह सत्यकाम दूसरे दिन प्रातःकाल गौवों को आचार्य कुल की ओर ले चले। जहां इन को सन्ध्या होगई वहां वह सत्यकाम अग्नि को प्रज्वलितकर गौवों को गोष्ठी में छेक अग्नि में समिधाएं दे पश्चात् पूर्वाभिमुख हो अग्नि और उन गौवों के समीप ही बैठ गये ॥ १ ॥

पदार्थः—( मद्गुः ) एक प्रकार के जलचर पक्षी और सब पद पूर्ववत् हैं। इस लिये पदार्थ नहीं कहे गये ॥ १ ॥

**तं मद्गुरुपनिपत्याभ्युवाद—सत्यकाम३इति । भगव ! इति ह प्रति शुश्राव ॥ २ ॥**

तम् । मद्गुः । उपनिपत्य । अभ्युवाद । सत्यकाम ३ । इति । भगवः । इति । प्रतिशुश्राव ॥ २ ॥

भाष्यम्—तमिति । पूर्ववत् ।

अनुवाद—मद्गु उस के निकट आ हे सत्यकाम ! ऐसा सम्बोधन कर बोले । अनन्तर हे भगवन् क्या है । इस प्रकार सत्यकाम ने उत्तर दिया ॥ २ ॥

पदार्थः—पूर्ववत् जानना मद्गु=जलचर पक्षी ॥ २ ॥

**ब्रह्मणः सोम्य ! ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच—प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य ! चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥ ३ ॥**

ब्रह्मणः । सोम्य । ते । पादम् । ब्रवाणि । इति । ब्रवीतु । मे । भगवान् । इति । तस्मै । ह । उवाच । प्राणः । कला । चक्षुः । कला । श्रोत्रम् । कला । मनः । कला । एषः । वै । सोम्य । चतुष्कलः । पादः । ब्रह्मणः । आयतनवान् । नाम॥३॥

भाष्यम्--ब्रह्मण इति । हे सोम्य प्रिय तात सत्यकाम ! ते । तुभ्यम् । अहम् । ब्रह्मणः । एकम् । पादम् । ब्रवाणि । उपदिशेयम् । यदि तवाभिकाङ्क्षा स्यात् । इति मद्गुः सत्यकाममुवाच । सोऽपि तच्छ्रुत्वा । भगवान् । पूजावान् भवान् । मे । मह्यम् । ब्रवीतु । कृपया ब्रह्मणः पादमुपदिशतु । ततः । तस्मै । सत्यकामाय । सहोवाच । यत् ब्रह्मणः । एका कला प्राणोऽस्ति । द्वितीया कला चक्षुरस्ति । तृतीया कला श्रोत्रमस्ति । चतुर्थी कला मनोऽस्ति । हे सोम्य ! ब्रह्मणश्चतुष्कलः एष पाद आयतनवान् नाम । वै इति निश्चयेन ज्ञातव्यम् । आयतनम् नाम स्थानम् । अत्र सर्व करणोपहृतानां भोगानां मन एव आयतनं भवति । अतोऽत्र आयतन पदेन मनो गृह्यते । आयतनम् । मनो विद्यतेऽस्मिन्नित्यायतनवान् ॥ ३ ॥

अनुवाद—हे सोम्य सत्यकाम यदि तेरी आकांक्षा हो तो मैं तुम से ब्रह्म के एक पाद का उपदेश करूं । यह सुन सत्यकाम ने कहा कि भगवान् कृपाकर मुझ को ब्रह्म के उस पाद का उपदेश देवें । तब वह उस को उपदेश देने लगे कि ब्रह्म की एक

कला प्राण है । द्वितीया कला चक्षु है । तृतीया कला श्रोत्र है । चतुर्थी कला मन है । हे सोम्य ! ब्रह्म के इस चतुष्कलपाद का नाम आयतनवान् है ॥ ३ ॥

पदार्थः—मद्गु कहते हैं कि (सोम्य) हे सोम्य प्रिय सत्यकाम ! ( ते ) तुझ को मैं ( ब्रह्मणः पादम् ) ब्रह्म के एक पाद का (ब्रवाणि) उपदेश करूं । यदि तेरी इच्छा हो । यह सुन सत्यकाम ने कहा कि हे भगवन् (भगवान् ) परम पूजनीय आप (मे+ब्रवीतु इति ) ब्रह्म के एकपाद का उपदेश मुझ को कृपया देवें । यह प्रार्थना करता हूं । तदनन्तर वह ( तस्मै ) उस को ( ह+उवाच ) उपदेश देने लगे (प्राणः+कला) ब्रह्म के पाद की एक कला प्राण है (चक्षुः+कला) द्वितीया कला चक्षु है (श्रोत्रम्+कला) तृतीया कला श्रोत्र है ( मनः+कला ) चतुर्थी कला मन है (सोम्य ) हे सोम्य ( ब्रह्मणः+एषः+चतुष्कलः+पादः ) ब्रह्म का यह चतुष्कल पाद ( आयतनवान्+नाम ) आयतनवान् नामक है ( वै ) ऐसा निश्चय कर मानो ॥ ३ ॥

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥**

सः । यः । एतम् । एवम् । विद्वान् । चतुष्कलम् । पादम् । ब्रह्मणः । आयतनवान् । इति । उपास्ते । आयतनवान् । अस्मिन् । लोके । भवति । आयतनवतः । ह । लोकान् । जयति । यः । एतम् । एवम् । विद्वान् । चतुष्कलम् । पादम् । ब्रह्मणः । आयतनवान् । इति । उपास्ते ॥ ४ ॥

भाष्यम्—ऋज्वर्थं सर्वं प्रायः सर्वे पदार्था व्याख्याता एव ॥ ४ ॥

इत्यष्टमखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ८ ॥

अनुवाद—जो कोई ब्रह्मविद् ब्रह्म के इस चतुष्कलपाद को ऐसा जानता हुआ उसे "आयतनवान्" मानकर उस की भावना वा पुनः२ विचार करता है वह इस लोक में आयतनवान् होता है । और आयतनवान् लोक लोकान्तरों को निश्चय रूप से विजयी वा विज्ञाता होता है । जो ब्रह्मविद् ब्रह्म के इस चतुष्कल पाद को ऐसा जानता हुआ आयतनवान् मान उपासता है ॥ ४ ॥

पदार्थः—इस के सब पद पूर्व व्याख्यात हो चुके हैं अतः पदों का अर्थ यहां नहीं लिखा जाता ॥ ४ ॥ इत्यष्टम खण्डस्य भाषाभाष्यं समाप्तम् ॥ ८ ॥

* अथ नवमः खण्डः *

**प्रापहाचार्य कुलम्। तमाचार्योऽभ्युवाद-सत्यकाम ३ इति। भगव! इति ह प्रतिशुश्राव ॥ १ ॥**

प्राप। ह। आचार्यकुलम्। तम्। आचार्यः। अभ्युवाद। सत्यकाम३। इति भगवः। इति। ह। प्रतिशुश्राव ॥ १ ॥

भाष्यम्—प्रापेति। ह प्रसिद्धः। स सत्यकामो गवां सहस्रेणसाकम्। आचार्यकुलम्। गुरुकुलंगुरुवासभूमिम्। प्रापाजगाम। ततः। सत्यकामगवलोक्य। आचार्यः। दूरादेव। सत्यकाम३ इत्युच्चैस्तरां सम्बोध्य सोत्कण्ठमभ्युवाद प्रेम्णा आजुहाव। सोऽपि। आचार्य्य वचनं श्रुत्वा। भगवो हे भगवन्! अयमहमस्मि। भवत्कृपया भगवत्पादमूलं प्राप्तोस्मीति विनयेन प्रतिशुश्राव प्रत्युवाच ॥ १ ॥

अनुवादः—( वह सत्यकाम ) आचार्य कुल में लौट आये। आचार्य ने ( बड़े प्रेम से ) हे सत्यकाम ३ कह कर दूर से ही उसे पुकारा ( सत्यकाम ने ) हे भगवन् ( यह मैं हूं आप की कृपा से आप के चरणमूल में प्राप्त हुआ हूं क्या आज्ञा होती है ) इस नम्रता से उत्तर दिया ॥ १ ॥

पदार्थः—( ह ) वह प्रसिद्धसत्यकाम ( आचार्यकुलम् ) आचार्यकुलको ( प्राप ) लौट आया ( आचार्य्यः ) आचार्य्य ( सत्यकाम ३ ) दूर से ही सत्यकाम सत्यकाम कह कर ( तम् ) उस को ( अभ्युवाद ) पुकारने लगे। उस ने भी नम्रता से ( भगवः ) हे भगवन् क्या आज्ञा होती है ( इति ह ) इस तरह ( प्रतिशुश्राव ) प्रत्युत्तर दिया ॥ १ ॥

**ब्रह्मविदिव वै सोम्य! भासि को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे। भगवांस्त्वेव मे कामे ब्रूयात् ॥ २ ॥**

ब्रह्मविद्। इव। वै। सोम्य। भासि। कः। नु। त्वा। अनुशशास। इति। अन्ये। मनुष्येभ्यः। इति। ह। प्रतिजज्ञे। भगवान्। तु। एव। मे। कामे। ब्रूयात् ॥ २ ॥

भाष्यम्—ब्रह्मविदिति। स्मितानन्नं प्रफुल्लितगात्रं प्रसन्न चेतसमानन्दोल्लासितमात्म क्रीडमिवात्मरतिमिव निःशोकमिव लब्धात्मप्रसादमिव स्वशिष्यं सत्यकामं निरीक्ष्याचार्य्योऽप्राक्षीत्।

हे सोम्य ! वै निश्चितम् । त्वम् । ब्रह्मविदिवब्रह्मज्ञ इव । भासि शोभसे । नु । ननु । को ब्रह्मविद् । मदन्यः । त्वा त्वाम् । अनुशशास । अनुशिष्टवान् । उपदिष्टवानित्यर्थः । मत्तोऽनधीतविद्योऽपि सविद्य इव त्वं मुखेन चेष्टया च लक्ष्यसे अतस्त्वमुपदिष्टोऽसि केनापि कारुणिकेनात्मविदा । स कोऽस्तीदृक्कारुणिकः पुरुषः । सत्यकाम आचार्यवचनं श्रुत्वोत्तरति । मनुष्येभ्य अन्य आचार्य्याइति । मह्यमनुशिष्टवन्त इति वाक्य शेषः । एते दृश्यमानाः प्राकृताः पदार्था एव मम आचार्य्या अभूवन् न केऽपि मनुष्या इति ह प्रतिजज्ञे प्रतिज्ञातवान्प्रत्युक्तवानित्यर्थः । तथापि हे भगवन् ! नाहमात्मविद् । नाचार्य्यः सम्वृत्तोस्मि न च तावतैवानुशासनेनाहं सन्तुष्टः । न वा भवदीयां शिष्यतामपहाय समावर्तिष्ये । किन्तु भगवानेव । मे मह्यम् । कामे । इच्छायांसत्याम् । ब्रूयादुपदिशतु हे भगवन् ! अहं । तानुपदेशान् नार्थतो गणयामि । भगवदुपदेश एव मामुपकारिणं ब्रह्मविदञ्चविधास्यति । अतोऽवश्यं भगवान् मह्यमुपदिशतु ॥ २ ॥

अनुवाद–( आचार्य ने पूछा ) कि हे सोम्य ! तुम ब्रह्मवित् समान, निश्चय, सुशोभित होरहे हो । तुझे किसने अनुशासन किया है । यह सुन सत्यकाम ने प्रतिज्ञा की कि हे भगवन् ! मनुष्यों से अन्य । परन्तु भगवान् ही मुझ को स्वेच्छानुसार उपदेश देवें ॥ २ ॥

पदार्थः–( सोम्य ) हे सोम्य सुशील सुन्दर प्रकृते सत्यकाम ! ( वै ) निश्चय । तुम ( ब्रह्मविद्+इव ) ब्रह्मविद् पुरुष की नाईं ( भासि ) सुशोभित होरहे हो । हे सोम्य! ( कः ) किसने ( त्वा ) तुझ को ( अनुशशास ) अनुशासन किया ( नु ) मैं तर्क करता हूं कि अवश्य तुझ को किसी ने उपदेश किया है । जिससे तुम ऐसे भासित होरहे हो ( इति ) आचार्य्य ने ऐसा पूछा यह सुन सत्यकाम ने ( प्रतिजज्ञे ) प्रतिज्ञा की । अर्थात् उत्तर दिया कि (अन्ये+मनुष्येभ्यः+इति) हे भगवन् ! मनुष्यों से अन्य अर्थात् मनुष्यों से अन्यों ने मुझे उपदेश दिया है ( तु ) परन्तु ( भगवान्+एव ) आप ही ( मे ) मुझ को ( कामे ) अपनी इच्छानुसार जब जब आप की इच्छा हो तब२ (ब्रूयात् ) उपदेश देवें ॥ २ ॥

भाष्याशयः–स्मितानन, प्रफुल्लितगात्र, प्रसन्नचेता, आनन्दोल्लासित, आत्मक्रीड़ की नाईं आत्मरत के समान निःशोकसा, लब्धात्म प्रसाद सा उस सत्यकाम को देख आचार्य्य ने समझा कि यह ब्रह्मवित् सा प्रतीत होता है । क्योंकि ब्रह्मवित् पुरुष के लक्षण ही कुछ अन्य होते हैं । विद्वान् लोग मुख की कान्ति और चेष्टा से समझ लेते हैं सत्यकाम

की चेष्टा से आचार्य्य ने समझा कि यह अवश्य मुनि हो आया है अतः उससे पूछा कि तुम को किस ने शिक्षा दी इत्यादि ॥ २ ॥

**श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयतीति । तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति ॥ ३ ॥**

श्रुतम् । हि । एव । मे । भगवद्दृशेभ्यः । आचार्य्याद् । ह । एव । विद्या । विदिता । साधिष्ठम् । प्रापयति । इति । तस्मै । ह । एतत् । एव । उवाच । अत्र । ह । न । किञ्चन । वीयाय । इति । वीयाय । इति ॥ ३ ॥

भाष्यम्—श्रुतमिति । सत्यकामोब्रूते । भगवन् गुरो ! लब्धा विद्या प्रकृतितः । प्रसादोऽपि प्राप्तः । आत्मरतिरपि स्वल्पीयसी समुपरूढा । तथाप्याचार्योपदेशपीयूषप्लवपानमन्तरा न तत्सर्वं साधीय इति । कथम् ? भगवद्दृशेभ्योभगवत्समानेभ्य आचार्येभ्यःसकाशात् । मे मम । श्रुतं श्रवणम् । हि निश्चयेनैव विद्यते । किमस्ति श्रुतमित्याकाङ्क्षायाम् । आचार्य्याद्धैव । आचार्य्यादेव गुरोः सकाशादेव । विदिताऽधीता विज्ञाता सती विद्या । साधिष्ठं साधुतमत्वं कल्याणतमत्वमित्यर्थः । प्रापयति साधकं नयतीति । अतोयद्दच्छयासिभगवानेव ब्रह्मानुशास्तु । तत इदं सत्यकामवचनं श्रुत्वाऽऽआचार्योह । सुशीलाय, ऋजवे, शुश्रूषवे, ब्रह्मनिष्ठाय तस्मै सत्यकामाय । एतदेव । प्राकृतपदार्थेभ्यो यज्ज्ञानं पूर्वमुपलब्धम् । तदेतदेवविज्ञानमुवाचोपदिदेश । हे सोम्य ! अत्रास्यां प्रकृतिलब्धायां विद्यायाम् । किंचन किञ्चिदपिन्यूनत्वम् । न ह वीयाय न विद्यते । पूर्णमेतज्ज्ञानं त्वयोपलब्धम् । तदेव मननादि व्यापारेण निदिध्यास्यतां नातः परं किमपितत्त्वमवशिष्यते । द्विरावृत्तिर्विद्यापरिसमाप्त्यर्था ॥ ३ ॥ इति नवम खण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद—क्योंकि पूजनीय आप के समान आचार्य्यों से मुझको सुना हुआ ही है कि आचार्य से ही विदित विद्या कल्याणकर वस्तु की ओर ले जाती है ( अतः मैं आपसे प्रार्थना करता हूं कि आप ही मुझको ब्रह्म विद्या का उपदेश देवें ) यह सुन आचार्य ने उसी विज्ञान का उस को उपदेश किया और कहा कि इसमें कोई न्यूनता नहीं रह गई है । इस में कोई न्यूनता नहीं रहगई है । इति ॥ ३ ॥

पदार्थः—(हि) क्योंकि ( भगवद् दृशेभ्यः ) भगवान् आप के समान आचार्य्यों से (मे) मुझ को (श्रुतम्+एव ) सुना हुआ ही है कि ( आचार्य्याद्+ह+एव ) आचार्य्य से ही ( विदिता ) ( विद्या ) विदितविद्या ( साधिष्ठम् ) साधुतम मार्ग को (प्रापयति)

ले जाती है ( इति ) इस हेतु हे भगवन्! मुझे ब्रह्म विद्या का उपदेश देवें। अनन्तर ( तस्मै ) उसको ( ह ) प्रसिद्ध आचार्य्य ने ( एतत्+एव ) इसी ब्रह्म ज्ञान का (उवाच ) उपदेश दिया और कहा कि (अत्र ह ) इस विद्या में ( न किंचन) कुछ नहीं ( वीयाय) छूटा हुआ है ( वीयाय ) यह दो वार पाठ विद्या समाप्त्यर्थ है ॥ ३ ॥

भाष्याशयः—यद्यपि प्राकृत पदार्थों से मनन द्वारा विद्या पाई है। प्रसाद भी उपलब्ध हुआ है। कुछ आत्म रति भी होती जाती है जैसा कि आप ने मेरी चेष्टा और मुखादिक छबियों से अनुमान किया है। परन्तु प्राकृत पदार्थ जड़ होने के कारण मेरी सम्पूर्ण शङ्का को दूर नहीं कर सकते। अतः आप आचार्य से शिक्षा की पूर्णता करनी आवश्यक है। शङ्का रहित आप से विदित हुई हुई विद्या ही मुझ को कल्याण-मार्ग की ओर लेजायगी। अतः आप मुझे ब्रह्मविद्या का उपदेश देवें॥ ३ ॥

इति नवमखण्डस्य भाषाभाष्यं समाप्तम् ॥ ९ ॥

* अथ दशमः खण्डः *

**उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार । स ह स्मान्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ॥ १ ॥**

उपकोसलः । ह । वै । कामलायनः । सत्यकामे । जाबाले । ब्रह्मचर्यम् । उवास । तस्य । ह । द्वादश । वर्षाणि । अग्नीन् । परिचचार । सः । ह । स्म । अन्यान् । अन्तेवासिनः । समावर्तयन् । तम् । ह । स्म । एव । न । समावर्तयति ॥ १ ॥

भाष्यम्—उपकोसल इति । हेतिहासद्योतकः । कदाचित् । कामलायनः कमलस्यर्षेरपत्यंपुमान् कामलायनः। उपकोसलः । उपकोसलनामा कश्चिदृषिकुमारः। सत्यकामे जाबाले। वै एवार्थकः । सत्यकामस्य जाबालस्य पादमूले । ब्रह्मचर्यं सम्पादयितुमिति वाक्यशेषः। उवासोषितवान् । तस्य ह ब्रह्मचर्यव्रतमाचरत उपकोसलस्य । द्वादश वर्षाणि । व्यतीतानीतिशेषः । यद्वा । तस्यहाचार्य्यस्य । अग्नीन् । अग्न्युपलक्षितान् । यज्ञान् । द्वादशवर्षाणि परिचचारेत्यन्वयः । अर्थात् अग्नीन् विविधान् ब्रह्मचारिणामुपयोगिनो यज्ञान् व्रतानि परिचचार। आचारितवान् साधितवान् । न केवलं सोऽध्ययन व्रती एव । किन्तु तत्कालोचितसत्यक्षमाऽहरहःसन्ध्योपासनगुरुशुश्रूषणादि यज्ञान् अपि अनुतिष्ठन्नासीत् । तथापि स ह सत्यकामो जाबाल आचार्यः । अन्यान् । तदतिरिक्तान् । अन्तेवासिनः । ब्रह्मचा-

रिणः । समावर्तयन् । विद्यां ग्राहयित्वा समापय्यच स्वं स्वं गृहं तांस्तान् परावर्तयन् स्म सन् । तं हैव । तमेव । उपकोसलम् । न समावर्तयति स्म । समावर्तनयोग्यमपि तं न समावर्तयतिस्म ॥ १ ॥

अनुवाद–यह विषय प्राचीन इतिहास में प्रसिद्ध है कि कामलायन उपकोसल नाम के कुमार ने ऋषि सत्यकाम जाबाल के चरण के समीप ब्रह्मचर्य व्रत के लिये वास किया और उसको १२ द्वादशवर्ष बीत गये । इसने तत्कालोचित विविध यज्ञ भी किये । अथवा उन के यज्ञों को द्वादशवर्षतक करते रहे । तथापि वे सत्यकाम आचार्य्य अन्य अन्तेवासियों का समावर्तन कर दिया करते थे परन्तु इसका समावर्तन नहीं करते थे।१।

पदार्थः–( ह ) ह शब्द ऐसे स्थानों में प्रायः इतिहास सूचक होता है ( कामलायनः ) कमल ऋषि का पुत्र ( उपकोसलः ) उपकोसल ने ( जाबाले+सत्यकामे+वै) जाबाल सत्यकाम के निकट में ही ( ब्रह्मचर्यम् ) ब्रह्मचर्य व्रत के हेतु ( उवास ) वास किया ( ह ) यह प्रसिद्ध है कि ( तस्य ) उस उपकोसल के (द्वादश+वर्षाणि ) द्वादश वर्ष व्यतीत हो गये और ( अग्नीन् ) सत्य, क्षमा, अहरहः सन्ध्योपासन, गुरु शुश्रूषा आदि विविध यज्ञों ( जो उस समय के उपयोगी थे ) का ( परिचचार ) सेवन भी किया । परन्तु ( सः+ह ) वे प्रसिद्ध सत्यकाम ( अन्यान् ) दूसरे दूसरे ( अन्तेवासिनः ) ब्रह्मचारियों को ( समावर्तयन्+स्म ) समावर्त्तित करते हुए ( तम्+ह+एव ) केवल उसी उपकोसल को ( न+समावर्तयति+स्म ) समावर्तित नहीं किया करते थे । अर्थात् अन्य अन्तेवासियों का समावर्तन तो आचार्य ने कर दिया जो उनके सहपाठी थे । परन्तु आचार्य ने अपने मन में कुछ विचार कर उपकोसल का समावर्तन संस्कार योग्य होने पर भी नहीं किया ॥ १ ॥

**तं जायोवाच–तप्तो ब्रह्मचारी कुशलमग्नीन् परिचचारीन्मा त्वाग्नयः परिप्रवोचन् प्रब्रूह्यस्मा इति । तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे ॥ २ ॥**

तम् । जाया । उवाच । तप्तः । ब्रह्मचारी । कुशलम् । अग्नीन् । परिचचारीत् । मा । त्वा । अग्नयः । परिप्रवोचन् । प्रब्रूहि । अस्मै । इति । तस्मै । ह । अप्रोच्य । एव । प्रवासाञ्चक्रे ॥ २ ॥

भाष्यम्–तमिति । प्रियं व्रतिनं विद्यास्नातं व्रतस्नातञ्च शिष्यमसमावर्तयन्तं निजस्वामिनं दृष्ट्वा तं प्रति जाया निजधर्मपत्नी । उवाच । हे पते ! अयं ब्रह्मचारी ।

तप्तोऽस्ति । विद्याभ्यसनादिव्रतं सम्यगनुष्ठितवानस्ति । पुनः । अग्नीन् । एतत् कालोचितान् यज्ञानपि । कुशलं सम्यक् परिचचारीत् । परिचरितवान् । आर्षोऽयं प्रयोगः । ईदृशमन्तेवासिनं त्वं कथं न समावर्तयसि । हे स्वामिन् ! उचित कार्यमननुतिष्ठन्तम् । त्वा । त्वाम् । अग्नयोव्रतानि । मा परिप्रवोचन् मा त्यजन्तु । त्वयाकृतानि तानि व्रतानि मा विनष्टानि भवन्त्वित्यर्थः । पक्षपातिनो जनान् सर्वाणि व्रतानि धर्माश्चत्यजन्ति इत्यलङ्कारवर्णना । तस्माद्धेतोः । अस्मै अन्तेवासिने । प्रब्रूहि । यत्किमप्यध्याप्यमवशिष्यते । तदध्यापय । अध्याप्य च । समावर्तय । इत्यहं प्रार्थये । सहाचार्य्यः पत्न्योक्तोऽपि तस्मै ब्रह्मचारिणे । अप्रोच्यैव । अनुक्त्वैव अनध्याप्यैव । असमावर्त्यैव च प्रवासाञ्चक्रे । प्रवासाय प्रतस्थे ॥ २ ॥

अनुवाद—आचार्यपत्नी ने अपने स्वामी से प्रार्थना की कि यह ब्रह्मचारी अच्छे प्रकार तपयुक्त हुआ है और व्रत भी अच्छे प्रकार किये हैं ( पुनः आप इसका समावर्त्तन क्यों नहीं करते? ) ऐसा न हो कि आपको व्रतादिक धर्म त्याग चले जांय । अथवा आपको व्रतादि धर्म न त्यागे । अतः इस ब्रह्मचारी को उपदेश दे समावर्त्तन कीजिये यह आप से प्रार्थना करती हूं । परन्तु आचार्य उपदेश न देकर ही विदेश को चले गये ॥ २ ॥

पदार्थः—(जाया) आचार्य पत्नी ने अपने (तम्) उस पति से ( उवाच) प्रार्थना की कि ( ब्रह्मचारी ) यह उपकोसल ब्रह्मचारी ( तप्तः ) विद्या और तप में तप्त हुआ है अर्थात् विद्याभ्यासादि व्रत अच्छी तरह से निवाहे ( कुशलम् ) सब तरह से ( अग्नीन् ) ब्रह्मचर्यकालोचित् यज्ञ भी ( परिचचारीत् ) सेवन किये । अतः अन्य ब्रह्मचारीवत् इसका भी समावर्त्तन करें । हे स्वामिन् ! ( अग्नयः ) सत्यादिव्रत (त्वा) आपको ( मा) मत (परि प्रवोचन्) त्यागें । ऐसा न हो कि पक्षपाती आपको देख सकल धर्म्म कर्म्म आप से दूर होजावें । अतः ( अस्मै ) इस ब्रह्मचारी को ( प्रब्रूहि ) जो कुछ उपदेश वा पढ़ाना हो सो पढ़ाकर समावर्त्तित कीजिये ( इति ) यह मैं प्रार्थना करती हूं । अनन्तर यह आचार्य ( तस्मै ) उस ब्रह्मचारी को ( अप्रोच्यैव ) उपदेश वा व्याख्यान न देकर ही ( प्रवासाञ्चक्रे ) विदेश को चले गये ॥ २ ॥

**स ह व्याधिनाऽनशितुं दध्रे । तमाचार्य जायोवाच-ब्रह्मचारिन्नशान किन्नु नाश्नासीति । स होवाच—बहव**

## इमेऽस्मिन्पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥ ३ ॥

सः । ह । व्याधिना । अनशितुम् । दध्रे । तम् । आचार्यजाया । उवाच । ब्रह्मचारिन् । अशान । किम् । नु । न । अश्नासि । इति । सः । ह । उवाच । बहवः । इमे । अस्मिन् । पुरुषे । कामाः । नानात्ययाः । व्याधिभिः । प्रतिपूर्णः । अस्मि । न । अशिष्यामि ॥ ३ ॥

भाष्यम्-स इति । स ह प्रसिद्धो ब्रह्मचारी व्याधिना मानसेन दुःखेन कारणेन । अनशितुम् । अभोक्तुम् अभोजनव्रतमित्यर्थः । दध्रे । धृतवान् । तम् । ईदृशीमवस्थामापन्नं तं ब्रह्मचारिणं प्रति । आचार्यजाया । उवाच । हे ब्रह्मचारिन्! अशान । भुंक्ष्व! किन्नु । कथम् । न । नहि । अश्नासि । अत्सि । इति । सहाचार्यजायामुवाच । अस्मिन् भाग्यरहिते अकृतकृत्ये अकृपार्हे मयि पुरुषे । इमे बहवः कामाः । कर्त्तव्यतां प्रति मनसि पुनः पुनरुत्तिष्ठन्तोऽनेके कामा आकांक्षा वर्तन्ते । इतो गत्वेदं साधयिष्यामि । इत्थमाचरिष्यामि । अथवा । जगति इमानि कर्त्तव्यानि मम+सन्ति । इत्यादयोऽनेकेमनोरथा मम मनसि हे मातः! समुत्तिष्ठन्ति । असमावर्त्तनान्नाहं किमप्यनुष्ठातु मर्हामि । अतोऽनशनेन मरणमेव वरम् । अतो नानात्ययाः । विविध गतय आधयो मम चेतसि वर्तन्ते । तैर्व्याधिभिः । अहं प्रतिपूर्णोऽस्मि । अतो नाशिष्यामि । न भोक्ष्ये ॥ ३ ॥

अनुवाद-वह प्रसिद्ध उपकोसल ब्रह्मचारी मानसिक व्यथा के कारण अनशन व्रत करने लगा । उससे तब आचार्य पत्नी बोली हे ब्रह्मचारिन्! भोजन करो । क्यों नहीं खाते हो । उसने निवेदन किया कि इस पुरुष में अनेक कामनाएं हैं और मानसिक दुःख अनेक गति वाले हैं । इन व्याधियों से मैं परिपूर्ण होरहा हूं । हे मातः! अतः मैं नहीं खाऊंगा ॥ ३ ॥

पदार्थः-( सः+ह ) उस प्रसिद्ध उपकोसल ब्रह्मचारी ने ( व्याधिना ) मानसिक विविध व्यथाओं के कारण ( अनशितुम् ) अनशन ( दध्रे ) धारण किया ( तम् ) उस अनशन व्रतारम्भी ब्रह्मचारी से ( आचार्यजाया ) आचार्य पत्नी ( उवाच ) बोली । ( ब्रह्मचारिन् ) हे ब्रह्मचारिन्! ( अशान ) खाओ भोजन करो (किन्नु+न ) क्यों नहीं ( अश्नासि ) खाते हो ( इति ) इस वचन को सुन ( सः+ह ) वह बोला ( अस्मिन् ) भाग्यहीन (पुरुषे) मुझ पुरुष में (नानात्ययाः) नाना मार्गवाले ( इमे बहवः कामाः ) ये अनेक इच्छाएं विद्यमान हैं ( व्याधिभिः ) उन मानसिक व्याधियों से ( प्रतिपूर्णोऽस्मि) परिपूर्ण हूं । अतः ( न+अशिष्यामि ) मैं भोजन नहीं करूंगा ॥ इति ॥ ३ ॥

**अथ हाग्नयः समुदिरे—तप्तो ब्रह्मचारी कुशलं न पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः ॥ ४ ॥**

अथ । ह । अग्नयः । समुदिरे । तप्तः । ब्रह्मचारी । कुशलम् । नः । पर्य्यचारीत् । हन्त । अस्मै । प्रब्रवाम । इति । तस्मै । ह । ऊचुः ॥ ४ ॥

भाष्यम्—अथेति । अथ ह उपकोसलस्यानशनव्रतधारणादनन्तरम् । अग्नयः । विविधयज्ञाः । समुदिरे । उपकोसलाय । प्रकाशिता बभूवुः । तप्तः । विद्याभ्यसनव्रतादिषु कृतातिपरिश्रमः । एष ब्रह्मचारी । नः । अस्मान् । कुशलं सम्यक् पर्य्यचारीत् । सेवितवान् । अतः हन्त दुःखिताय श्रद्दधानाय तपस्विने करुणापात्राय । अस्मै । सर्वे मिलित्वा वयं प्रब्रवाम । ब्रह्मविद्या मनुशासाम । इति सर्वेऽग्नयो मनसि विचार्य्य तस्मै ह वक्ष्यमाणां ब्रह्मविद्यामूचुः । उपदिदिशुः ॥ ४ ॥

अनुवाद—अनन्तर उस को आग्नेय शक्तिएं भासित होने लगीं । मानो वे शक्तिएं परस्पर बोल रही हैं कि तप्त ब्रह्मचारी ने सम्यक्तया हम लोगों की सेवा की आओ इस तपस्वी ब्रह्मचारीको ब्रह्मविद्याप्रदान करें मानो उसको वक्ष्यमाण विद्या उन शक्तियों ने ही दी ॥ ४ ॥

पदार्थः—( अथ ) अनन्तर ( ह ) प्रसिद्ध (अग्नयः) अग्नि शक्तियां (समुदिरे) उपकोसल को भासित होने लगीं । मानो वे अग्निशक्तियां परस्पर कह रहीं हैं और उपकोसल श्रवण कर रहे हैं वे अग्नि शक्तियां कहती हैं यथा ( तप्तः+ब्रह्मचारी ) उपकोसल ब्रह्मचारी अच्छे प्रकार अपने व्रतों में तप्त हुआ अर्थात् विद्याध्ययनार्थ जिन जिन गुरु शुश्रूषा आदि तपश्चरणों की आवश्यकता है उन२ सम्पूर्ण तपों को इस ब्रह्मचारीने किया और ( कुशलम् ) निपुणता के साथ ( नः+पर्य्यचारीत् ) हम लोगों की सेवा की अर्थात् ब्रह्मचर्य्याश्रम में जितने यज्ञानुष्ठान करने चाहिये वे भी किये इस हेतु (हन्त) यदि सबों की सम्मति हो तो ( अस्मै ) इस शुश्रूषु ब्रह्मचारीको (प्रब्रवाम) सब कोई मिल कर उपदेश देवें ( इति ) इस प्रकार सबों की सम्मति स्थित हुई कि इस को उपदेश देना चाहिये । तत्पश्चात् ( तस्मै+ह+उवाच) उस ब्रह्मचारी को वक्ष्यमाण रीति पर उपदेश देने लगे ॥ ४ ॥

**प्राणो ब्रह्म । कं ब्रह्म । खं ब्रह्मेति । स होवाच-विजानाम्यहं यत्प्राणो ब्रह्म । कञ्च तु खञ्च न वि-**

**जानामीति । ते होचुर्यद्वाव कं तदेव खम् । यदेव खं तदेव कमिति । प्राणञ्चहास्मै तदाकाशञ्चोचुः ॥५॥**

प्राणः । ब्रह्म । कम् । ब्रह्म । खम् । ब्रह्म । इति । सः । ह । उवाच । विजानामि । अहम् । यत् । प्राणः । ब्रह्म । कम् । च । तु । खम् । च । न । विजानामि । इति । ते । ह । ऊचुः । यद् । वाव । कम् । तद् । एव । खम् । यत् । एव । खम् । तत् । एव । कम् । इति । प्राणम् । च । ह । अस्मै । तद् । आकाशम् । च । ऊचुः ॥ ५ ॥

भाष्यम्—प्राण इति । तेषामग्नीनामुपदेशः कथयति । हे उपकोसल ! प्राणो ब्रह्मास्ति। सर्वस्यास्यब्रह्माण्डस्य ब्रह्मैव प्राणयितृ जीवयितृस्ति । प्राणयति जीवयतीति प्राणः । सत्येव ब्रह्मणि सृष्टिस्थितिः । यदि ब्रह्म नाभविष्यत्तर्हीयं विसृष्टिरपि नाभविष्यत् । अतः प्राणो ब्रह्मेति । तथाच । कं ब्रह्म । न केवलं तद्ब्रह्म प्राणएव । सर्वेषां सुखदात्रपि तदेव । कशब्दः सुखार्थः । तत्प्राणयितृ सुखयितृ च ब्रह्म कास्तीति जिज्ञासायामाह । खं ब्रह्म । तद्ब्रह्म सर्वत्रैव व्यापकं वर्त्तते । ख शब्द आकाशवाची । आकाशवत् सूक्ष्मं नीरूपं निर्विकारं निर्लेपं निरञ्जनं सर्वत्र स्थितञ्चेत्यादि ब्रह्मास्तीति ख शब्देन विज्ञेयम् । इति ब्रह्मणस्त्रीन् गुणाञ्च्छ्रुत्वा सहोपकोसल उवाच । हे अग्नयः ! विजानाम्यहं वेद्म्यहं यत्प्राणो ब्रह्म । प्राणो ब्रह्मास्तीति वेद्मि । परन्तु ब्रह्म कञ्च खञ्चास्तीति न जानामि । अतः केन प्रकारेण तद्ब्रह्म कञ्च खञ्चास्तीति मां बोधयन्तु । इत्थं विज्ञप्तास्तेहाग्नय ऊचुः । हे उपकोसल ! यद्वाव । यदेव । कम् । तदेव खम् । यदेव खं तदेव कमपि । नास्त्येतयोर्भेदः । इति कथयित्वा पुनरपि । तस्मै उपकोसलाय । प्राणञ्च प्राणस्वरूपं ब्रह्म च । तदाकाशञ्च । आकाशस्वरूपञ्च तद् ब्रह्म । ऊचुः बोधयामासुः ॥ ५ ॥

इति दशम खण्डस्य संस्कृत भाष्यं समाप्तम् ॥

अनुवाद—प्राण ब्रह्म है । क ब्रह्म है। ख ब्रह्म है। यह सुन उसने कहा कि 'प्राण ब्रह्म है' इस को तो मैं जानता हूं परन्तु क और ख ब्रह्म है इसको मैं नहीं जानता हूं। इति । तब वे बोले कि जो ही 'क' है वही 'ख' है । जो ही 'ख' है वही 'क' है (इतना कह ) उन्होंने पुनः उपकोसल से प्राणस्वरूप और आकाश स्वरूप उस ब्रह्म के विषय में उपदेश दिया ॥ ५ ॥

पदार्थः—आगे उन अग्नियों का उपदेश कहते हैं ( प्राणः+ब्रह्म ) हे उपकोसल ! वह ब्रह्म प्राण स्वरूप है उसी की स्थिति से सृष्टि की स्थिति है यदि ब्रह्म न हो तो

वह विचित्र सृष्टि कदापि नहीं रह सकती । अतः ब्रह्म प्राण स्वरूप है और ( कम्+ब्रह्म ) वह ब्रह्म केवल प्राण ही नहीं है किन्तु सुखस्वरूप भी है । अब शंका होती है कि वह प्राण स्वरूप और सुख स्वरूप ब्रह्म है तो कहां है ? अतः आगे कहते हैं कि ( खम्+ब्रह्म+इति) ख शब्द आकाशवाची है । वह ब्रह्म आकाशवत् सूक्ष्म नीरूप निराकार निर्विकल्प निर्लेप निरञ्जन और सर्वत्र स्थित है कोई परमाणु मात्र भी स्थान नहीं जहां वह न हो । इतना सुन ( सः+ह+उवाच ) वह उपकोसल कहता है कि हे अग्नियो ! ( अहम्+जानामि ) मैं जानता हूं ( यत् ) कि ( प्राणः+ब्रह्म ) प्राण ब्रह्म है। अर्थात् ब्रह्म प्राण स्वरूप है इसको मैं जानता हूं ( तु ) परन्तु ( कम्+च+खम्+च ) वह ब्रह्म सुखस्वरूप और आकाशस्वरूप है ( न+विजानामि ) इसको नहीं जानता हूं ( इति ) यह उपकोसल का वचन सुन ( ते+ह+ऊचुः ) वे अग्नि बोले उपकोसल ! ( यद्+वाव ) जो ही ( कम् ) क=आनन्दस्वरूप है ( तद्+एव ) वही ( खम् ) सर्वत्र स्थित भी है । और ( यदेव+खम् ) जो ही सर्वत्र स्थित है (तदेव+कम्+इति) वही आनन्द स्वरूप भी है । इन दोनों में भेद नहीं । इस प्रकार 'क' और 'ख' के विषय में कह वे अग्नि ( अस्मै ) इस उपकोसल से ( प्राणञ्च ) प्राणस्वरूप और ( आकाशञ्च ) आकाशस्वरूप ( तत् ) उस ब्रह्म के विषय में ( ऊचुः ) कहने लगे ॥ ५ ॥ इति दशम खण्डस्य भाषाभाष्यं समाप्तम् ॥ १० ॥

* अथैकादशः खण्डः *

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति । य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

अथ । ह । एनम् । गार्हपत्यः । अनुशशास । पृथिवी । अग्निः । अन्नम् । आदित्यः । इति । यः । एषः । आदित्ये । पुरुषः । दृश्यते । सः । अहम् । अस्मि । सः । एव । अहम् । अस्मि । इति ॥ १ ॥

भाष्यम्—अथ हैनमिति । सम्भूय सर्वेषामग्नीनां कथनादनन्तरम्। हेति प्रसिद्धम्। एनं ब्रह्मचारिणम् । गार्हपत्योऽग्निः । अनुशशास अनुशिष्टवानिव । किमनुशशासेत्याह । पृथिवी । अग्निः । अन्नम् । आदित्यश्च एते मम पोषकाः । अहञ्च तेषाम् । इत्युक्त्वा पुनराह गार्हपत्योऽग्निः । य एषः । आदित्ये सूर्ये । पुरुषः पुरि सूर्यमण्डलस्वरूपे शरीरे शेते वर्त्तते इति पुरुषः शक्ति विशेषो दृश्यते । हे ब्रह्मचारिन् ! सोहमस्मि । अहं गार्हपत्योग्निः

सूर्य्यशक्तेर्न विभिन्नोऽस्मि । या शक्तिः सूर्ये। सैव मय्यपि । पुनर्दृढीकरणाय कथयति । स एवाहमस्मीति ॥ १ ॥

अनुवाद-अनन्तर गार्हपत्याग्नि ने इस ( ब्रह्मचारी ) को शिक्षा दी । पृथिवी, अग्नि, अन्न और सूर्य (ये चारों मेरे पोषक हैं और मैं उनका पोषक हूं) हे ब्रह्मचारी ! जो यह सूर्य में शक्ति विशेष है वह मैं हूं, वही मैं हूं ॥ १ ॥

पदार्थः-( अथ ) अनन्तर ( ह ) प्रसिद्ध ( एनम् ) इस ब्रह्मचारी को (गार्हपत्यः) गार्हपत्य अग्नि ने ( अनुशशास ) शिक्षा दी । क्या शिक्षा दी सो आगे कहते हैं (पृथिवी+अग्निः+अन्नम्+आदित्यः ) पृथिवी, अग्नि, अन्न और आदित्य ये चारों मेरे पोषक हैं और मैं उन का पोषक हूं ( इति ) इतना कह पुनः गार्हपत्य अग्नि मानो कहते हैं । हे ब्रह्मचारिन् ! ( यः+एषः ) जो यह ( आदित्ये ) सूर्य मण्डल में (पुरुषः) शक्ति विशेष ( दृश्यते ) दीखता है ( सः+अहम्+अस्मि ) वह मैं हूं ( सः+एव+अहम्+अस्मि ) वही मैं हूं ( इति ) ॥ १ ॥

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥**

सः । यः । एतम् । एवम् । विद्वान् । उपास्ते । अपहते । पापकृत्याम् । लोकी । भवति । सर्वम् । आयुः । एति । ज्योक् । जीवति । न । अस्य । अवरपुरुषाः । क्षीयन्ते । उप । वयम् । तम् । भुञ्जामः । अस्मिन् । च । लोके । अमुष्मिन् । च । यः । एतम् । एवम् । विद्वान् उपास्ते ॥ २ ॥

भाष्यम्-स य इति । स यः कश्चिदुपासकः । एतम् । गार्हपत्यमग्निम् । एवं यथोक्तगुणयुक्तम् चतुर्धाप्रविभक्तम् । विद्वान् । जानन् सन् । उपास्ते भावयति । सः । पापकृत्यां पापं कर्म। अपहते विनाशयति। पुनः सः । लोकी लोकवान् भवति । पुनः। सर्वमायुः । वर्षशतमायुः । एति प्राप्नोति । ज्योगुज्ज्वलं यथा तथा जीवति। प्रख्यातोभवतीत्यर्थः । अस्य विदुषः । अवरपुरुषा अवराश्च ते पुरुषा अवर पुरुषाः । परसन्ततिजाः पुरुषा न क्षीयन्ते । सन्तत्युच्छेदो न भवतीत्यर्थः । हे ब्रह्मचारिन् ! तं विद्वांसम् । अस्मिँल्लोके अमुष्मिंश्चलोके । वयमग्नयः । उपभुञ्जामः पालयामः । य एतमेवं विद्वानुपास्ते । तस्यैतत्फलमित्यर्थः ॥ २ ॥ इत्येकादश खण्डस्य संस्कृत भाष्यं समाप्तम् ॥ ११ ॥

अनुवादः—जो कोई उपासक इस गार्हपत्य अग्नि को ऐसा जानता हुआ विचारता है, वह पापकर्म को नाश करता है । लोकवान् होता है । सम्पूर्ण आयु को पाता है। उज्ज्वल जीवन जीता है। इस के अवर पुरुष क्षीण नहीं होते। इस लोक और उस लोक में हम लोग उस की रक्षा करते हैं । जो कोई इस को ऐसा जानता हुआ विचारता है ॥ २ ॥

पदार्थः-( सः ) सो ( यः ) जो कोई उपासक ( एतम् ) इस गार्हपत्य अग्नि को ( एवम्+विद्वान् ) पूर्वोक्त रीति से जानता हुआ ( उपास्ते ) विचारता है वा जानता है । वह ( पापकृत्याम् ) पाप कर्म को ( अपहते ) नाश करता है ( लोकी+भवति ) लोकवान् होता है ( सर्वम्+आयु+एति ) सम्पूर्ण शतवर्ष आयु को प्राप्त होता है ( ज्योक् ) उज्ज्वल ( जीवति ) जीवन धारण करता है अर्थात् परम पवित्र होकर इस संसार में जीवन धारण करता है और (अस्य ) इस विद्वान् के (अवरपुरुषाः) पुत्र पौत्रादि परसन्ततिज पुरुष ( न+क्षीयन्ते ) क्षय को प्राप्त नहीं होते अर्थात् इस की कुलपरम्परा का क्षय नहीं होता और हे ब्रह्मचारिन् ! ( अस्मिन्+च ) इस और ( अमुष्मिन्+च ) उस ( लोके ) लोक में ( तम् ) उस विद्वान् की ( उपभुञ्जामः ) रक्षा हम लोग करते हैं (यः) जो ( एतम् ) इस गार्हपत्य अग्नि को ( एवम् ) ऐसा ( विद्वान् ) जानता हुआ ( उपास्ते ) उपासता है । इति ॥ २ ॥

इत्येकादश खण्डस्य भाषाभाष्यं समाप्तम् ॥ ११ ॥

## ॐ अथ द्वादशः खण्डः ॐ

# अथ हैनमन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति । य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

अथ । ह । एनम् । अन्वाहार्यपचनः । अनुशशास । आपः । दिशः । नक्षत्राणि । चन्द्रमाः । इति । यः । एषः । चन्द्रमसि । पुरुषः । दृश्यते । सः । अहम् । अस्मि । सः । एव । अहम् । अस्मि । इति ॥ १ ॥

भाष्यम्—अथ हैनमिति । अथानन्तरम् । हेति प्रसिद्धम् । एनं ब्रह्मचारिणम् । अन्वाहार्य पचनो दक्षिणोऽग्निः । अनुशशासानुशिष्टवान् शिक्षितवान् । किमित्याह । आपः । दिशः । नक्षत्राणि । चन्द्रमाः । एते मम पोषकाः । अहञ्च तेषाम् । इत्युक्त्वा पुनरपि ब्रवीति । हे [illegible]रिन् ! चन्द्रमसि चन्द्रे । य एष पुरुषः य एव शक्तिविशेषो दृश्यते

जनैः । सोऽहमस्मि । चन्द्रमसः शक्तेर्नाहं विभिन्नोऽस्मि । याशक्तिस्तास्मिन् सैव मय्यपि वर्तते । सर्वत्रैवैकाशक्तिरस्तीति विज्ञेयम् । पुनर्दढीकरणाय कथयति स एवाहमस्तीति ! इति ॥ १ ॥

अनुवाद—अनन्तर उस प्रसिद्ध ब्रह्मचारी को अन्वाहार्य्यपचन अग्नि ने शिक्षा दी। हे ब्रह्मचारिन् ! आप, (जल) दिशाएं, नक्षत्र और चन्द्रमा (ये मेरे पोषक हैं और मैं उन का पोषक हूं ) हे ब्रह्मचारिन् ! चन्द्रमा में जो यह शक्ति विशेष दीखता है वह मैं हूं, वही मैं हूं । इति ॥ १ ॥

पदार्थः— ( अथ ) अनन्तर ( ह ) सुप्रसिद्ध ( एनम् ) इस ब्रह्मचारी को ( अन्वाहार्य पचनः ) दक्षिणाग्नि ने ( अनुशशास ) शिक्षा दी । सो आगे कहते हैं ( आपः ) जल ( दिशः ) दिशाएं ( नक्षत्राणि ) नक्षत्र और ( चन्द्रमाः ) चन्द्र ये चारों मेरे पोषक हैं और मैं उन का पोषक हूं ( इति ) इतना कह पुनः अन्वाहार्यपचन अग्नि मानों शिक्षा देते हैं कि हे ब्रह्मचारिन् ! (चन्द्रमसि) चन्द्रमा में (यः+एषः+पुरुषः ) जो यह शक्ति विशेष ( दृश्यते ) दीखता है ( सः+अहम्+अस्मि ) वह मैं हूं अर्थात् चन्द्रमा में जो शक्ति है वही मुझ में भी है । दृढ करने के लिये पुनः कहते हैं कि (सः+एव+अहम्+अस्मि) वही मैं हूं । अथवा जल दिशा और नक्षत्रों में जो शक्ति है वही मैं हूं ॥ १ ॥

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥**

एकादश खण्ड के द्वितीय प्रवाकवत् ही इस का भाष्यादि जानना॥ २ ॥

इति द्वादशखण्डस्यसंस्कृतभाषाभाष्ये समाप्ते ॥ १२ ॥

* अथ त्रयोदशः खण्डः *

**अथ हैनमाहवनीयोऽनुशशास—प्राण आकाशो द्यौर्विद्युदिति। य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

अथ। ह। एनम्। आहवनीयः। अनुशशास। प्राणः। आकाशः। द्यौः। विद्युत्। इति। यः। एषः। विद्युति। पुरुषः। दृश्यते। सः। अहम्। अस्मि। सः। एव। अहम्। अस्मि। इति॥ १॥

भष्याम्—अथहैनमिति। अथानन्तरं ह प्रसिद्धमेनं ब्रह्मचारिणम्। आहवनीयोऽग्निः। अनुशशासोपदिदेश। किमित्याह। प्राणः। आकाशः। द्यौः। विद्युत्। एते चत्वारो मम पोषकाः। अहञ्चतेषाम्। इत्युक्त्वा पुनरपि ब्रवीति। हे ब्रह्मचारिन्! विद्युति य एष पुरुषो दृश्यते। यैषा शक्तिर्विद्युति दृश्यते विवेकिभिः। सोऽहमस्मि। सैवशक्तिर्मय्यपि वर्त्तते। पुनर्दृढीकरणायकथयति। स एवाहमस्मीति। यद्वा विद्युता सहैक्यं पूर्ववाक्येन प्रदर्श्य उत्तरेण वाक्येन प्राणाकाशद्युभिः सार्धमप्येकतां दर्शयति। प्राणादिषु या शक्तिरस्ति। सैव मयीतिविज्ञेयम्॥ १॥

अनुवादः—अनन्तर इस प्रसिद्ध ब्रह्मचारी को आहवनीय अग्नि ने उपदेश दिया। हे ब्रह्मचारिन्! प्राण, आकाश, द्युलोक और विद्युत् (ये चारों मेरे पोषक हैं और मैं उनका पोषक हूं) विद्युत् में जो यह शक्ति विशेष दीखता है वह मैं हूं, वही मैं हूं॥१॥

पदार्थः—(अथ) अनन्तर (ह) सुप्रसिद्ध (एनम्) इस ब्रह्मचारी को (आहवनीयः) आहवनीय अग्नि ने (अनुशशास) उपदेश दिया। क्या उपदेश दिया सो कहते हैं (प्राणः) प्राण (आकाशः) आकाश (द्युः) द्युलोक और (विद्युत) विद्युत् ये चारों मेरे पोषक हैं और मैं उनका पोषक हूं (इति) इतना कह पुनः वह मानो उपदेश देते हैं कि हे ब्रह्मचारिन्! (विद्युति) विद्युत् में (यः+एषः) जो यह (पुरुषः) शक्तिविशेष (दृश्यते) दीखता है (सः+अहम्+अस्मि) वह मैं हूं। पुनः दृढ करने के लिये कहते हैं कि (सः+एव+अहम्+अस्मि) वही मैं हूं अर्थात् विद्युत् में जो शक्ति है वही शक्ति मुझ में भी है। एवं अन्य प्राण आकाश और द्युलोक में व्यापिनी जो शक्ति है वही शक्ति मुझ में है इस में सन्देह नहीं॥ १॥

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावर पुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते॥ २॥**

सर्वं पूर्ववत्॥ एकादश खण्ड के द्वितीय प्रवाकवत् ही इसका भाष्यादि जानना॥२॥

इति त्रयोदश खण्डस्य संस्कृतभाषाभाष्ये समाप्ते॥ १३॥

* अथ चतुर्दशः खण्डः *

**तेहोचुरुपकोसलैषासोम्य ! तेऽस्मद्विद्याऽऽत्मविद्या-चाऽऽचार्यस्तु ते गतिं वक्तेत्याऽऽजगाम हास्याऽऽचार्य-स्तमाचार्योऽभ्युवादोपकोसल३इति ॥ १ ॥**

ते । ह । ऊचुः । उपकोसल । एषा । सोम्य । ते । अस्मद्विद्या । आत्मविद्या । च । आचार्य्यः । तु । ते । गतिम् । वक्ता । इति । आजगाम । ह । अस्य । आ-चार्य्यः । तम् । आचार्य्यः । अभ्युवाद । उपकोसल३ । इति ॥ १ ॥

भाष्यम्—त इति । ते ह सर्वे सम्भूय । ऊचुरुक्तवन्तः । हे सोम्य उपकोसल ! ते-तुभ्यम् । या विद्यास्माभिरुपदिष्टा । साऽस्मद्विद्या । अस्माकमग्नीनां सम्बन्धिनीविद्या । आग्नेयीत्यर्थः । इयञ्चात्मविद्याऽपि निगद्यते । ब्रह्मप्राप्तिसाधकतयाऽऽत्मविद्योच्यते । तु परन्तु । ते तव । आचार्यः । गतिं ज्ञानं ब्रह्मज्ञानम् । वक्ता तुभ्यं वक्ष्यति । इति । कथयित्वा । ते सर्वे । उपरेमुः । गच्छत्सु कालेषु । अस्योपकोसलस्याचार्योऽपि । आजगाम आ-गतवान् । आगत्य च । उपकोसल३इति । दूरादेवप्रियशिष्यत्वात्सर्वप्रथममेव । तमेव । अभ्युवाद । आजुहाव ॥ १ ॥

अनुवाद—वे सब अग्नि मिलकर मानो बोले' कि हे सोम्य उपकोसल ! यह तुम को दी हुई विद्या अस्मद्विद्या ( आग्नेय विद्या ) है और यह आत्मविद्या भी कहलाती है और आचार्य्य तुझको गति का उपदेश करेंगे। उसके बाद उसके आचार्य आये। आचार्य्य उपकोसल नाम लेकर दूर से ही उसको बुलाने लगे ॥ १ ॥

पदार्थः-( ते ) वे ( ह ) प्रसिद्ध अग्नि ( ऊचुः ) बोले कि (सोम्य+उपकोसल) हे प्रिय उपकोसल! (ते) तुझको जो विद्या दीगई है वह (एषा) यह (अस्मद्विद्या) हम अग्नियों की विद्या है । तेरे लिये हम लोगों की यह विद्या है ( च ) और यह (आत्मविद्या) आत्मविद्या कहलाती है ( तु ) परन्तु ( आचार्य्यः ) आचार्य्य ( ते ) तुझको (गतिम्) ब्रह्मज्ञान ( वक्ता+इति ) उपदेश करेंगे इतना कह वे मानो चुप हो गये । (अस्य+आ-चार्य्यः ) इस उपकोसल के आचार्य्य ( आजगामह) कुछ दिनों के पश्चात् अपने गृह

(१) वास्तव में अग्नि ने उसको कुछ नहीं कहा किन्तु यह अलंकार वर्णन करने की अनोखी शैली है ऐसी ही शैली फारसी में भी है यथा ।

इत्यादि قلم گوید کہ من شاہ جہانم قلم کش را بدولت میرسانم

पर आये ( आचार्य्यः ) वह आचार्य ( उपकोसल३ ) उपकोसल३ कह कर दूर से ही प्रिय शिष्य होने के कारण ( तम् ) उसको ( अभ्युवाद ) पुकारने लगे ॥ १ ॥

भाष्याशयः—आत्मविद्या "आचार्यस्तु ते गतिं वक्ता" इस पद से विदित होता है कि अग्नियों के द्वारा उपकोसल को जो शिक्षा वा ज्ञान प्राप्त हुआ वह यथार्थ में ब्रह्मज्ञान केवल नहीं है। क्योंकि यदि ब्रह्मज्ञान उपदिष्ट हो गया रहता तो "ब्रह्म की गति का उपदेश तुझको आचार्य्य देंगे" ऐसा नहीं कहा जाता। इस अवस्था में यह आग्नेयविद्या आत्मविद्या क्योंकर कहला सकती है। सत्य है। इस में ब्रह्मकी द्वादश ही कलाओं का उपदेश हुआ है। जैसे गार्हपत्य से पृथिवी १ अग्नि २ अन्न ३ आदित्य४। अन्वाहार्य पचन से जल१ दिशा २ नक्षत्र ३ चन्द्रमा४। आहवनीय से प्राण१ आकाश २ द्यौ ३ और विद्युत् ४। अब चार कलाएं इस विद्या में अवशेष रहीं। जिन को जड़ अग्नियों से लेने में उपकोसल असमर्थ थे। क्योंकि अपनी बुद्ध्यनुसार ही प्राकृत पदार्थ से कोई विचारकर शिक्षा लाभ करसक्ता है। परन्तु इन अवशिष्ट चार कलाओं के जाने विना ब्रह्मज्ञान की प्राप्ति का होना अतिदुष्कर है। इस हेतु इस में न्यूनता देख "आचार्य ब्रह्मज्ञान की गति का उपदेश करेंगे" यह कहा गया। परन्तु अग्नि प्रदत्त विद्या भी ब्रह्म साधक है। अतः ब्रह्मसाधक होने से यह विद्या आत्मविद्या भी कहलाती है ॥ १ ॥

**भगव! इति ह प्रतिशुश्राव। ब्रह्मविद इव सोम्य! ते मुखं भाति। को नु त्वाऽनुशशासेति? को नु माऽनुशिष्याद्भो इति हापेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे। किं नु सोम्य! किल तेऽवोचन्निति? ॥ २ ॥**

भगवः। इति। ह। प्रतिशुश्राव। ब्रह्मविदः। इव। सोम्य। ते। मुखम्। भाति। कः। नु। त्वा। अनुशशास। इति। कः। नु। मा। अनुशिष्यात्। भोः। इति। ह। अप। इव। निह्नुते। इमे। नूनम्। ईदृशाः। अन्यादृशाः। इति। ह। अग्नीन्। अभ्यूदे। किम्। नु। सोम्य। किल। ते। अवोचन्। इति ॥ २ ॥

भाष्यम्—भगव इति। भो भगवः। भगवन्! अयमहमास्मि किमाज्ञापयसि। इति ह सविनयं प्रतिशुश्रावोपकोसलः। इति श्रुत्वाचार्यः पृच्छति। हे सोम्य प्रिय शिष्य! ते तव।

मुखमास्यम् ब्रह्मविदो ब्रह्मज्ञस्येव । प्रसन्नं, प्रशान्तं, प्रहसितं, विद्याप्रद्योत कं विमलमित्ये-वमादि भाति सुशोभते । कोनु कः खलु कारुणिक आचार्य्यः। त्वा त्वाम् । अनुशशासानुशि-ष्टवान् । ब्रह्मज्ञानमुपदिष्टवानित्यर्थः । इत्याचार्यवचनं श्रुत्वा । भो भगवन् ! को नु कः खलु । मा माम् । अनुशिष्यात् अनुब्रूयात् । भवतोन्यः कोऽस्ति कारुणिक आचार्य्यः । यो मा मनुगृह्योपदिशेन्नाम । इति केनापि कारणेन । अपनिह्नुते इव । अग्निभ्यो लब्धा मात्मविद्यां संगूहतीवोपकोसलो लक्ष्यते । अत्र लज्जा वा आर्जवता वा अपह्नवे कारणमनु-मीयते । लज्जालुः कुमारो नोद्घाटयति स्वीयां विद्यां गुरोरन्तिके । किन्तु अपह्नवे प्रत्यवा-योस्तीति मनसि संप्रधार्य्य पुनर्निवेदयति गुरवे । भो भगवन् ! अन्यादृशा मनुष्येभ्योऽ-न्यसदृशा मनुष्येभ्यो भिन्ना इत्यर्थः । ईदृशाः पुरोवर्त्तिनो गार्हपत्यादि समाना इमे अ-ग्नय एव । नूनं निश्चितम् । मामनुशिष्टवन्त इति कथयित्वा । अग्नीन् स्वीयान् आचार्य्यान् इह गुरोरन्तिके । अभ्यूदे प्रतिज्ञातवान् । अग्नय एव मे गुरव इति स्वीकृतवान् । इति शिष्यस्य वचनं श्रुत्वा । आचार्यः पुनः पृच्छति । हे सोम्य ! ते किलाग्नयः । किन्नु ते अग्नयः । किंवस्तु । ते तुभ्यम् । अवोचन्नन्वशिषन् । इति कथय ॥ २ ॥

अनुवाद–हे भगवन् ! ( यह मैं हूं क्या आज्ञा होती है ) ऐसा ( उपकोसल ने ) उत्तर दिया । हे प्रिय शिष्य ! तेरा मुख ब्रह्मवेत्ता के मुख की नाईं सुशोभित होरहा है । किसने तुझ को उपदेश दिया है ? ( इसे सुन उपकोसल कहता है ) हे भगवन् ! मुझ को कौन शिक्षा देगा । मानो छिपा रहा है । हे गुरो ! अन्यादृश ( मनुष्यों से भिन्न) ई-दृश इन ( अग्नियों ने ) मुझे उपदेश दिये थे यह कह अग्नियों को अपने गुरु स्वी-कार किये ( पुनः आचार्य पूछते हैं ) हे सोम्य उन्होंने तुझ को क्या सिखलाया ? ॥२॥

पदार्थः—गुरु की पूर्वोक्त वाणी सुन (भगव इति ह) हे भगवन् ! यह मैं हूं क्या आज्ञा होती है ऐसा (प्रतिशुश्राव) उस उपकोसल ने उत्तर दिया । आचार्य पुनः पूछते हैं (सोम्य) हे सोम्य ! (ते+मुखम्) तेरा मुख (ब्रह्मविदः+इव) ब्रह्मवेत्ता के मुख के स-मान प्रसन्न, प्रफुल्लित, प्रहसित, प्रशान्त, विद्याप्रद्योतक, विमल आदि ( भाति ) शो-भता है (कः+नु+त्वा) किसने तुझ को ( अनुशशास ) उपदेश दिया है ? (इति) यह सुन पुनः वह कहता है हे भगवन् ! (कः+नु+मा+ अनुशिष्यात् +भोः) हे गुरो! कौन मुझ को अनुशासन करेगा (इति+ह) इस प्रकार (अप+निह्नुते+इव) मानो अग्नियों से उपलब्ध विद्या को वह छिपा सा रहा है । परन्तु उसने मन में विचार अपह्नव को पाप जान गुरु के पूछे विना ही वह पुनः स्वयं बोल उठा, हे भगवन् ! (अन्यादृशाः) अन्य समान अर्थात् मनुष्य के समान नहीं मनुष्य से भिन्न ( ईदृशाः ) ऐसे जो (इमे) ये अग्नि हैं इन्होंने

ही मुझ अधन्य पुरुष को उपदेश दिये हैं ( इति+ह ) इतना कह ( अग्नीन् ) अग्नियों को निज गुरु ( अस्यूदे ) स्वीकार किया अर्थात् हे गुरो! ये ही अग्नि मेरे गुरु हैं इनसे ही मैंने आत्मविद्या उपलब्ध की है । यह सुन पुनः गुरु पूछते हैं ( सोम्य ) सोम्य ( ते+किल ) उन्होंने ( किन्नु ) कौनसी विद्या वा कौनसी वस्तु ( ते ) तुझ को ( अचोचन् ) सिखलाई है सो कहो * ॥ २ ॥

**इदमिति ह प्रतिजज्ञे । लोकान्वाव किल सोम्य! तेऽवोचन्नहं तु ते तद्वक्ष्यामि—यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति । ब्रवीतु मे भगवानिति । तस्मै होवाच ॥ ३ ॥**

इदम् । इति । ह । प्रतिजज्ञे । लोकान् । वाव । किल । सोम्य । ते । अवोचन् । अहम् । तु । ते । तत् । वक्ष्यामि । यथा । पुष्करपलाशे । आपः । न । श्लिष्यन्ते । एवम् । एवंविदि । पापम् । कर्म्म । न । श्लिष्यते । इति । ब्रवीतु । मे । भगवान् । इति । तस्मै । ह । उवाच ॥ ३ ॥

भाष्यम्—इदमितीति । आचार्येणाभिहित उपकोसलः । इदमिति । इदमग्निभ्यो-ब्रह्मविज्ञानं मया प्राप्तम् । इति ह प्रतिजज्ञे आचार्य्याय श्रावयामास । आचार्यस्तु तां विद्यां श्रुत्वा । हे सोम्य ! तेऽग्नयस्ते तुभ्यम् । लोकान्वाव लौकिकीरेव विद्याः । अवोचन् अनूक्तवन्तः । न तात्त्विकीं ब्रह्मविद्यामित्यर्थः । हे प्रिय शिष्याहं तु । ते तुभ्यम् । तत् प्रसिद्धं ब्रह्मविज्ञानम् । वक्ष्यामि उपदेक्ष्यामि । यद्विज्ञाय न कदापि साधकः पापेन निबध्यते । दृष्टान्तेन तदेवाह । ब्रह्मविद्याया माहात्म्यं शिष्य प्ररोचनार्थं ब्रवीति । पुष्कर पलाशे । पुष्कराणां कमलानां पलाशे पत्रे यथा येन प्रकारेण । आपो जलानि । न श्लिष्यन्ते न संबध्यन्ते । न निबध्यन्ते । एवममुना प्रकारेणैव । एवं विदि मयोपादिश्यमानस्य ब्रह्मणोविज्ञातरि । पापं पापजनकम् । कर्म्म । न श्लिष्यते । न निबद्ध्यते । इति गुरोर्वचनं श्रुत्वा हे भगवन् ! भगवान् तद्विज्ञानं मे मह्यम् ब्रवीतु । इति प्रार्थये ।

---

* जो पुरुष विद्या पढ़कर फिर मनन करता है तो जड़ पदार्थ जिनका उसको पहले साधारण बोध होता है मनन तथा अनुसन्धान दशा में अपने स्वरूप और विद्या को ऐसे प्रकट करने लग जाते हैं मानो कहा जाता है कि वे जड़ पदार्थ उपदेश देरहे हैं, यह सब कथा पठन के अनन्तर मनन की महिमा प्रगट कर रही है ॥

इति प्रार्थित आचार्य्यः । तस्मै प्रियाय शिष्याय । वक्ष्यमाणं वचनमुवाच ॥ ३ ॥

इति चतुर्दश खण्डस्य संस्कृत भाष्यं समाप्तम् ॥ १४ ॥

अनुवाद—आचार्य से पूछे जाने पर यह (विद्या) है ऐसा उसने गुरु को सुनाया ( यह सुन आचार्य्य कहते हैं ) हे सोम्य ! उन्होंने लौकिक विज्ञान ही तुझे सिखलाये हैं । परन्तु मैं तुझको उस विज्ञान के विषय में उपदेश दूंगा । हे सोम्य ! जैसे कमल के पत्र में जलका आन्तरिक स्पर्श नहीं होता है । वैसे ही इस प्रकार ब्रह्मवेत्ता में पापकर्म्म स्पर्श नहीं करता है। यह सुन उपकोसल कहता है कि हे भगवन् ! आप मुझको उपदेश देवें । तब उसको आचार्य ने यह उपदेश दिया ॥ ३ ॥

पदार्थः—आचार्य्य के पूछने पर (इदम्) अग्नियों से यह यह विद्या मैंने हैं भगवन् ! सीखी है (इति+ह) यह कह (प्रतिजज्ञे) स्वीकार कर सुनाई । आचार्य्य शिष्य के वचन सुन बोले कि हे ( सोम्य ) सुशीलवान् ( लोकान्+वाव ) लोक ही अर्थात् लौकिक विद्याओं का ही ( किल ) निश्चय (ते) तुझको ( अवोचन् ) उपदेश दिया हैं (अहम्+तु ) परन्तु मैं ( ते ) तुझको ( तत् ) उस प्रसिद्ध ब्रह्मज्ञान का ( वक्ष्यामि ) उपदेश करूंगा । जिस के विज्ञान से मनुष्य भविष्यत् पाप से बच जाता है । आगे शिष्य के प्ररोचनार्थ ब्रह्मज्ञान का माहात्म्य वर्णन करते है ( यथा ) जैसे ( पुष्करपलाशे ) कमल के पत्र पर ( आपः+न+श्लिष्यन्ते ) जल श्लिष्ट नहीं होते हैं ( एवम् ) वैसे ही ( एवम्+विदि ) ऐसे ब्रह्म के जानने वाले में ( पापकर्म्म ) पापकर्म्म ( न+श्लिष्यते ) श्लिष्ट नहीं होता है (इति) यह सुन वह शिष्य बोला हे भगवन् ! (भगवान्+मे+ब्रवीतु) आप मुझको उस ब्रह्मज्ञान का उपदेश देवें (इति) यह सुन (तस्मै+ह+उवाच) उसको यह उपदेश आचार्य्य ने दिया ॥३॥ इति चतुर्दशखण्डस्य भाषाभाष्यं समाप्तम् ॥१४॥

अथ पञ्चदशः खण्डः

## य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छति ॥ १ ॥

यः । एषः । अक्षिणि । पुरुषः । दृश्यते । एषः । आत्मा । इति । ह । उवाच । एतद् । अमृतम् । अभयम् । एतद् । ब्रह्म । इति । तद् । यद्यपि । अस्मिन् । सर्पिः । वा । उदकम् । वा । सिञ्चन्ति । वर्त्मनी । एव । गच्छति ॥ २ ॥

भाष्यम्—य एष इति। ईदृशेषु स्थानेषु प्रयुक्ता अक्षिप्रभृतय शब्दाः केवलमुपलक्षका एव। न निर्धारण वाचिनः। एतैरुदाहरणैः शिष्याणां शीघ्रबोधः सम्पद्यते । अतः । पुनः पुनरिमान्येवोमादीयन्ते । यद्यपि सर्वत्रैव ब्रह्मविभूति प्रकाश विकाशः स्फुटतर एव दृश्यते । तथापि नयने भूयांस्तस्य महिमा । यो हि शिशुगिरपि आचार्य्यैर्बोध्यमानैरनायासेन गृह्यते । लघीयसा नयनेन करणेन बृहतो वटादि महीरुहस्याखिलामाकृतिमन्तःकरण मन्तरीकरोति । अतिदूरस्थंभास्करं क्षणेनेक्षितुं शक्नोति । सत्य सम्बाधेऽत्यन्त दूरस्थाः पदार्था अपि नयनेन दृश्यन्ते । नहीदृशीपरेषामिन्द्रियाणां गतिरस्ति। रसना सत्येव स्पर्शे रसं रसयति। त्वचोऽपि सैव व्यवस्था । घ्राणमपि स्पृष्टानामणूनां संयोगेनैव गन्धं जिघ्रति । कर्णावपि वायुनाऽऽघातितौ सन्तौ शब्दमनुभवतः । नयनन्तु असंयुक्तमेव विषयं विषिणोति । असम्बद्धमपि सम्बद्धमिव लक्ष्यते । अनेककोटियोजनस्थितेन नक्षत्रगणेन समं नयनसंयोगचर्चा का भवितुमर्हति । यथा नयनेन ब्रह्माण्डे रविशशितारकादिषु ज्योतिष्षु, समुद्र नदी पल्वल कासार प्रभृतिषु जलाशयेषु, कमल कुमुद चम्पक वासन्त्यादिषु, पुष्पेषु पशुपक्षि सरीसृपान्तेषु जीवेषु विविधरूपां विस्तीर्णामैशीं छवि मनुभवितुमयमात्मा शक्नोति न तथान्यैरिन्द्रियैः । अतो ज्ञानेन्द्रियेषु नयनस्य प्रधानत्वादेवास्योपादानम् । ज्ञानेनैव ईश्वरो लभ्यत इत्यपि सूचयितुं नेत्रविषये ब्रह्मोपदेशः । यद्वाऽक्षिशब्दः प्रकृतिवाची । अक्षिशब्दस्य समीक्षा दृश्यताम् । छान्दो० उ० भा० पृष्ठ १५५ । अत्र यथा इति पदमध्याहार्यम् । तेनात्रलुप्तोपमालङ्कारः। हे शिष्य ! यथा अस्मिन् अक्षिणि नेत्रे य एष पुरुषः कनीनिकास्वरूपः पुरुषः प्रत्यक्षो दृश्यते । तथैव पुरुषः सर्व शरीरस्थः। एष आत्मा प्रत्यक्षः । अक्षिणि सर्वस्मिन् वस्तुनि प्रकृतौ वा भासते । इति ह सत्यकाम उपकोसलमुवाच । हे सोम्य ! एतत्सर्वत्र भासमानमात्मस्वरूपं वस्तु । अमृतं मरणरहितम्। अभयं न विद्यते भयं यस्य तदभयम् मृत्युरहितत्वात् । एतद् ब्रह्म । बृहद्गुणैर्महदस्ति । अतो महत्तरं नास्ति किञ्चन । एवम् । यथा । यद्यपि । अस्मिन् नयनस्थे पुरुषे तद्विघाताय सर्पिर्वाघृतं वा उदकं वा जलं वा । मनुष्यास्सिञ्चन्ति । तत् सर्पिरुदकं वा वर्त्मनी पक्ष्मे एव गच्छति प्राप्नोति न नयनस्थे पुरुषे सम्बध्यते। तथैव। किमपि वस्तु एतस्यात्मनो विघातायोद्देशेन प्रक्षिपन्तु नाम जनास्तदात्मानं न गच्छति । अर्थादात्मानं निहन्तुं न शक्नोति किन्तु वर्त्मनी सुख दुःखत्वे एव गच्छति प्राप्नोति । ब्रह्मपक्षेपि । अक्षिणि पुरुष इव सर्वस्मिन् वस्तुनि ब्रह्म विभासते । तथाच । यथास्मिन् सिक्तं घृतं वा जलं वा नेत्रस्थेन छायापुरुषेण न सम्बध्यते तथैव सम्पूर्णजगत्क्रिया ब्रह्मणा न सम्बध्यत इति बोध्यम् ॥ १ ॥

हाशाल महाश्रोत्रिय होनेपर भी निश्चय नहीं कर सके। इस से ब्रह्मविषय अत्यन्त दुरवगाह है यह सूचित करता है ( कोनु आत्मा किं ब्रह्मेति ) यहां पर आत्मा कौन है और ब्रह्म कौन है ऐसे दो प्रश्न नहीं हैं किन्तु आत्म शब्द यहां ब्रह्मवाचक होने से दोनों पदका एक ही अर्थ है अर्थात् प्रथम ही प्रश्न को उत्तर वाक्यों से अनुवाद मात्र किया है। अर्थात् " आत्मा कौन है वा " ब्रह्म कौन है " ऐसा भाव है किसी के मत से ये दो प्रश्न हैं। (नु) बहुत पुस्तकों में "नु" और बहुतों में "नः" का पाठ है नु शब्द का अर्थ प्रश्न अनुनय, विकल्प, वितर्क आदि है और नः का अर्थ हम लोगों को है॥ १ ॥

## ते ह सम्पादयाञ्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति। तꣳहन्ताभ्यागच्छामेति। तꣳ हाभ्याजग्मुः ॥ २ ॥

ते। ह। सम्पादयाञ्चक्रुः। उद्दालकः। वै। भगवन्तः। अयम्। आरुणिः। सम्प्रति। इमम्। आत्मानम्। वैश्वानरम्। अध्येति। तम्। हन्त। अभ्यागच्छाम। इति। तम्। ह। अभ्याजग्मुः ॥ २ ॥

भाष्यम्—तेहेति। ते ह। प्रसिद्धास्ते प्राचीनशालादयः पूर्वे विद्वांसः परस्परं 'को न आत्मा किं ब्रह्मेति' मीमांसमाना अपि पुनःपुनर्विचारयन्तोऽपि निश्चयमलभमानाः सन्तः। सम्पादयाञ्चक्रुर्गुरुमुपदेष्टारं संपादितवन्तः। मनसा सर्वे विचार्य्योपदेष्टारमाचार्य्यं स्थिरी चक्रुः। कं सम्पादयाञ्चक्रुरित्याह। ते परस्परमूचुः। हे भगवन्तः पूजावन्तः पूजनीयाः। सुहृदः सम्प्रतीदानीम्। अयम्। प्रसिद्धत्वात् प्रत्यक्षवद्भासमानः। आरुणिः। अरुणेर्महर्षेरपत्यम्। वै प्रसिद्ध उद्दालको नामतः। इमम्। आत्मानम्। व्यापकम्। आप्नोति सर्वमित्यात्मा सर्वव्यापक इत्यर्थः। अत्रात्मानमितिविशेषणम्। वैश्वानरं वैश्वानरवाच्यं ब्रह्म। अध्येति स्मरति। यद्वा सम्यग् विजानाति। हन्तेदानीं तमुद्दालकम्। वयमभ्यागच्छाम तदन्तिकं व्रजाम। इति निश्चित्य ते सर्वे तं हाभ्याजग्मुः। आजग्मुः ॥ २ ॥

अनुवाद—उन प्रसिद्ध विद्वानों ने निश्चय किया और निश्चय कर परस्पर यह बोले कि हे पूजनीय मित्रो! सम्प्रति यह आरुणि उद्दालक इस आत्मा ( व्यापक ) वैश्वानर को सम्यग् प्रकार से स्मरण करते वा जानते हैं सो अब हम सब उन के निकट चलें इसे निश्चय कर वे सब ही उन के निकट आ पहुंचे ॥ २ ॥

पदार्थः-( ते+ह) मीमांसा करने पर भी आत्मा और ब्रह्म का जब पता न लगा

तब उन प्रसिद्ध विद्वानों ने ( सम्पादयाञ्चक्रुः ) निश्चय किया कि ( अयम् ) यह ( आरुणिः ) अरुणवंशीय ( उद्दालकः ) उद्दालक नाम के ऋषि ( वै ) निश्चय करके (सम्प्रति) आजकल अच्छी तरह से ( इमम् ) इस ( आत्मानम् ) सर्वव्या- पक ( वैश्वानरम्) वैश्वानर नामधारी ब्रह्मका ( अध्येति ) स्मरण करते हैं अथवा अच्छे प्रकार जानते हैं अतः (भगवन्तः ) हे भगवन् ! माननीयो मित्रो ( हन्त ) अब ( तम् )उनके ( अभ्यागच्छामः ) निकट हम लोग चलें यह विचार (तम्+ह ) उस प्रसिद्ध उद्दालक के निकट ( अभ्याजग्मुः ) वे सब मिलकर आये ॥ २ ॥

**स ह सम्पादयाञ्चकार–प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये। हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥**

सः । ह । सम्पादयाञ्चकार । प्रक्ष्यन्ति । माम् । इमे । महाशालाः । महाश्रोत्रियाः । तेभ्यः । न । सर्वम् । इव । प्रतिपत्स्ये । हन्त । अहम् । अन्यम् । अभ्यनुशासानि । इति ॥ ३ ॥

भाष्यम्–स हेति । स ह प्रसिद्ध आत्मवैश्वानरविदपि उद्दालकस्तान् महाशालान् महाश्रोत्रियान् जिज्ञासून् विज्ञाय इत्थं सम्पादयाञ्चकार विचारयामास । यदि मे ममालयं सम्प्रत्यागता महाशाला महाश्रोत्रियाः विद्वांसो मां प्रति प्रश्नान् । प्रक्ष्यन्ति । अहं तेभ्यः प्राचीनशालादिभ्यो विद्वद्भ्यः । सर्वमिव सर्वं पृष्टं न प्रतिपत्स्ये । समाधातुं नैवशक्ष्यामि । अतः किं कर्तव्यमित्याह । हन्तेदानीमहम् । अन्यमुपदेष्टारम् । अनुशासानि ब्रवाणि वक्ष्यामि । एतेषां महाश्रोत्रियाणां सर्वान् प्रश्नान् समाधातुं नाहं शक्ष्यामि । अतोहं तेभ्योऽन्यमुपदेष्टारं दर्शयेयमिति ॥ ३ ॥

अनुवाद–उस प्रसिद्ध उद्दालक ऋषि ने यह विचार किया कि ये महाशाल महाश्रोत्रिय मुझ से पूछेंगे । परन्तु उनके लिये सब प्रश्न के उत्तर देने में मैं समर्थ नहीं होऊंगा । इस कारण उनको अब अन्य ( उपदेष्टा ) मैं बतलाऊं ॥ ३ ॥

पदार्थः--(सः+ह) वह प्रसिद्ध उद्दालक (आये हुए उन लोगों को देख और महाशाल महाश्रोत्रिय और जिज्ञासु जान) (सम्पादयाञ्चकार) विचार करने लगे कि (इमे) ये ( महाशालाः ) महाविद्यालय वाले ( महाश्रोत्रियाः ) और महावेदाध्यायी ( माम् ) मुझ से ( प्रक्ष्यन्ति ) प्रश्न पूछेंगे परन्तु ( तेभ्यः ) उनके लिये ( सर्वमिव ) सबप्रकार से सब प्रश्नों के उत्तर देने में ( न+प्रतिपत्स्ये ) समर्थ नहीं होऊंगा । इसकारण ( हन्त )

इस समय ( अहम् ) मैं ( अन्यम् ) अन्य उपदेष्टा को ( अभ्यनुशासानि ) उन लोगों से बतलाऊं ( इति ) इस प्रकार उन्होंने निश्चय किया ॥ ३ ॥

भाष्याशयः—जिस कारण ये मेरे गृह पर आयेहुए प्राचीन शाल आदि पांचों विद्वान् स्वयं महाशाल और महाश्रोत्रिय हैं अतः उनके सब प्रश्नों का उत्तर मैं नहीं देसकूंगा इस हेतु इनको अन्य आचार्य बतलादेना ही उचित समझता हूं ॥ ३ ॥

**तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति । तꣳ हन्ताभ्या गच्छामेति । तꣳ हाभ्याजग्मुः* ॥ ४ ॥**

तान् । ह । उवाच । अश्वपतिः । वै । भगवन्तः । अयम् । कैकेयः । सम्प्रति । इमम् । आत्मानम् । वैश्वानरम् । अध्येति । तम् । हन्त । अभ्यागच्छाम । इति । तम् । ह । अभ्याजग्मुः ॥ ४ ॥

भाष्यम्—तानिति । तान् प्राचीनशालादीन् प्रति होद्दालक उवाच । हे भगवन्तः पूजावन्तः ! अयं कैकेयः केकयस्यापत्यम् । वै प्रसिद्धोऽश्वपतिर्नाम सम्राट् । सम्प्रति । इमं वैश्वानरमात्मानमध्येति । स्मरति । सम्यग् विजानाति । हन्तेदानीं तं कैकेयं सम्राजं प्रति वयमभ्यागच्छाम । प्रव्रजाम । इत्युद्दालकेन सह ते सर्वे निश्चित्य तं ह अभ्याजग्मुरागतवन्तः ॥ ४ ॥

अनुवाद—उन प्रसिद्ध ऋषियों से वह ( उद्दालक ) बोले कि हे भगवन् ! ये प-

* ते होचुः । अश्वपतिर्वाऽअयं कैकेयः सम्प्रति वैश्वानरं वेद तं गच्छामेति ते हाश्वपतिं कैकेयमाजग्मुस्तेभ्यो ह पृथगावसथान्पृथगपचितीः पृथक्साहस्रान्त्सोमान्प्रोवाच ते ह प्रातः रसं विदाना एव समित्पाणयः प्रतिचक्रमिरउप त्वायामेति ॥ शत० १० । ६ । १ । २ ॥ अर्थ—वे सत्ययज्ञादि जिज्ञासु जब वैश्वानर विज्ञान को परस्पर स्थित न कर सके तब विचार किया कि यह कैकेय अश्वपति राजा आजकल वैश्वानर को जानता है उस के निकट हम लोग चलें । यह विचार वे सब कैकेय अश्वपति के निकट आये । उन को राजा ने पृथक् २ निवास स्थान दिया पृथक् २ पूजा करवाई और कहा कि आप में से सब को एक २ हजार गोदान दूंगा जब मैं सोम याग करूंगा वे लोग राजा से अपने आशय को न प्रकट करके ही अध्ययनार्थ उस के निकट आ बोले कि हम लोग आप के निकट वैश्वानर विज्ञानार्थ आये हुए हैं ॥ २ ॥

सिद्ध कैकेय अश्वपति सम्प्रति इस आत्मा वैश्वानर को अच्छे प्रकार स्मरण करते हैं अतः हम लोग अब उनके ही निकट चलें । ऐसा विचार कर वे निकट आये ॥ ४ ॥

पदार्थः-( तान्+ह ) पूर्वोक्त प्रकार से स्थिर कर उन प्रसिद्ध विद्वानों से ( उवाच ) वह उद्दालक बोले कि (भगवन्तः) पूजनीयो मित्रो (अयम्) यह ( कैकेयः ) केकय के पुत्र ( अश्वपतिः ) अश्वपति नाम के महाराज ( वै ) निश्चय कर अच्छे प्रकार ( सम्प्रति ) आजकल ( इमम् ) इस ( आत्मानम् ) सर्वव्यापक ( वैश्वानरम् ) वैश्वानर वाच्य ब्रह्म को ( अध्येति ) स्मरण करते हैं अथवा जानते हैं इसलिये ( हन्त ) अब ( तम् ) उनके ( अभ्यागच्छाम ) निकट हम सब चलें ( इति ) इसे स्थिर कर ( तम्+ह ) उनके ही (अभ्याजग्मुः ) निकट वे लोग आये ॥ ४ ॥

**तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार । स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु मे भगवन्त इति ॥ ५ ॥**

तेभ्यः । ह । प्राप्तेभ्यः । पृथक् । अर्हाणि । कारयाञ्चकार । सः । ह । प्रातः । सञ्जिहानः । उवाच । न । मे । स्तेनः । जनपदे । न । कदर्यः । न । मद्यपः । न । अनाहिताग्निः । न । अविद्वान् । न । स्वैरी । स्वैरिणी । कुतः । यक्ष्यमाणः । वै । भगवन्तः । अहम् । अस्मि । यावत् । एकैकस्मै । ऋत्विजे । धनम् । दास्यामि । तावत् । भगवद्भ्यः । दास्यामि । वसन्तु । मे । भगवन्तः । इति ॥ ५ ॥

भाष्यम्-तेभ्योहेति । प्राप्तेभ्य आगतेभ्यः । हेति प्रसिद्धेभ्यस्तेभ्यः पूर्वोक्तेभ्यो विद्वद्भ्यः । स राजा स्वकीयैःपुरोहितैर्भृत्यैश्च । पृथक् पृथक् । अर्हाणि अर्हणानि सत्कारान् कारयाञ्चकार कारितवान् । ततः सह प्रसिद्धो राजाश्वपतिः । अन्येद्युः । प्रातः । प्रातःकाले संजिहान आसनं त्यजन् सन् । । ओहाक्त्यागे आत्मनेपदमार्षम् । यद्वा ओहाङ्गतौ । उपसर्गेणत्यागार्थः । विनयेन तानुपगम्य वक्ष्यमाणं वचनमुवाच । हे भगवन्तः ! । मे मम । जनपदे । जनानां पदे स्थाने राज्य इत्यर्थः स्तेनश्चोरो न विद्यते । कदर्यः कृपणोऽदाता न विद्यते मद्यपो मद्यं सुरां पिबतीति मद्यपः । स नास्ति । अनाहिताग्निः आहितः

स्थापितोग्निर्येन स आहिताग्निः। न आहिताग्निरनाहिताग्निः सर्वो देवयज्ञ परायण इत्यर्थः अविद्वान्। शास्त्रानभिज्ञोपि न विद्यते। स्वैरी परदारेषु गन्ता नास्ति। अतएव स्वैरिणी व्यभिचारिणी कुतःसंभवेत्। न संभवतीत्यर्थः। हे भगवन्तः! हे पूजावन्तो महर्षयः! वै निश्चयेन स्वल्पैरेवाहोभिः। अहं यक्ष्यमाणो यज्ञं करिष्यमाणोस्मि। किं तर्हि?। एकैकस्मै। ऋत्विजे। अध्वर्युप्रभृतये यावद्धनं गोहिरण्यादिकं दास्यामि। भगवद्भ्यो भवद्भ्यः प्रत्येकं तावद्धनं तत् परिमाणं धनं दास्यामि। समर्पयिष्यामि। अतो यज्ञ सम्पादनार्थं भगवन्तो माननीया ममालये कंचित्कालं वसन्तु वासं कुर्वन्तु। निष्पापत्वान्निवासार्हं ममगृहमस्ति। अतोनिवसन्तु। इति प्रार्थये ॥ ५ ॥

अनुवाद–उस राजा अश्वपति ने आये हुए उन प्रसिद्ध ऋषियों की पूजा पृथक् पृथक् करवाई। और प्रातःकाल उठते ही विनयपूर्वक उनके निकट आ बोले कि हे पूजनीय महर्षियो! मेरे जनपद में न चोर, न कदर्य्य, न मद्यपायी, न अनग्निहोत्री, न अविद्वान्, न व्यभिचारी हैं और व्यभिचारिणी कहां से? निश्चय मैं यज्ञ करने वाला हूं। एक २ ऋत्विक् को जितना धन दूंगा उतना धन पूजनीय आप लोगों में से प्रत्येक को प्रदान करूंगा आप लोग कृपया यहां वास करें। यह मेरी प्रार्थना है ॥ ५ ॥

पदार्थः–(ह) प्रसिद्ध (प्राप्तेभ्यः) प्राप्त आगत (तेभ्यः) उन लोगों की (पृथक्) पृथक् २ (अर्हाणि) पूजाएं (कारयाञ्चकार) करवाई (सः+ह) वह प्रसिद्ध राजा (प्रातः) प्रातःकाल (संजिहानः) उठता हुआ, अर्थात् उठकर उन आगत ज्ञानियों के समीप आकर (उवाच) बोले हे ऋषियो! (मे) मेरे (जनपदे) देश में (न) नहीं (स्तेनः) चोर है (न+कदर्य्यः) न कृपण (न+मद्यपः) न मद्यपीने वाला (न+अनाहिताग्निः) न अनग्निहोत्री (न+अविद्वान्) न मूर्ख हैं (न+स्वैरी) और न व्यभिचारी हैं (कुतः+स्वैरिणी) जब व्यभिचारी पुरुष नहीं तो व्यभिचारिणी स्त्रियां कहां से हो सकती हैं (भगवन्तः) हे पूजनीय विद्वानो! (वै) निश्चय (अहम्) मैं (यक्ष्यमाणः+अस्मि) यज्ञ करने वाला हूं (यावत्) जितना (एकैकस्मै) एक२ (ऋत्विजे) ऋत्विक् को (धनम्+दास्यामि) धन दूंगा (तावत्) उतना धन (भगवद्भ्यः) माननीय आप लोगों को (दास्यामि) दूंगा (भगवन्तः) आप लोग कृपया (वसन्तु) मेरे घर पर निवास करें और मेरे यज्ञ को देखें (इति) यह प्रार्थना करता हूं जिस कारण मेरा देश पवित्र है इस हेतु आप महात्माओं के निवास योग्य है ॥५॥

**ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेदात्मानमेवेमं वैश्वानरꣳसम्प्रत्यध्येषि तमेव नो ब्रूहीति ॥६॥**

ते । ह । ऊचुः । येन । ह । एव । अर्थेन । पुरुषः । चरेत् । तम् । ह । एव । वदेत् । आत्मानम् । एव । इमम् । वैश्वानरम् । सम्प्रति । अध्येषि । तम् । एव । नः । ब्रूहि । इति ॥ ६ ॥

भाष्यम्—तेहेति । तेहाश्वपतिं प्रत्युवाच । येनैवहार्थेन येनैव प्रयोजनेन । यं प्रति पुरुषः । चरेद् गच्छेत् । तमेवार्थं वदेद् ब्रूयात् । तर्हि कस्मै प्रयोजनाय भगवन्तः प्राप्तास्तदेव कथयन्तु यथा शक्यं तदेव दास्यामीत्याह । त्वं खलु । इमं वैश्वानरमात्मानमध्येषि स्मरसि । तमेव वैश्वानरमात्मानम् । नोऽस्मान् ब्रूहि कथयोपदिश । एतदर्थमेव वयमागताः । वयं सम्प्रति वैश्वानरविज्ञान प्रार्थिनः सन्तस्त्वां सम्प्राप्ताः स्मः ॥६॥

अनुवाद—वे प्रसिद्ध विद्वान् बोले "हे सम्राट्" जिसी प्रयोजन के लिये जिस के निकट पुरुष प्राप्त हो उसी को उसी से कहे । सम्प्रति आप इस आत्मा व्यापक वैश्वानर का ही अच्छी तरह से स्मरण करते हैं उसी को हम लोगों से आप कहैं ॥ ६ ॥

पदार्थः—( ह ) प्रसिद्ध ( ते ) वे विद्वान् लोग ( ऊचुः ) बोले ( येन+अर्थेन+ह+एव ) जिसी प्रयोजन के लिये ( चरेत् ) किसी के निकट जाय ( तम्+ह+एव ) उसी प्रयोजन को उस से ( वदेत् ) कहें तो किस प्रयोजन के लिये आप लोग आए हैं सोही कहैं यथाशक्ति उसीको दूंगा ( इमम् ) इस ( आत्मानम् ) व्यापक ( वैश्वानरम्+एव ) वैश्वानर का ही ( सम्प्रति+अध्येषि ) अच्छे प्रकार से आप स्मरण करते हैं अथवा जानते हैं ( तमेव ) उसी आत्मा वैश्वानर को ( नः ) हम लोगों से ( ब्रूहि ) कहैं उपदेश देवें ( इति ) यह हमलोगों की प्रार्थना आप से है ॥ ६ ॥

**तान् होवाच प्रातर्वः प्रतिवक्तास्मीति । ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे । तान् हानुपनीयैवैतदुवाच*॥ ७ ॥**

---

* स होवाच । यन्नु भगवन्तोऽनूचाना अनूचानपुत्रा किमिदमिति ते होचुर्वैश्वानरꣳ ह भगवान्त्सम्प्रति वेद तं नो ब्रूहीति स होवाच सम्प्रति खलुत्वा अहं वैश्वानरं वेदाभ्याधत्त समिध उपेताःस्थेति ॥ शत० १० । ६ । १ । ३ ॥ अर्थ—वह राजा बोला कि हे महामान्यो । आप लोग स्वयं अनूचान अर्थात् साङ्गवेद के पढ़ने वाले और अनूचान के पुत्र हैं तब फिर यह क्या है ? उनलोगोंने कहा कि ये सब बात ठीक है परन्तु वैश्वानर के ज्ञाता आजकल आप ही हैं वही विज्ञान हम लोगों को देवें । तो उसने कहा कि हां ये बात ठीक है कि मैं वैश्वानर को जानता हूं । आपलोग समिधाएं लावें ॥३॥

तान् । ह । उवाच । प्रातः । वः । प्रतिवक्तास्मि । इति । ते । ह । समित्पाणयः । पूर्वाह्णे । प्रतिचक्रमिरे । तान् । ह । अनुपनीय । एव । एतत् । उवाच ॥७॥

भाष्यम्—तानिति । तानृषीन् प्रति । स राजा हावाच । प्रातरन्येद्युःप्रातः काले वो युष्मान् । प्रतिवक्तास्मि । प्रतिवाक्यंदातास्मि । इति राज्ञोक्तास्ते ह राजाभिप्रायज्ञाः । समित्पाणयः । समित् पाणिषु येषां ते । समिद्धार हस्ताः । पूर्वाह्णे राजानं प्रतिचक्रमिरे गतवन्तः । स सम्राडश्वपतिः । तान् ह । अनुपनीयैव उपनयनमकृत्वैव । शिष्यभावमकृत्वैवेत्यर्थः । एतद्वक्ष्यमाणं वचनमुवाच ॥ ७ ॥

इत्येकादश खण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ११ ॥

अनुवाद—उन से वे राजा बोले कि मैं प्रातःकाल आप लोगों को उत्तर दूंगा । वे ऋषि भी हाथों में समिधाएं ले पूर्वाह्ण समय राजा के निकट गये । उन लोगों को उपनयन किये विना ही वे अश्वपति यह बोले ॥ ७ ॥

पदार्थः—( तान् ) उन आये हुए प्राचीनशाल आदि ऋषियों से ( ह ) वे प्रसिद्ध राजा ( उवाच ) बोले ( प्रातः ) प्रातःकाल ( नः ) आप लोगों को ( प्रतिवक्तास्मि ) प्रत्युत्तर दूंगा ( इति ) ( ते ) वे ( ह ) प्रसिद्ध वे लोग भी ( समित्पाणयः ) समिधाओं को हाथों में लेकर ( पूर्वाह्णे ) पूर्वाह्ण समय में ( प्रति चक्रमिरे ) राजा के निकट गये। राजा भी (अनुपनीय+एव) उपनयन न कर के ही शिष्यभाव न कर के ही ( तान् ) उन से ( एतत् ) यह वक्ष्यमाण वचन ( उवाच ) बोले ॥ ७ ॥

इत्येकादशखण्डस्य भाषाभाष्यं समाप्तम् ॥ ११ ॥

## अथ द्वादशः खण्डः

तत्त्वविदो योगिनो यत्र यत्रैव प्रकृतिषु दृशं प्रेरयन्ति तत्र तत्रैव ब्रह्मणो मोहिनीं शक्तिं प्रेक्ष्य मुह्यन्ति । सर्वाणि वस्तूनि एकैक–विलक्षणगुणवन्ति, इतरेतर–सहकारीणि अन्योन्य-रुचिप्रदानि, परस्पर–सहगामीनि दृश्यन्ते । यथा मेध्यामेकया वरत्रया सर्वे वृषभा निबद्धाः सन्तः कार्यनिष्पादका यथा वा एकेन सूत्रेण प्रोतामणयः परस्पर शोभा रञ्जकास्तथैवैकेनापि अदृश्येन, अचिन्तेन, आद्यन्तविहीनेन, गुणेन संप्रोतमिदं जगत्परस्परं रमणीयकतां समेधयत् सूक्ष्मदृष्टीन् प्रकृति परिच्छेद सन्निवेशिमानसान् योगिनः पदे पदे आनन्दयति विमोहयति विस्मापयति हासयति रोदयति मूर्छां करोति इत्येवं बहुविध विकार द्योतकं भवति अहो तत्त्वविदां सूक्ष्मतरः परामर्शः ॥

कोपि ज्ञानी एकमेव पदार्थं दर्शंदर्शन्तदन्तर्गत–गुणान् भावंभावंतस्मान्नविरमति इतरस्मिन् मनश्चापि न संनिवेशयति । तदेवस्तौति । तदेव प्रशंसति । अन्य एकदेशस्थं पर-

स्पर संबद्धं सूत्रमणिमिव पदार्थं दृष्ट्वा तत्रैव संसक्तस्तद्गुण मोहितस्तस्मादात्मानं मोचयितुं न शक्नोति । अपरः समष्टिं रूपायां सृष्टौ समानतया तदीयां शक्तिं पश्यन् सर्वत्रैव रमते । समंपश्यति समंस्तौति समग्रमेवविजानाति । सर्वे एते ज्ञानिनः । तेषु तु समत्वदर्शी श्रेष्ठः । इममेव विषयं दर्शयितुं प्रकरणस्यारम्भः ॥

अश्वपतिः खल्वागतांस्तान् मुखकान्त्यादिभिर्विज्ञानिनोऽवबोध्यात्मविदोऽप्येते भविष्यन्तीति आत्मपदेन ब्रह्म विषयिकां जिज्ञासां प्रत्येकं करोति तद्विषये च यावत्पर्यन्तं ते विजानन्ति तत ऊर्ध्वं वक्ष्यामीति शिष्यभूतानपि तान् प्रति प्रश्नावकाशः । किन्तु ब्रह्माणि कियज्जानासि किं स्वरूपं तन्मन्यसे किं लक्षणकं वाध्येषि इत्येवं विधे प्रश्ने प्रष्टव्ये कमात्मानमुपास्से इति पृच्छतो राज्ञः प्रश्न एव तावत्संदेहं जनयति । ब्रह्मण एकत्वात्स प्रश्न एव तस्मिन् न संघटते यतो बहूनामात्मनांमध्ये कमात्मानमुपास्से इति प्रश्नस्य भावो विज्ञायते । अतः किं शब्दो लक्षण परकत्वेन व्याख्येयः । यद्वा । जीवात्म परकः । जीवात्मा कथमुपास्यत्वमितिचेदुपास्तेस्तत्त्व मननार्थं ग्रहणात् । स्वरूपादेकत्वेपि संख्यायां तस्य बहुत्वे सति प्रश्नावकाशः । यद्वा । शक्तिपरकः । आत्मशब्देन शक्तिः । तथैव समाधान दर्शनात् । तद्यथा । कमात्मान मुपास्स इति प्रश्ने १ दिवमेव २ आदित्यमेव ३ वायुमेव ४ आकशमेव ५ अप एव ६ पृथिवीमेव उपास इति षण्णाम् समाधानात् । द्युलोकादीनां स्वरूपत आत्मत्वा भावात्तेष्वात्मशब्द प्रयोगात्तु शक्तिपरकोऽयमात्मशब्दः । एता ब्रह्माण्डस्य एकैका शक्तिरेव । यद्वा । राज्ञस्तु ब्रह्मपरक एव प्रश्नः । औपमन्यवादीनां समाधानं तु स्वस्वानुमितार्थ परकं यतः प्रश्नस्तु सर्व विधःस्यात् समाधानं तु तदेव भवति यदेव स जानाति ॥

**औपमन्यव ! कं त्वमात्मानमुपास्स इति । दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरोयं त्वमात्मानमुपास्से । तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते *॥ १ ॥**

---

* अथ होवाच जनꣳ शार्कराक्ष्यम् । प्राचीनयोग्य ! कं त्वं वैश्वानरं वेत्थेति दिवमेव राजन्निति होवाचोमिति होवाचैष वाऽअतिष्ठा वैश्वानर एतꣳ हि वै त्वमतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वꣳ समानानतितिष्ठसि यो वाऽएतमतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेतिमूर्धा त्वाऽएष वैश्वानरस्य मूर्धात्वाहास्यद्यदि ह नागमिष्य इति मूर्धा तेऽविदि-

औपमन्यव । कम् । त्वम् । आत्मानम् । उपास्से । इति । दिवम् । एव । भगवः । राजन् । इति । ह । उवाच । एषः । वै । सुतेजाः । आत्मा । वैश्वानरः । यम् । त्वम् । आत्मानम् । उपास्से । तस्मात् । तव । सुतम् । प्रसुतम् । आसुतम् । कुले । दृश्यते ॥ १ ॥

भाष्यम्—औपमन्यव इति । राजा तेषां भ्रान्तिनिरासार्थं तान् प्रत्येकं पृच्छति । तद्यथा । औपमन्यव ! हे प्राचीनशाल औपमन्यव ! त्वं कमात्मानं किं लक्षणविशिष्टं ब्रह्मोपास्से । यद्वा कां शक्तिं किं स्वरूपम्वा । उपास्से ध्यायसि अभ्यस्यसि अध्येषि । प्रकृति मध्ये तव कस्मिन् वस्तुनि परमाप्रीतिस्तद्गुणरसज्ञता च वर्त्तत इत्यर्थः । अत्र गौणेर्थे आत्मशब्दो द्रष्टव्यः । आप्नोति व्याप्नोति । सर्वावच्छेदेनेत्यात्मा शक्तिः स्वरूपम्वा । उपास्तिरपि गौणः । द्युप्रभृतीनामनुपास्यत्वात् । इत्यश्वपतिप्रश्नं श्रुत्वा औपमन्यवः । हे भगवः पूजावन् राजन् सम्राट् ! दिवमेव द्युलोकमेव । अहमुपासे । इति होवाच प्रत्युवाच । पुना राजा ब्रवीति । एषः । विधेयानुरोधेन पुंल्लिङ्गः । वै निश्चितम् । सुतेजाः । सुष्ठु शोभनं तजो यत्र । स सुतेजाः । तेजो राशिसम्पन्नः सुतेजोनामा । वैश्वानरः । वैश्वानरस्यायं वैश्वानरसम्बन्धीत्यर्थः । आत्मा अंशः । अंश इवांशः । ब्रह्मणोंऽशाऽसम्भवात् । अयमभिप्रायोस्ति । अयं द्युलोकाख्यः सुतेजा इत्यन्वर्थसंज्ञोस्ति । तथा वैश्वानरस्यांश इवांश एकोस्ति । यमात्मानं सम्प्रति त्वमुपास्से । अयं सुतेजा आत्मा वैश्वानरोस्ति । नेदं ब्रह्म । तस्मात् । यस्मात् त्वं सुतेजसमात्मानं सम्प्रति उपास्से । तस्मात् कारणात् तव कुले वंशे । सुतमभिषुतम् । प्रसुतम् । अभिषुतं आसुतं सोमरूपं वस्तु अग्निहोत्रायदृश्यते । सर्वे तव सन्ताना अग्निहोत्रिणः सन्तातिरित्यर्थः ॥ १ ॥

अनुवाद—राजा पूछता है—हे औपमन्यव ! आप किंलक्षणविशिष्ट ब्रह्म की उपासना करते हैं । यद्वा इस प्रकृति में किस स्वरूप को यद्वा किस शक्ति को अधिकतर

---

तोऽभविष्यद्यदि ह नागमिष्य इति वा ॥ शत० १० । ६ । १ । ९ ॥

अर्थ—अब राजा जन शार्कराक्ष्य से पूछते हैं कि हे सायवस आप किसको वैश्वानर समझते हैं ? जन—हे राजन् द्युलोक को ही । राजा ओम् ठीक है यह प्रतिष्ठा वैश्वानर है जिस हेतु आप इस प्रतिष्ठा वैश्वानर को जानते हैं इस हेतु अपने ज्ञानियों की अतिक्रमण करके वर्त्तमान हैं जो इस अतिष्ठा वैश्वानर को जानता है वह मृत्यु का जय और पूर्ण आयु को पाता है । परन्तु वैश्वानर का यह मूर्धा है आपका गिर जाता अथवा वैश्वानर का मूर्धा आप को नहीं मालूम होता यदि आप मेरे निकट नहीं आते ॥ ९ ॥

प्यार करते हैं। औपमन्यव क०—हे भगवान्! सर्वैश्वर्य सम्पन्न राजन्! द्युलोक को (राजा) यह निश्चय सुतेजा नामक वैश्वानर का एक अंश समान है। जिस शक्ति को आप बहुत प्यार कर रहे हैं इसी कारण आप के कुल में अभिषुत प्रसुत आसुत सोम पदार्थ देख पड़ता है ॥ १ ॥

पदार्थः—(औपमन्यव) राजा अश्वपति प्रत्येक विद्वानों से उपास्य देव के विषय में जिज्ञासा करते हैं। प्रथम औपमन्यव से पूछते हैं हे प्राचीनशाल औपमन्यव! (त्वम्) आप (कम्+आत्मानम्) किस लक्षण विशिष्ट ब्रह्म की यद्वा किस आत्मा की यद्वा किस शक्ति की (उपास्से) उपासना करते हैं। यद्वा अध्ययन वा विचार करते हैं यद्वा आपकी किस प्राकृतिक शक्ति में अत्यन्त प्रीति है। औपमन्यव उत्तर देते हैं (भगवः) हे पूजनीय (राजन्) राजन्! (दिवमेव) द्युलोक की ही मैं उपासना=विचार करता हूं (इति+ह+उवाच) यह उत्तर उसने दिया। राजा। (एषः) यह (वै) निश्चय (सुतेजाः) शोभन तेजवाला तेजोराशि सम्पन्न (वैश्वानरः) वैश्वानर का (आत्मा) एक अंश समान है (यम्) जिस (आत्मानम्) आत्मा=अंश को (त्वम्+उपास्से) आप उपासते हैं (तस्मात्) उस कारण (तव) आप के (कुले) कुल में (सुतम्) अच्छे प्रकार बनाया हुआ (प्रसुतम्) प्रकृष्ट रस संयुक्त (आसुतम्) सब प्रकार से प्रस्तुत सोमरस (दृश्यते) देख पड़ते हैं ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते। मूर्द्धात्वेष आत्मन इति होवाच। मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥ २ ॥**

अत्सि। अन्नम्। पश्यसि। प्रियम्। अत्ति। अन्नम्। पश्यति। प्रियम्। भवति। अस्य। ब्रह्मवर्चसम्। कुले। यः। एतम्। एव। आत्मानम्। वैश्वानरम्। उपास्ते। मूर्द्धा। तु। एषः। आत्मनः। इति। ह। उवाच। मूर्द्धा। ते। व्यपतिष्यत्। यत्। माम्। न। आगमिष्यः। इति ॥ २ ॥

भाष्यम्—औपमन्यव इति। औपमन्यव! यतस्त्वं सुतेजसमात्मानमुपास्से अतस्त्वमन्नम्। अद्यते भूतैरित्यन्नं भोग्यं वस्तु। अत्सि भुंक्षे। अन्नमित्यनेन भोग्यस्य पदार्थस्य ग्रहणम्। जगति यावद् भोग्यं तावत् सर्वं त्वं प्राप्नोषि पुनः प्रियं प्रियंकर वस्तु पश्यसि अवलोकयसि। अन्योऽपि यः कश्चिदेतमात्मानं वैश्वानरम्। एवमेतद्गुणविशिष्टं विदि-

त्वोपास्ते सोऽपि । अन्नं प्रचुरभोग्यमत्ति प्रियञ्चपश्यति । अस्य च कुले ब्रह्मवर्चसं सर्वं वस्तुभवति । हे औपमन्यव ! एष द्युलोकरूप आत्मनो वैश्वानरस्य मूर्द्धैवास्ति त्वं खलु मूर्द्धानमेव जानासि न समग्रं वैश्वानरमित्यर्थः । अतो विपरीत ग्राहिनस्ते मूर्द्धा व्यपतिष्यद् विपतितोऽभविष्यत् ज्ञानशून्योऽभविष्यत् । यदि त्वं मां नागमिष्य इति । त्वया साधुकृतं यन्ममांतिकं समागतम् । कः खल्वाशय एतस्य ?। मूर्खा अपि अन्नमदन्ति । आरण्यका मनुष्याः स्वस्थाः सन्तः कलत्रं पुत्रं बन्धुं सुहृदं सर्वं प्रियमेव पश्यन्ति । दृश्यते लोके कश्चित् सर्वथा बालिशो यथाजात एव वर्तते । स तु स्वच्छन्दचारी वृषभ इव सर्वं लौकिकं भोग्यं प्राप्य भुंक्ते बहून् पुत्रान् जनयति इतरान् धनबलेन वशीकृत्य तैरात्मानं सेवयन्ति प्रतिक्षणं सानन्दं तिष्ठति । एतद्विपरीतं ज्ञानिषु दृश्यते । तेन अन्नादनं प्रियावलोकनञ्च किन्नामकं लक्षणं भविष्यति ज्ञानिनः । इत्येवमाक्षेपे प्राप्ते ब्रूमः । अज्ञानिनां भोग्यं परिच्छिन्नं स्वल्पीयोस्ति । तद्विपरीतं विदुषाम् । कथमिव ज्ञानिभोग्यस्यानन्तता विद्यते ? सृष्टौ यत्किमपि उपलभ्यते तत्सर्वं भोग्यत्वेनैवते आददते । अरण्यमितरेषां शून्यं नीरसं निरानन्दं भवति तदेव ज्ञानिनामाह्लादजनकम् । तत्रस्वच्छन्दतया परिवर्धितानि सुपुष्पितानि विविधरूपाणि विविधभावग्राहकाणि विचित्रितानि बहुविध रङ्गराञ्जितानि वस्तूनि ज्ञानिनमेवाह्लादयन्ति । इत्थं ज्ञानिनामानन्दस्य सीमा न भवतीति द्रष्टव्यम् ॥ २ ॥ इति द्वादश खण्डस्य संस्कृतभाष्यं समाप्तम् ॥ १२ ॥

अनुवाद—आप भोग्य वस्तु भोगते हैं प्रिय देखते हैं । सो जो कोई इसी वैश्वानर सम्बन्धी अंश समान अंश को उपासता है अर्थात् अध्ययन करता है वह भी भोग्य भोगता है प्रिय देखता है उसके कुल में ब्रह्म तेज प्राप्त होता है । परन्तु यह व्यापक वैश्वानर का ( मूर्द्धा ) शिर है इस प्रकार राजा ने कहा और यह भी कहा कि आप का शिर गिर जाता यदि आप मेरे निकट नहीं आते ।। २ ।।

पदार्थः—( अन्नम् ) भोग्यवस्तु ( अत्सि ) आप भोगते हैं ( प्रियम्+पश्यसि ) प्रिय देखते हैं ( यः ) जो कोई ( एतम्+एव ) इसी ( वैश्वानरम् ) वैश्वानर सम्बन्धी ( आत्मानम् ) अंश समान अंश को ( उपास्ते ) उपासता है अर्थात् अध्ययन करता है वह भी ( अन्नम्+अत्ति ) भोग्य भोगता है ( प्रियम्+पश्यति ) प्रिय देखता है ( अस्य कुले ) इसके कुल में ( ब्रह्मवर्चसम् ) ब्रह्मतेज ( भवति ) होता है ( तु ) परन्तु ( आत्मनः) व्यापक वैश्वानर स्वरूप का ( एषः ) यह ( मूर्द्धा ) शिर है ( इति+ह+उवाच ) इस प्रकार उपदेश देकर फिर बोले ( ते मूर्द्धा ) आपका शिर (व्यपतिष्यत्)

गिरजाता ( यत् ) यदि ( माम् ) मेरे निकट ( न+आगमिष्यः ) नहीं आप आते ( इति ) ॥ २ ॥ इति द्वादशखण्डस्य भाषा भाष्यं समाप्तम् ॥ १२ ॥

## अथ त्रयोदशः खण्डः

**अथ होवाच–सत्ययज्ञं पौलुषिम् । प्राचीनयोग्य ! कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरोयं त्वमात्मानमुपास्से । तस्मात्तव बहु विश्वरूपं कुले दृश्यते* ॥१॥**

अथ । ह । उवाच । सत्ययज्ञम् । पौलुषिम् । प्राचीनयोग्य । कम् । त्वम् । आत्मानम् । उपास्से । इति । आदित्यम् । एव । भगवः । राजन् । इति । ह । उवाच । एषः । वै । विश्वरूपः । आत्मा । वैश्वानरः । यम् । त्वम् । आत्मानम् । उपास्से । तस्मात् । तव । बहु विश्वरूपम् । कुले । दृश्यते ॥ १ ॥

भाष्यम्—अथेति । अथानन्तरम् । सोऽश्वपतिः । हेति प्रसिद्धो वैश्वानरविद् । पौलुषिं पुलुषस्यापत्यं सत्ययज्ञं प्रत्युवाच । हे प्राचीन योग्य ! त्वम् । कमात्मानं किं लक्षणकं ब्रह्मोपास्से । यद्वा । कां शक्तिम् । उपास्से प्रीत्या प्रीणयासि ? इति राजोक्तः सः । हे भगवो भगवन् राजन् ! आदित्यं सूर्य्यमेवाहमुपास्से इति ह तं राजानं प्रत्युवाच । पुना राजा ब्रवीति । हे प्राचीनयोग्य ! एष वै विश्वरूपः । विश्वानि विविधानि सप्त प्रकाराणि रूपाणि यस्मिन् स विश्वरूपः । यद्वा । विश्वानि सर्वाणि रूपाणि शुक्लपीतादीनि यस्मात् सः । आदित्यत एव जगति शुक्ल पीतादीनि रूपाणि दृश्यन्ते । यद्वा । विश्वमात्मानं परितः सर्वं भूम्यन्तरिक्षाद्यं जगद्रूपयति अदृश्यावस्थातो रूपवद्दृश्याकारं करोतीति विश्वरूपः सूर्य्यः । स एव स्वाकर्षणेन प्रथमं स्वपरितः स्थितं जगत् ईदृशेरूपे पर्य्यणमयत् । अतोऽपि विश्वरूप इत्याचक्षत आत्मेत्यादि पूर्ववत् । तस्मात्

* अथ होवाचेन्द्रद्युम्नं भाल्लवेयम् । वैयाघ्रपद्य ! कं त्वं वैश्वानरं वेत्थेत्यादित्यमेव राजन्निति होवाचोमिति होवाचैष वै सुततेजा वैश्वानर एतꣳ हि वै त्वꣳ सुततेजसं वैश्वानरं वेत्थ तस्मात्त्वैष सुतोऽद्यमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति यो वा एतꣳ सुततेजसं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति चक्षुस्त्वाऽएतद्वैश्वानरस्य चक्षुस्त्वाहास्यद्यदि ह नागमिष्य इति चक्षुस्तेऽविदितमभविष्यद्यदि ह नागमिष्य इति वा ॥ शत० १० । ६ । १ । ८ ॥

द्धेतो । तव कुले । बहु । अनेकम् । विश्वरूपम् । विविध रूपं हवनोपकरणं दृश्यते ॥ १॥

अनुवाद—अनन्तर वे प्रसिद्ध राजा पौलुषि सत्ययज्ञ नाम विद्वान् से बोले कि हे प्राचीनयोग्य ! आप किंलक्षणविशिष्ट ब्रह्म की उपासना करते हैं यद्वा किस शक्ति वा आत्मा का अध्ययन करते हैं। उन्होंने उत्तर दिया कि हे ऐश्वर्यसम्पन्न राजन् । मैं आदित्य का ही अध्ययन करता हूं । ( राजा ) निश्चय यह वैश्वानर सम्बन्धी विश्वरूप नामक अंशसमान अंश वा शक्ति है जिस अंश को आप अध्ययन कर रहे हैं। इस कारण आप के कुल में बहुत विश्वरूप होमापकरण दीख पड़ते हैं ॥ १ ॥

पदार्थः—( अथ ) तदनन्तर ( ह ) सुप्रसिद्ध वे राजा ( पौलुषिम् ) पुलुष ऋषि के पुत्र (सत्ययज्ञम्) सत्ययज्ञ नाम विद्वान् से (उवाच) बोले कि (प्राचीन योग्य) हे प्राचीन योग्य ! ( त्वम् ) आप ( कम् ) किस ( आत्मानम् ) लक्षण वाले ब्रह्म की वा शक्ति की ( उपास्से) उपासना वा अध्ययन करते हैं ( इति ) ( ह+उवाच ) राजोक्त प्रश्न सुन वे प्रसिद्ध विद्वान् बोले कि ( भगवः ) हे पूज्य ऐश्वर्यसम्पन्न ( राजन् ) राजन् ! ( आदित्यम्+एव ) आदित्य का ही मैं अध्ययन करता हूं ( इति ) यह सुन पुनरपि राजा बोले कि हे प्राचीन योग्य ! ( वै ) निश्चय (वैश्वानरः) वैश्वानर सम्बन्धी अर्थात् वैश्वानर का ( एषः ) यह आदित्य ( विश्वरूपः ) विश्वरूप नामक एक ( आत्मा ) अंश वा शक्ति सदृश है ( त्वम् ) आप ( यम् ) जिस ( आत्मानम् ) अंश वा शक्ति समान स्वरूप का ( उपास्से ) अध्ययन करते हैं ( तस्मात् ) उस कारण ( तव ) तेरे ( कुले ) कुल में ( बहु ) बहुत ( विश्वरूपम् ) विविध प्रकार का उपकरण ( दृश्यते ) देख पड़ता है जिस कारण आप विश्वरूप का अध्ययन करते हैं इस हेतु आप के कुल में विविधरूप सामग्री दीखती है परन्तु यह ब्रह्म नहीं ॥ १ ॥

भाष्याशयः—विश्वरूप—यहां आदित्यपद से सूर्य का ग्रहण है इसी का विशेषण विश्वरूप है । जिस में विश्व=विविध अर्थात् सात प्रकार के रूप हों यद्वा विश्व, अर्थात् सम्पूर्ण शुक्ल पीतादि सप्त प्रकार के रूप हों जिससे । सूर्य से ही जगत् में सब रूपों की उत्पत्ति है इस हेतु सूर्य को विश्वरूप कहते हैं । यद्वा अपने चारो तरफ स्थित जो जगत् उस में वा उस को अदृश्यावस्था से दृश्यावस्था में रूपित करते हैं यद्वा अपने आकर्षण से प्रथम अपने परितःस्थित जगत् को इस रूप में जो लावे । इन सब कारणों से सूर्य को विश्वरूप कहते हैं । वेदों के अनेक स्थलों में सूर्य को सप्त रूप, सप्तकिरण, सप्तार्चि कहा गया है । आजकल भी सप्ताश्व इसी हेतु कहते हैं कि इस में सात प्रकार के किरण हैं । अश्वनाम किरण का है । आत्मा—आत्मा शब्द के

भी अनेक अर्थ होते हैं यहां अंश अर्थ में आत्मा शब्द का प्रयोग हुआ है अर्थात् सूर्यादि यह जगत् ब्रह्म के अंश अर्थात् अंश सदृश है । इत्यादि अर्थभावना सर्वत्र कर लेनी ॥ १ ॥

**प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यद्यन्मां नागमिष्य इति ॥२॥**

प्रवृत्तः । अश्वतरीरथः । दासीनिष्कः । अत्सि । अन्नम् । पश्यसि । प्रियम् । अत्ति । अन्नम् । पश्यति । प्रियम् । भवति । अस्य । ब्रह्मवर्चसम् । कुले । यः । एतम् । एवम् । आत्मानम् । । वैश्वानरम् । उपास्ते । चक्षुः । तु । एतत् । आत्मनः । इति । ह । उवाच । अन्धः । अभविष्यत् । यत् । माम् । न । आगमिष्यः । इति ॥ २ ॥

भाष्यम्—प्रवृत्तइति । हे प्राचीनयोग्य ! तस्मादेव कारणात् । अश्वतरीभ्यां युक्तो रथः । दासीनिष्को दासीभिर्युक्तो निष्को हार इति दासीनिष्कश्च । तव प्रवृत्तः । त्वामनुगतो भवति । त्वया सार्द्धं वर्तत इत्यर्थः । अतएवान्नं भोग्यं वस्तु । अत्सि भुङ्क्षे । प्रियं पश्यसीत्यादि पूर्ववत् । हे प्राचीनयोग्य ! आत्मनो व्यापकस्य वैश्वानरस्य एतदादित्यरूपं वस्तु । चक्षुष्टु चक्षुस्त्वेव नयनसमानमेव यतोऽनेनैव सूर्यतेजसाऽऽप्यायिताभ्यां नेत्राभ्यां जीवाः पश्यन्ति । अतश्चक्षुस्त्वमादित्यस्य । यद्यदि मां नागमिष्यो मत्समीपं नागमिष्यस्त्वञ्चेत्तर्हि अन्धोऽभविष्यत् त्वमभविष्योऽभविष्यदित्यार्षः प्रयोगः । यद्वा वैश्वानरस्य चक्षुषोऽज्ञानेन नेत्रमविदितमभविष्यत् । यन्मांनागमिष्य इति ॥ २ ॥

इति त्रयोदश खण्डस्य संस्कृतभाष्यं समाप्तम् ॥ १३ ॥

अनुवाद—( इसी कारण ) आप के निकट अश्वतरीयुक्त रथ और दासी सहित माला विद्यमान हैं और भोग्य भोगते हैं प्रिय देखते हैं । सो जो कोई वैश्वानर सम्बन्धी इसी अंश वा शक्तिस्वरूप का अध्ययन करता है वह भी भोग्य भोगता है प्रिय देखता है इस के कुल में ब्रह्म तेज होता है । परन्तु यह व्यापक वैश्वानर का नेत्र समान है । इतना कह वे फिर बोले कि यदि मेरे निकट आप न आते तो आप अन्धे हो जाते ॥२॥

पदार्थः–हे प्राचीनयोग्य ! इसी कारण ( अश्वतरीरथः ) अश्वतरी युक्त रथ ( दासीनिष्कः ) दासी सहित निष्क अर्थात् हार ( प्रवृत्तः ) आप के निकट विद्यमान हैं और

( अन्नम्+अत्सि ) आप अन्न खाते हैं अर्थात् भोग्य वस्तुओं को भोगते हैं ( प्रियम्+पश्यसि ) प्रिय देखते हैं ( यः ) जो कोई इत्यादि पूर्ववत् जानना । ( तु ) परन्तु हे प्राचीनयोग्य ! ( एतत् ) यह आदित्य ( आत्मनः ) व्यापक वैश्वानर का (चक्षुः ) नेत्र समान है क्योंकि सूर्य के तेज से संयुक्त नेत्र के द्वारा जीव देखता है ( इति+ह+उवाच ) इतना कह कर फिर राजा कहने लगे ( यत् ) यदि ( माम् ) मेरे निकट ( न+आगमिष्यः ) आप नहीं आते तो ( अन्धः+अभविष्यत् ) अन्ध हो जाते अर्थात् वैश्वानर के नेत्र के अज्ञान के कारण उस विषय में आप भी अज्ञानी रहते ॥ २ ॥

इति त्रयोदशखण्डस्य भाषाभाष्यं समाप्तम् ॥ १३ ॥

## अथ चतुर्दशः खण्डः

**अथ होवाचेन्द्रद्युम्नं भाल्लवेयम् । वैयाघ्रपद्य ! कं त्वमात्मानमुपास्स इति ? वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति * ॥ १ ॥**

अथ । ह । उवाच । इन्द्रद्युम्नम् । भाल्लवेयम् । वैयाघ्रपद्य । कम् । त्वम् । आत्मानम् । उपास्से । इति । वायुम् । एव । भगवः । राजन् । इति । ह । उवाच । एषः । वै । पृथग्वर्त्मा । आत्मा । वैश्वानरः । यम् । त्वम् । आत्मानम् । उपास्से । तस्मात् । त्वाम् । पृथग्बलयः । आयन्ति । पृथग्रथश्रेणयः । अनुयन्ति ॥ १ ॥

भाष्यम्—अथेति । अथानन्तरं भाल्लवेयमिन्द्रद्युम्नं प्रति । अश्वपतिर्ह राजोवाच । हे वैयाघ्रपद्य ! त्वं कमात्मानं किंलक्षणकंब्रह्मोपास्से । यद्वा । कां शक्तिं स्वरूपं वा उपास्से अधीषे । इति । इति शब्दः प्रश्न समाप्त्यर्थः । राज्ञा पृष्टो भाल्लवेयो होवाच । हे भगवो राजन् ! वायुमेवाहमुपासे । वायावेव मम परमा प्रीतिरस्ति । इतिश्रुत्वा राजा तद्गुणं

* अथ होवाच बुडिलमाश्वतराश्विम् । वैयाघ्रपद्य ! कं त्वं वैश्वानरं वेत्थेति वायुमेव राजन्निति होवाचोमिति होवाचैष वै पृथग्वर्त्मा वैश्वानर एतꣳ हि वै त्वं पृथग्वर्त्मानं वैश्वानरं वेत्थ तस्मात्त्वां पृथग्रथश्रेणयोऽनुयान्ति योऽवा एतं पृथग्वर्त्मानं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति प्राणस्त्वाऽएष वैश्वानरस्य प्राणस्त्वाहास्यद्यदि ह नागमिष्य इति प्राणस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा ॥ ७ ॥ शत० १० । ६ । १ ॥

प्रस्तौति । एप वै । पृथग्वर्त्मा । पृथक् नाना वर्त्मानि पन्थानो यस्य स पृथग्वर्त्मा । स आत्मा स्वभावो यस्य स पृथग्वर्त्मात्मा । आत्मेतिपृथक् पदं वा । वैश्वानरः । वैश्वानरस्यैकांशो यं त्वमात्मानमुपास्से । तस्माद् वैश्वानरस्योपासनात् पृथग्वलयः । पृथग्नानाविधा वलयोवस्त्रान्नादिलक्षणानि दानानि भोग्यानि वा । त्वाम् । आयन्ति आगच्छन्ति । पृथग् रथश्रेणयो विविधरथपंक्तयोपि । त्वामनुयन्ति । अनुसरन्ति ॥ १ ॥

अनुवाद—अनन्तर उस प्रसिद्ध राजा ने भाल्लवेय इन्द्रद्युम्न विद्वान् से जिज्ञासा की कि हे वैयाघ्रपद्य ! आप किंलक्षणविशिष्ट ब्रह्मकी उपासना करते हैं। वा किस शक्ति स्वरूप का अध्ययन करते हैं। इन्द्रद्युम्न ने उत्तर दिया कि हे भगवन् राजन् ! वायु का ही अध्ययन में करता हूं ( राजा ) निश्चय यह पृथग्वर्त्मात्मा नामक वैश्वानर सम्बन्धी एक अंश समान वा शक्ति सदृश है जिस अंश वा शक्ति का अध्ययन आप करते हैं उस हेतु नानाबलि ( भोग्यपदार्थ ) आप को प्राप्त होती है और नाना रथ पंक्ति आप के पीछे चलती है ॥ १ ॥

पदार्थः—( अथ ) अनन्तर ( ह ) उस प्रसिद्ध राजा ने ( भाल्लवेयम् ) भाल्लवि ऋषि के पुत्र ( इन्द्रद्युम्नम् ) इद्रद्युम्न से ( उवाच ) जिज्ञासा की ( वैयाघ्रपद्य ) हे वैयाघ्र पद्य । ( त्वम् ) आप ( कम् ) किं लक्षणविशिष्ट=किस लक्षण वाले ( आत्मानम् ) ब्रह्म की ( उपास्से ) उपासना करते हैं। यद्वा । ( कम्+आत्मानम ) किस शक्ति स्वरूप का ( उपास्से ) अध्ययन करते हैं। इन्द्रद्युम्न ( ह+उवाच ) बोले कि (भगवः) हे पूजावान् ( राजन् ! ) राजन् (वायुमेव) वायु का ही मैं अध्ययन करता हूं (राजा क०) ( एषवै ) यह निश्चय ( पृथग्वर्त्मा ) विविध प्रकार से गमन स्वभाववाला (वैश्वानरः) वैश्वानर का ( आत्मा ) आत्मा एक अंश समान है ( यम्+त्वम्० ) जिस अंश का आप अध्ययन करते हैं ( तस्मात् ) उस कारण ( त्वाम् ) आपको ( पृथग्बलयः ) पृथक्=नाना । बलयः=बलिएं । अर्थात् भोग सामग्रियां ( आयन्ति ) आती हैं। और ( पृथग्रथश्रेणयः ) विविध रथ पंक्तियां ( अनुयन्ति ) आपके पीछे चलती हैं ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । प्राणस्त्वेष आत्मन इति होवाच । प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ २ ॥**

अत्सि । अन्नम् । पश्यसि । प्रियम् । अत्ति । अन्नम् । पश्यति । प्रियम् । भवति ।

अस्य । ब्रह्मवर्चसम् । कुले । यः । एतम् । एवम् । आत्मानम् । वैश्वानरम् । उपास्ते । प्राणाः । तु । एषः । आत्मनः । इति । ह । उवाच । प्राणः । ते । उदक्रमिष्यद् । यत् । माम् । न । आगमिष्यः । इति ॥ २ ॥

भाष्यम्–अत्सीति । तस्मात्त्वमन्नमत्सि प्रियं पश्यसीत्यादि पूर्वं समानम् । प्राणस्त्वेष आत्मनः । व्यापकस्य वैश्वानरस्य । एष वायुः प्राणः प्राणसमः । यन्मां नागमिष्यः । ते प्राणः । उदक्रमिष्यद् उत्क्रान्तोऽभविष्यत् तत्र प्राणोऽविदितोऽभविष्यद्वा ॥ २ ॥

इति चतुर्दश खण्डस्यभाषाभाष्यं समाप्तम् ॥

अनुवाद–इसी कारण आप भोग्य भोगते हैं प्रिय देखते हैं । सो जो कोई वैश्वानर सम्बन्धी इसी अंश का अध्ययन करता है वह ही भोग्य भोगता है प्रिय देखता है इसके कुल में ब्रह्म तेज होता है । परन्तु व्यापक वैश्वानर का यह ( वायुरूप ) एक अंश है । इतना कह फिर राजा बोले कि यदि आप मेरे निकट न आते तो आप का प्राण उत्क्रान्त ( निकल ) हो जाता ॥ २ ॥

पदार्थः—( अन्नमत्सि ) आप अन्न खाते हैं अर्थात् भोग्य भोगते हैं इत्यादि अर्थ पूर्ववत् जानना ( प्राणः० ) परन्तु सर्वव्यापी वैश्वानर का यह वायु ( प्राणः ) प्राण समान है ( ते+प्राणः ) आप का प्राण ( उदक्रमिष्यत् ) निकल जाता ( यन्माम्० ) यदि आप मेरे निकट नहीं आते अर्थात् वैश्वानर के प्राण के अज्ञान से आप प्राण विज्ञान से रहित होजाते ॥ २ ॥ इति चतुर्दश खण्डस्य भाषाभाष्यं समाप्तम् ॥ १४ ।

## अथ पञ्चदशः खण्डः

**अथ होवाच–जनꣳशार्कराक्ष्य ! कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरोयं त्वमात्मानमुपास्से । तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च * ॥ १ ॥**

---

* अथ होवाच महाशालं जाबालम् । औपमन्यव ! कं त्वं वैश्वानरं वेत्थेत्याकाशमेव राजन्निति होवाचोमिति होवाचैष वै बहुलो वैश्वानर एतꣳ हि वै त्वं बहुलं वैश्वानरं वेत्थ तस्मात्त्वं बहुः प्रजया पशुभिरासि यो वाऽएतं बहुलं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेत्यात्मा त्वाऽएष वैश्वानरस्यात्मा त्वाहास्यद्यदि ह नागमिष्य इत्यात्मा तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा ॥ ६ ॥ शत० १० । ६ । १॥ अर्थ—अब महा-

अथ । ह । उवाच । जनम् । शार्कराक्ष्य । कम् । त्वम् । आत्मानम् । उपास्से । इति । आकाशम् । एव । भगवः । राजन् । इति । ह । उवाच । एषः । वै । बहुलः । आत्मा । वैश्वानरः । यम् । त्वम् । आत्मानम् । उपास्से । तस्मात् । त्वम् । बहुलः । असि । प्रजया । च । धनेन । च ॥ १ ॥

भाष्यम्—अथ हेति । अथानन्तरं राजा होवाच । जनं विद्वांसं प्रति । हे शार्कराक्ष्य ! त्वं कमात्मानं किं लक्षणकं ब्रह्मोपास्से । यद्वा । कां शक्तिमध्येषि इति । हे भगवो भगवन् राजन् आकाशमेवाध्येमीति जनो होवाच । पुनाराजा कथयति । एष वै बहुलो बहुव्यापकः । वैश्वानरो वैश्वानरस्यायं वैश्वानरः । आत्मांशः अंश इव यावत् वर्तते । यमात्मानं त्वमुपास्से । तस्मात्त्वं प्रजयाच पुत्रपौत्रादिलक्षणया सन्तत्याच धनेन च गोहिरण्यादि लक्षणेन बहुलोसि बहुसंख्या विशिष्टोसि ॥ १ ॥

अनुवाद—अनन्तर उस प्रसिद्ध राजा ने जन नाम विद्वान् से जिज्ञासा की कि हे शार्कराक्ष्य ! आप किं लक्षण विशिष्ट ब्रह्म की उपासना करते हैं । यद्वा । किस शक्ति स्वरूप का अध्ययन करते हैं । जन नाम विद्वान् ने उत्तर दिया कि हे भगवन् राजन् मैं आकाश का ही अध्ययन करताहूं ( राजा कहते हैं ) निश्चय यह बहुल नामधारी वैश्वानर का एक अंश समान है जिस अंश को आप अध्ययन करते हैं । उस कारण आप प्रजा और धन से बहुल अर्थात् बहु युक्त हैं ॥ १ ॥

पदार्थः—( अथ ) अनन्तर ( ह ) वह प्रसिद्धराजा ( जनम् ) जन नाम विद्वान् से ( उवाच ) जिज्ञासा की ( शार्कराक्ष्य ) हे शार्कराक्ष्य ! ( त्वम् ) आप ( कम्+आत्मानम् ) किस लक्षण वाले ब्रह्म की ( उपास्से ) उपासना करते हैं । यद्वा । किस शक्ति स्वरूप का अध्ययन करते हैं ( इति ) ( ह+उवाच ) वह जन नाम विद्वान् बोले कि ( भगवो राजन् ) हे भगवन् राजन् ( आकाशमेव ) आकाश का ही मैं अध्ययन करता हूं फिर राजा बोले ( एष वै ) निश्चय यह ( बहुलः ) बहु व्यापक महान् ( वैश्वानरः ) वैश्वानर सम्बन्धी ( आत्मा ) अंश समान अंश है । अथवा शक्ति समान है (यं त्वमात्मानमुपास्से) जिस अंश का अध्ययन आप करते हैं ( तस्मात् ) उस कारण ( त्वम् ) आप ( प्रजया च ) पुत्र पौत्रादि प्रजा से और ( धनेन च ) गो हिरण्यादि धन से ( बहुलोऽसि ) बहु व्यापक हैं ॥ १ ॥

---

शाल जाबाल से पूछते हैं कि हे औपमन्यव ! आप किस को वैश्वानर जानते हो? जाबाल हे राजन् ! आकाश को ही । राजा—ओम् ठीक है । यह बहुल वैश्वानर है इत्यादि उपनिषद् समान ही इसका अभिप्राय है ॥ ६ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्य-स्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमु-पास्ते । सन्देहस्त्वेष आत्मन इति होवाच। सन्देहस्ते व्यशीर्य्यद्यन्मां नागमिष्य इति ॥ २ ॥

अत्सि । अन्नम् । पश्यसि । प्रियम् । अत्ति । अन्नम् । पश्यति । प्रियम् । भव-ति । अस्य । ब्रह्मवर्चसम् । कुले । यः । एतम् । एवम् । आत्मानम् । वैश्वानरम् । उपास्ते । सन्देहः । तु । एषः । आत्मनः । इति । ह । उवाच । सन्देहः । ते । व्यशीर्यत् । यत् । माम् । न । आगमिष्यः । इति ॥ २ ॥

भाष्यम्-अत्सीति । अत एव हे शार्कराक्ष्य । त्वमन्नमात्सि प्रियं पश्यसीत्यादि समानम् । आत्मनः वैश्वानरस्यात्मन एषः सन्देहः मध्यकायः मध्यं हि पूर्वा परांश साधारण्यात् कुत्रानुप्रविष्टमिति सन्दिह्यते अतः सन्देहो मध्यकायः । यन्मां नागमिष्यस्त्वञ्चेत्तर्हि ते सन्देहो मध्यकायो व्यशीर्यत शीर्णो विच्छिन्नोऽभविष्यदिति ॥ २ ॥

इति पञ्चदशखण्डस्य संस्कृत भाष्यं समाप्तम् ॥ १५ ॥

अनुवाद-(इसी कारण) आप भोग्य वस्तु भोगते हैं प्रिय देखते हैं और जो कोई वैश्वानर सम्बन्धी इसी अंश को वा शक्ति को उपासता है वह भी भोग्य भोगता है प्रिय देखताहै और इसके कुल में ब्रह्मतेज होता है । परन्तु सर्वव्यापक वैश्वानर का यह मध्यम अंश समान है । इतना कह राजा फिर बोले कि यदि आप मेरे पास न आते तो आप का मध्य शरीर विच्छिन्न होजाता ॥ २ ॥

पदार्थः-( अन्नमत्सि ) आप अन्न खाते हैं अर्थात् भोग्य वस्तु भोगते हैं इत्यादि अर्थ पूर्ववत् जानना । ( सन्देहः ) सन्देह नाम मध्य शरीर काहै । यह आकाश व्या-पक वैश्वानर का मध्य अंश समान है ( ते+सन्देहः) आपका मध्य शरीर ( व्यशी-र्यत् ) छिन्नभिन्न हो जाता ( यन्माम्० ) यदि मेरे पास आप न आते ॥ २ ॥

इति पञ्चदशखण्डस्य भाषाभाष्यं समाप्तम् ॥ १५ ॥

## अथ षोडशः खण्डः

अथ होवाच-बुडिलमाश्वतराश्विम् । वैयाघ्रपद्य ! कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवा-

चैषवै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वꣳरयिमान् पुष्टिमानसि * ॥ १ ॥

अथ । ह । उवाच । बुडिलम् । आश्वतराश्विम् । वैयाघ्रपद्य । कम् । त्वम् । आत्मानम् । उपास्ते । इति । अपः । एव । भगवः । राजन् । इति । ह । उवाच । एषः । वै । रयिः । आत्मा । वैश्वानरः । यम् । त्वम् । आत्मानम् । उपास्से । तस्मात् । त्वम् । रयिमान् । पुष्टिमान् । असि ॥ १ ॥

भाष्यम्-अथेति । अथानन्तरं राजा होवाचाश्वतराश्विं बुडिलं विद्वांसं प्रति । हे वैयाघ्रपद्य ! त्वं कमात्मानमुपास्से । किं लक्षणकं ब्रह्मोपास्से । यद्वा । कां शक्तिमधीषे ? इति राजपृष्टो बुडिलोहोवाच । भगवो भगवन् राजन् ! अप एव जलमेवाहमधीये । इति श्रुत्वा राजा होवाच । एष वै रयिः । वेगवत्त्वाद्रयीर्वेगवानित्यर्थः । रयोहिवेगः । इकारान्तत्वं छान्दसम् । रयिरूपधनप्राप्तिहेतुत्वाद् वा रयिः । रयिनामको वैश्वानरो वैश्वानरस्यायं वैश्वानरः । आत्मा अंश समानः शक्ति स्वरूपो वा वर्तते । यं त्वमात्मानमुपास्से । नेदं ब्रह्मास्ति यदिदं त्वमुपास्से । तथापि तस्मा देवकारणात्त्वं रयिमान् धनवान् पुष्टिमानसि उपचयवानसीत्यर्थः ॥ १ ॥

अनुवाद-अनन्तर उस प्रसिद्ध राजाने आश्वतराश्वि बुडिलनामक विद्वान् से जिज्ञासा की कि हे वैयाघ्रपद्य ! आप किं लक्षण विशिष्ट ब्रह्म की उपासना करते हैं । यद्वा

---

* अथ होवाच सत्ययज्ञं पौलुषिम् । प्राचीनयोग्य ! कं त्वं वैश्वानरं वेत्थेत्यप एव राजन्निति होवाचोमिति होवाचैष वै रयिर्वैश्वानर एतꣳ हि वै त्वꣳ रयिं वैश्वानरं वेत्थ तस्मात्त्वꣳ रयिमान्पुष्टिमानसि यो वा एतꣳ रयिं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति वस्तिस्त्वाऽएष वैश्वानरस्य वस्तिस्त्वाहास्यद्यदि ह नागमिष्य इति वस्तिस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा ॥ शत० १० । ६ । १ । ५ ॥

अर्थ-तदन्तर राजा सत्ययज्ञ पौलुषि से पूछते हैं कि आप किसको वैश्वानर समझते हैं ? सत्ययज्ञ-हे राजन् ! जल को ही । राजा-ओम् अर्थात् ठीक है परन्तु यह रयि नामक वैश्वानर है जिस हेतु आप इस रयि नाम वैश्वानर को जानते हैं इस हेतु आप रयिमान्=धनवान् और पुष्टिमान् हैं । जो कोई इस रयि वैश्वानर को जानता है वह मृत्यु का जय करता है और सम्पूर्ण आयु को पाता है परन्तु वैश्वानर का यह वस्तिमात्र है आप की वस्ति गिर पड़ती यदि आप नहीं आते । यद्वा । आप को वैश्वानर की वस्ति का ज्ञान नहीं होता यदि मेरे निकट नहीं आते ॥ ५ ॥

किस शक्ति स्वरूप का अध्ययन करते हैं। बुडिल ने उत्तर दिया कि हे भगवन् राजन्! जल का ही मैं अध्ययन करता हूं। (राजा क०) यह निश्चय वैश्वानर का रयि नामक एक अंश है जिस अंश का आप अध्ययन करते हैं। उसकारण आप रयिमान् और पुष्टिमान् हैं ॥ २ ॥

पदार्थः—(अथ) अनन्तर (आश्वतराश्विम्+बुडिलम्) आश्वतराश्वि बुडिल नामक विद्वान् से (ह+उवाच) वे प्रसिद्ध राजा बोले (वैयाघ्रपद्य) हे वैयाघ्रपद्य! (त्वम्) आप (कम्) किस लक्षणवाले (आत्मानम्) ब्रह्म की (उपास्से) उपासना करते हैं। यद्वा। किस शक्तिस्वरूप का अध्ययन करते हैं। राजासे पूछे जानेपर (ह+उवाच) ये बुडिल विद्वान् बोले (भगवः+राजन्) हे भगवन् राजन्! (अपः+एव) जलका ही मैं अध्ययन करता हूं (राजक०) (एषः+वै) यह निश्चय (रयिः) वेगवान् वा धनवान् (वैश्वानरः) वैश्वानर का (आत्मा) अंश समान है वा शक्ति सदृश है। (यम्+त्वम्०) जिस अंश का अध्ययन आप करते हैं किन्तु यह ब्रह्म नहीं है। यह तो विराट् जगत् का एक अंश मात्र है। परन्तु तथापि इसी हेतु (तस्मात्) उस कारण (त्वम्) आप (रयिमान्) धनवान् और (पुष्टिमान्) वृद्धिमान् हैं ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच। बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥ २ ॥**

अत्सि। अन्नम्। पश्यसि। प्रियम्। अत्ति। अन्नम्। पश्यति। प्रियम्। भवति। अस्य। ब्रह्मवर्चसम्। कुले। यः। एतम्। एवम्। आत्मानम्। वैश्वानरम्। उपास्ते। बस्तिः। तु। एषः। आत्मनः। इति। ह। उवाच। बस्तिः। ते। व्यभेत्स्यत्। यत्। माम्। न। आगमिष्यः। इति ॥ २ ॥

भाष्यम्—अत्सीति। तस्मात्त्वमन्नमत्सीत्यादि समानम्। बस्तिस्त्वेष आत्मन इति व्यापकस्य वैश्वानरस्य। एष रयिनामा अप्स्वरूपः। बस्तिर्जलसंग्रहस्थानम्। ते तव बस्तिर्जलसंग्रहस्थानम्। व्यभेत्स्यत् भिन्नोऽभविष्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति षोडशखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ १६ ॥

अनुवाद—इसी कारण आप भोग्य भोगते हैं प्रिय देखते हैं सो जो कोई वैश्वानर सम्बन्धी इसी अंश को उपासता है वह भी भोग्य भोगता हैं प्रिय देखता है इस के कुल में ब्रह्म तेज होता है परन्तु व्यापक वैश्वानर का यह बस्ति समान अंश है। इतना कह फिर राजा बोले कि यदि मेरे पास आप न आते तो आप की बस्ति भिन्न होजाती ॥२॥

पदार्थः—( अन्नमत्सि ) आप भोग्य भोगते हैं ( प्रियम्+पश्यसि ) प्रिय देखते हैं इत्यादि अर्थ पूर्व समान है । ( बस्तिः ) जल संग्रह स्थान अर्थात् व्यापक वैश्वानर का यह जल स्वरूप अंश जल संग्रह स्थानीय है ( ते+बस्तिः ) आप का जल संग्रह स्थान ( व्यभेत्स्यत् ) छिन्न भिन्न हो जाता ( यन्माम्० ) यदि मेरे निकट आप नहीं आते अथवा आप को यह अंश अविदित ही रहता ॥ २ ॥

इति षोडशखण्डस्य भाषाभाष्यं समाप्तम् ॥ १६ ॥

अथ सप्तदशः खण्डः

**अथ होवाचोद्दालक मारुणिं गौतम ! कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मान मुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च * ॥१॥**

अथ । ह । उवाच । उद्दालकम् । आरुणिम् । गौतम । कम् । त्वम् । आत्मानम् । उपास्से । इति । पृथिवीम् । एव । भगवः । राजन् । इति । ह । उवाच । एषः । वै । प्रतिष्ठा । आत्मा । वैश्वानरः । यम् । त्वम् । आत्मानम् । उपास्से । तस्मात् । त्वम् । प्रतिष्ठितः । असि । प्रजया । च । पशुभिः । च ॥ १ ॥

* स होवाचारुणमौपवेशिम् । गौतम ! कं त्वं वैश्वानरं वेत्थेति पृथिवीमेव राजन्निति होवाचोमिति होवाचैष वै प्रतिष्ठा वैश्वानर एतꣳहि वै त्वं प्रतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वं प्रतिष्ठितः प्रजया पशुभिरसि यो वा एतं प्रतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति पादौ त्वाऽएतौ वैश्वानरस्य पादौ तेऽम्लास्यतां यदि ह नागमिष्य इति पादौ तेऽविदितावभविष्यतां यदि ह नागमिष्य इति वा ॥४॥ शत० १० । ६ । १ ॥

अर्थ—वह राजा औपवेश अरुण से पूछता है कि हे गौतमवंशोत्पन्न ! आप किस को वैश्वानर जानते हैं ? अरुण—हे राजन् पृथिवी को ही । राजा—हां ठीक है परन्तु यह प्रतिष्ठा वैश्वानर है इस प्रतिष्ठा वैश्वानर को जिस हेतु आप जानते हैं इस हेतु आप प्रजा और पशु से प्रतिष्ठित हैं । जो कोई इसको प्रतिष्ठा वैश्वानर जानता है वह मृत्यु का जय करता है और सर्व आयु को पाता है परन्तु वैश्वानर का यह पाद समान है आप के पाद मलीन होजाते यदि मेरे निकट नहीं आते । यद्वा आप को पाद विदित नहीं होते यदि मेरे निकट नहीं आते ॥ ४ ॥

भाष्यम्—अथेति । अथानन्तरमारुणिमरुणेरपत्यमुद्दालकम् । अश्वपतिर्होवाच । गौतम ! त्वं कमात्मानमुपास्से । "गां पृथिवीं ताम्यति काङ्क्षति कामयते यः स गोतमः । तस्याऽपत्यं गौतमः । तव पूर्वेऽपि पृथिव्याः सभाजयितार आसन् । त्वमपि कदाचित् तादृगेव भवसीति सम्बोधनेन ध्वन्यते" । त्वम् । कमात्मानम् । कां शक्तिम् । उपास्से । उपसमीपं गत्वा तदन्तः प्रविश्येव सम्यगधीषे । इति प्रश्नसमाप्त्यर्थः । राज्ञा पृष्टो गौतमो होवाच । हे भगवो भगवन् राजन् ! पृथिवीमेवाहमुपासे इति । पृथिवीमेव अधीये । हे गौतम ! एष वै प्रतिष्ठा पादावेव वैश्वानरस्य । नेदंब्रह्मास्ति यदिदं त्वमुपास्से । अन्यत् सर्वं सुगमम् ॥ १ ॥

अनुवाद—अनन्तर ( उस अश्वपति राजा ने ) आरुणि उद्दालक से जिज्ञासा की । हे गौतम ! आप किस शक्ति वा स्वरूप का अध्ययन करते हैं ? ( गौतम ) हे भगवन् राजन् ! पृथिवी का ही ( मैं अध्ययन करता हूं ) ( अश्वपति ) यह निश्चय वैश्वानर की प्रतिष्ठा=पाद स्वरूप है । जिस स्वरूप का आप अध्ययन करते हैं । उस कारण आप प्रजा और पशुओं से प्रतिष्ठित हैं ॥ १ ॥

पदार्थः-( अथ ) अनन्तर ( ह ) प्रसिद्ध उस राजा ने ( आरुणिम् ) अरुणपुत्र ( उद्दालकम् ) उद्दालक से ( उवाच ) जिज्ञासा की ( गौतम ) हे गौतमवंशीय ! ( त्वम् ) आप ( कम्+आत्मानम् ) किस स्वरूप को ( उपास्से ) अच्छे प्रकार प्रीति पूर्वक अध्ययन करते । वा किस विषय में भावना मनन आदि क्रिया करते हैं ( इति ) ( गौतम कहते हैं ) ( भगवः+राजन् ) हे ऐश्वर्य सम्पन्न वा पूजावान् राजन् ! (पृथिवीम्+एव) पृथिवी को ही उपासता हूं अर्थात् पृथिवी के विषय में ही आजकल मनन श्रवणादि क्रिया को करता हूं ( इति ) राजा कहते हैं ( एषः ) यह ( वै ) निश्चय ( वैश्वानरः ) वैश्वानर सम्बन्धी ( प्रतिष्ठा ) पाद ( आत्मा ) स्वरूप है ( यम्+त्वम्+आत्मानम्+उपास्से) आप जिस स्वरूप को उपासते हैं किन्तु यह ब्रह्म नहीं । तथापि ( तस्मात् ) उस कारण से ही ( प्रजया+च ) प्रजाओं से ( पशुभिः+च ) और पशुओं से ( त्वम्+प्रतिष्ठितः+असि ) आप प्रतिष्ठित हैं ॥ १ ॥

भाष्याशयः—गौतम—( गां पृथिवीं ताम्यति ) जो पृथिवी की आकांक्षा करे उसे "गोतम" कहते हैं । पृथिवीस्थ पदार्थों वा गुणों को जानने की इच्छावाला पुरुष गोतम अर्थात् पृथिवी में ईश्वरीय विलक्षणता क्या क्या है । ईश्वरीय गुण क्या २ पाये जाते हैं इत्यादि विषय के अध्ययन में रत जो पुरुष उसे गोतम कहते हैं । और गौतम वंशीय को गौतम कहते हैं । गौतम सम्बोधन से राजा का अभिप्राय यह है कि

आपके पूर्वज भी पृथिवीस्थ गुणग्राही तद्गुण पाठी थे। प्रायः आपभी वैसे ही कदाचित् होवेंगे। आत्मा—यहां स्वरूप वाचक वा आकाशवाचक वा शक्तिवाचक आत्मा शब्द जानना। उपास—उप+आस समीप में जाकर मानो उस पदार्थ के भीतर प्रवेशकर उसके गुणों के अध्ययन करने वा तत्त्वतः जानने का नाम यहां उपासना है। यहां गौण अर्थ में प्रयुक्त हुआ है। यों भी उपासना शब्द का अर्थ समीप बैठना है पृथिवी आदि के समीप में बैठने से क्या तात्पर्य हो सकता है। कि तत्स्थ पदार्थ में ईश्वरीय विलक्षणता का अवलोन और तत्स्थ गुणों को वस्तु गत्या जानना समझना आदि॥ १॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौत्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ २ ॥**

अत्सि। अन्नम्। पश्यसि। प्रियम्। अत्ति। अन्नम्। पश्यति। प्रियम्। भवति। अस्य। ब्रह्मवर्चसम्। कुले। यः। एतम्। एवम्। आत्मानम्। वैश्वानरम्। उपास्ते। पादौ। तु। एतम्। आत्मनः। इति। ह। उवाच। पादौ। ते। व्यम्लास्येताम्। यत्। माम्। न। आगामिष्यः। इति॥ २॥

भाष्यम्—अत्सीति। तस्मात्त्वमन्नमत्सि। भुङ्क्षे। प्रियं पश्यसि। य एतमेवात्मानं वैश्वानरमुपास्ते सोप्यन्नमत्ति। प्रियं पश्यति। अस्य कुले ब्रह्मवर्चसं भवति। ब्रह्मणोवर्चस्तेजः। "ब्रह्म हस्तिभ्यां वर्चस इत्यच्" आत्मनः। वैश्वानरस्यात्मनः। एतौ पादौ एव पृथिवी वर्तत इति। ते पादौ व्यम्लास्येताम्। विम्लानावभविष्यताम्। शिथिलीभूतावभविष्यताम् यन्मांनागमिष्यः। इति॥ २॥ इति सप्तदशखण्डस्य संस्कृतभाष्यं समाप्तम्॥ १७॥

अनुवाद—आप भोग्य भोगते हैं प्रिय देखते हैं। जो कोई इसी वैश्वानरीय स्वरूप को उपासता है वह भी भोग्य भोगता है प्रिय देखता है। इसके कुल में ब्रह्म तेज होता है किन्तु वैश्वानर स्वरूप का यह पाद ही है। आप के पाद शिथिल हो जाते यदि आप मेरे पास नहीं आते॥ २॥

पदार्थः—( अन्नम् ) भोग्य वस्तु को ( अत्सि ) आप खाते हैं भोगते हैं (प्रियम्+पश्यसि ) प्रिय देखते हैं ( यः ) जो ( एतम्+एव ) इसी ( वैश्वानरम् ) वैश्वानर स-

म्बन्धी ( आत्मानम् ) स्वरूप को ( उपास्ते ) अच्छे प्रकार अभ्यास वा अध्ययनादि करता है वह भी ( अत्ति+अन्नम् ) भोग्य भोगता है ( प्रियम्+पश्यति ) प्रिय देखता है ( तु ) परन्तु ( आत्मनः ) वैश्वानरीयस्वरूप का ( एतौ+पादौ ) ये पाद समान है अर्थात् पृथिवी पादस्थानीय है ( इति+ह+उवाच ) इस प्रकार राजा उन्हें उपदेश देकर पुनरपि बोले कि ( ते ) आप के (पादौ) चरण ( व्यम्लास्येताम् ) शिथिल हो जाते (यत्) यदि ( माम् ) मेरे निकट ( न+आगमिष्यः ) आप नहीं आये हुए रहते ( इति ) ॥२॥

इति सप्तदश खण्डस्य भाषाभाष्यं समाप्तम् ॥ १७ ॥

अथाष्टादशः खण्डः

**तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ। यस्त्वेतमेवं प्रादेशमात्र-मभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति * ॥ १ ॥**

तान्। ह । उवाच । एते । वै। खलु । यूयम् । पृथक्। इव । इमम् । आत्मानम् । वैश्वानरम् । विद्वांसः । अन्नम् । अत्थ । यः । तु । एतम् । एवम् । प्रादेशमात्रम् । अभिविमानम् । आत्मानम् । वैश्वानरम् । उपास्ते । सः । सर्वेषु। लोकेषु। सर्वेषु। भूतेषु। सर्वेषु । आत्मसु । अन्नम् । अत्ति ॥ १ ॥

भाष्यम्—तानिति । इदानीम् । तान् सर्वान् ह प्रसिद्धान् ज्ञानिनः प्रति सार्धमेवाहूयोवाच । एते यूयम् । इममात्मानं वैश्वानरं पृथगिव । उपाध्वे। वैश्वानरस्यैकैकमंशमेव यूयं जानीथ । न पूर्णकलमित्यर्थः वैश्वानरः=विश्वान् सर्वान् नरान् जीवान् पापपुण्यरूपां गतिं नयति यः स वैश्वानरः । विश्वेच सर्वेच ते नरा इति विश्वनराः तान् प्राप्नोति व्याप्नोतीति वैश्वानरः। यद्वा। विश्वं सर्वमानयति व्यक्तावस्थां प्रापयतीति विश्वानरः । स एव वैश्वानरः । ईश्वर नामधेयमेतत् । सर्वमाप्नोतीत्यात्मा । सर्वव्यापकः । इह आत्मानमितिपदं विशेषणम् । वैश्वानर इति विशेष्यं विपरीतञ्च भवितु मर्हति । सर्वव्यापको वैश्वानर इत्यर्थः। यः खलु सर्व व्यापकः स कथमेकस्मिन्नेव स्थाने उपास्येत । वा

* तान् होवाच। एते वै यूयं पृथग्वैश्वानरान् विद्वांसः पृथगन्नमघस्त प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नास्तथा तु व एनान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति ॥ १० ॥ शत० १० । ६ । १ ॥

विकृतिं प्राप्त पदार्थः । नामधेयम् । नामैवकेवलम् । नाममात्रं नहि वस्त्वन्तरम् । अयं भावः विकारस्य नामैव भिन्नं २ भवति । यथार्थतः स्वकीयायाः प्रकृतेः अभिन्न एव स विकारः । नहि प्रकृति विकारयोः परमार्थतः कोपि भेदोस्तीत्यर्थः । कथंभूतं नामधेयं वाचारम्भणम् । वाचानां वाणीनां शब्दानामारम्भणमारम्भकं विस्तारकम् । नूतन नूतनशब्दानामेवारम्भणं जनकम् । वाचामेववृद्धिर्भवति । नहि पदार्थस्येत्यर्थः । यद्वा विकारार्थे मयट् विधानेन कोऽसौ विकार इत्याकाङ्क्षायां लक्षयन्नाह । वाचारम्भणं विकारो नामधेयमिति । वाचानां वाणीनामारम्भणं आलम्भनं प्रवर्द्धनं विस्तारो विकारो नामधेयम् । विकारो नाम । प्रकृत व्याख्याने उदाहरणमाह—मृत्तिकेत्येव सत्यम् । मृदेवमृत्तिका—मृत्तिकाभ्यो विरचिता घटशरावादिभ्यो ये ये विकारा लोके दृश्यन्ते । सा सर्वा मृत्तिका एव एकं सत्यं सद्रूपं वस्तु । अन्यत् सर्वं नामैवकेवलम् । अयं घटः । इयं भित्तिः । इयमिष्टिका । इयं हण्डिका । एष दीपः । असौ कपालः । इत्यादीनि बहूनि मृत्तिकाजातानि वस्तूनि दृश्यन्ते । तत्र २ प्रथमं का विशेषता वर्त्तते ? एकैवमृत्तिका अधुना बहुनाम्नी संवृता सैवमृत्तिका क्वचिद् घट उच्यते । क्वचिदिष्टिका कथ्यते । तेन शब्दानामेव वृद्धिर्भवति । मृण्मयम्—मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः ४ । ३ । १४३ ॥ विकारे मयट् । वाचारम्भणम् । वष्टि भागुरिरल्लोप इत्यनेन नियमेन आवन्तो वाचा शब्दो ग्राह्यः आरम्भगतीति आरम्भणम् । कृत्यल्युटोवहुलम् ३ । ३ । ११३ ॥ ल्युटिकृते । रभेरशब्लिटोः ७ । १ । ६३ ॥ नुम् । वाचावाणीरेव आरम्भयति उत्पादयति विस्तारयति । नहि प्रकृतेर्भिन्नं किमपिवस्तु । नामधेयम् । स्वार्थे धेयट् । मृत्तिका—मृदस्तिकन् ५ । ४ । ३९॥ इतितिकन् ॥ ३ ॥

अनुवाद—हे सोम्य ! ( प्रियपुत्र ) जैसे एक मृत्पिण्ड के ज्ञान से सबही मृत्तिका से बना हुआ पदार्थ विज्ञात हो जाता है क्योंकि विकार (घट आदि) वाणी का विस्तार करने वाला केवल नाममात्र का है । मृत्तिका ही एक सत्य है । यद्वा वाणीका आरम्भण ( वर्द्धन=वृद्धि ) ही विकार नामक वस्तु है । मृत्तिका ही सत्य है ॥ ३ ॥

पदार्थः—( सोम्य ) हे चन्द्रवत् प्रियपुत्र श्वेतकेतो !( यथा) जैसे ( एकेन ) एक ( मृत्पिण्डेन ) मृत्पिण्ड से=मिट्टी से ( सर्वम् ) सब ( मृन्मयम् ) मृत्तिका के घट शरावादि विकार ( विज्ञातम् ) विदित ( स्यात् ) हो जाता है क्योंकि ( वाचाऽऽरम्भणम् ) वचनों का आरम्भण वर्धन=विस्तार ( विकारः ) विकार ( नामधेयम् ) नामवाला वस्तु है परन्तु ( मृत्तिका+इति+एव ) केवल मृतिका ही ( सत्यम् ) सत्य है यद्वा ( विकारः+नामधेयम् ) विकार वस्तु केवल नाम मात्र है । नाम ही केवल उसका पृथक् है ।

वस्तुभिन्न नहीं । नाम कैसा है सो कहते हैं ( वाचारम्भणम् ) वचनों शब्दों अर्थात् नवीन२ शब्दों का आरम्भक जनक उत्पन्न करनेवाला है यथा मिट्टी एक वस्तु है उससे जितने पदार्थ बनते हैं उन के नाम भिन्न २ होते जाते हैं जैसे घड़ा, सकोरा, मृतवान इत्यादि ॥ ३ ॥

भाष्याशयः—जब पुत्र ने पूछा कि वह आदेश कौन है तब पिता ने अनेक दृष्टान्तों से उस विषय को समझाने के लिये आरम्भ किया । वाचारम्भणम्—संसार में एक वस्तु से अनेक वस्तु बनजाती हैं यह प्रत्यक्ष विषय है और जितनी वस्तु बनती जाती है उन के नाम भी पृथक् २ होते जाते हैं जैसे एक सुवर्ण से नाना भूषण बनने पर नाना नामधारी बन जाता है परन्तु यथार्थ में वह सुवर्ण ही है इस से यह सिद्ध हुआ कि बचन के बढ़ाने वाला ही विकार होता है यथार्थ में वह विकार अपने कारण से भिन्न नहीं इसी अभिप्रय से वाचारम्भण पद मूल में कहा गया है ॥ ३ ॥

**यथा सोम्यैकेन लोहमणिना सर्व्वं लोहमयं विज्ञातꣳस्याद्वाचाऽऽरम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥ ४ ॥**

यथा । सोम्य । एकेन । लोहमणिना । सर्व्वम् । लोहमयम् । विज्ञातम् । स्यात् । वाचारम्भणम् । विकारः । नामधेयम् । लोहम् । इति । एव । सत्यम् ॥ ४ ॥

भाष्यम्—यथेति । अन्यन्निदर्शनं श्वेतकेतुपिता व्याचष्टे । हे सोम्य ! यथैकेन लोहमणिना सुवर्णपिण्डेन विज्ञातेन सता । सर्व्वमखिलम् । लोहमयम् । सुवर्णजातं वस्तुविज्ञातं सुविदितं स्यात् । एकसुवर्ण सुपरिचयेन सुवर्ण जाताः कटक मुकुट केयूर बलयादयोपि । इदं सुवर्णस्यकटकम् । इदं सुवर्णस्य मुकुटमित्येवं विज्ञायेरन् । यतो वाचारम्भणं विकारो नामधेयम् । यतो वाणीनामारम्भणमालम्बनं वर्धनमेव विकारोनाम निगद्यते । शब्दानामेव वर्धको विकार उच्यते न ह्यस्माद्भिन्नः कोऽपि विकारो नाम स्वकारणात् । तत्र तत्र कटकादौ परमार्थतो लोहमित्येव सत्यम् । अन्यन्नाममात्रमेव न तथ्यम् । भिन्नेषु नामधेयेषु सत्स्वपि सर्वसुवर्णविरचितं कटकादि सुवर्णमेव परमार्थतः ॥ ४ ॥

अनुवाद—हे सोम्य ! जैसे एक सुवर्ण के पिण्ड के विज्ञान से सुवर्ण से बना हुआ सब पदार्थ विज्ञात हो जावे ( क्योंकि ) वचन का आश्रय ( वर्धन ) विकार नाम वस्तु है सुवर्ण ही सत्य है यद्वा वचन का बढ़ानेवाला विकार एक नाम मात्र है ( कोई भिन्न वस्तु नहीं) ॥ ४ ॥

पदार्थः-( सोम्य ) हे प्रिय पुत्र ! ( यथा ) जैसे ( एकेन ) एक ( लोहमणिना ) सुवर्ण स्वरूप के ज्ञान से ( सर्वम्+लोहमयम् ) सब सुवर्ण विकार ( विज्ञातम्+स्यात ) विदित हो जाता है क्योंकि ( विकारः ) विकारस्वरूप वस्तु ( नामधेयम् ) केवल नाममात्र है और (वाचाऽऽरम्भणम्) वचन अर्थात् शब्दों का उत्पादक ही है ( लोहम्+इति+एव+सत्यम् ) उन २ सुवर्ण विकारों में सुवर्ण ही एक सत्य वस्तु है ॥ ४ ॥

**यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवꣳ सोम्य ! स आदेशो भवतीति ॥ ५ ॥**

यथा । सोम्य । एकेन । नखनिकृन्तनेन । सर्वम् । कार्ष्णायसम् । विज्ञातम् । स्यात् । वाचाऽऽरम्भणम् । विकारः । नामधेयम् । कृष्णायसम् । इति । एव । सत्यम् । एवम् । सोम्य । सः । आदेशः । भवति । इति ॥ ५ ॥

भाष्यम्—दृष्टान्तरमाह । सोम्य हे प्रियपुत्र ! एकेन नखनिकृन्तनेन । नखानां निकृन्तनं छेदनं नखनिकृन्तनम् । निकृत्यते छिद्यते यत् तत् कृन्तनम् । नखानां यो हि भागः कृत्यते तत् निकृन्तनमिहोच्यते । कृती छेदने करणे ल्युट् । नखानां स एव भागो निकृत्यते यः कृष्णो भवति अथच निर्जीवः स्यात् । अतो नखनिकृन्तनेन पदेन उपलक्षणयात्र कृष्णायसपिण्डं गृह्यते । इत्थञ्च । एकेन । कटाहदर्वीप्रभृतीनां कार्य्याणां कारणेन कृष्णायसपिण्डेन विज्ञातेन सता । कार्ष्णायसम् । कृष्णायसविकारजातं कटाहाद्यं सर्वं वस्तुजातम् । विज्ञातं भवति । यतो वाचारम्भणम् । वाचानां वाणीनामारम्भणम् आलम्बनं प्रवृद्धिरेव विकारो नामधेयम् । विकारपदवाच्यं स्यात् । तत्र २ कृष्णायस जातेषु पदार्थेषु कृष्णायसमित्येव सत्यम् । हे सोम्य ! एवमेव । स पूर्वोक्त आदेशो भवति । तमादेशं कदाचित्त्वमाचार्य्यमप्राक्षीर्नवेत्ति मम जिज्ञासा । तत्र यदि स आदेशो विदितः स्यात्तर्हि ईदृग्महामना अनूचानमानी स्तब्धो न स्याः । अनेकदृष्टान्तोपादानं दार्ष्टान्तिकानेकभेदानुगमार्थं । दृढ़प्रतीत्यर्थञ्च ॥ ५ ॥

अनुवाद—हे सोम्य ! जैसे एक कृष्ण लोह के पिण्ड के विज्ञान से कृष्णलोह से बनी हुई सब वस्तु विदित होजाती है । क्योंकि वाणी का आलम्बनमात्र विकार नाम वस्तु है । यद्वा वचनों का बढ़ाने वाला विकार एक नाममात्र है लोह ऐसाही सत्य है । हे सोम्य ! ऐसे वह आदेश होता है ॥ ५ ॥

पदार्थः-( सोम्य ) हे चन्द्रवत् प्रियपुत्र! ( यथा ) जैसे ( एकेन ) एक ( नखनिकृन्तनेन ) कृष्णलोहपिण्ड विदित होने से ( कार्ष्णायसम् ) कृष्ण लोह के विकारों से बनी हुई ( सर्वम् ) सब वस्तु ( विज्ञातम् ) विदित ( स्यात् ) हो जाती है। क्योंकि ( वाचारम्भणम् ) बचनों का आश्रय ( विकारः+नामधेयम् ) विकार कहा जाता है ( कृष्णायसम् ) कृष्णलोह ( इति+एव ) ही ( सत्यम्) सत्य है। इतना कह कर फिर वह बोले कि ( सोम्य ) हे सोम्य !( एवम् ) ऐसे ( सः) वह ( आदेशः ) आदेश उपदेश अनुमान ( भवति+इति ) होता है ( इति ) ॥ ५ ॥

**न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति । भगवाꣳस्त्वेव मे तद्ब्रवीत्विति । तथा सोम्येति होवाच ॥ ६ ॥**

न । वै । नूनम् । भगवन्तः । ते । एतद् । अवेदिषुः । यत् । हि । एतद् । अवेदिष्यन् । कथम् । मे । न। अवक्ष्यन् । इति । भगवान् । तु । एव। मे । तद् । ब्रवीतु । इति । तथा । सोम्य । इति । ह । उवाच ॥ ६॥

भाष्यम्-न वा इति । एवं कथितवति तूष्णिंभूते च पितरि श्वेतकेतुरुवाच । ते प्रसिद्धाः । भगवन्तः । पूजावन्तः । पूजनीयाः । ममाचार्य्याः । एतद् । भवदुक्तं वस्तु । नावेदिषुः । नाज्ञासिषुः । न विदितवन्तः । वै नूनम् । इति निश्चितमेवास्ति । कथं त्वं जानासि ना वेदिषुस्त इत्याह । हि । यतः । यद् । यदि । एतद्भवदुक्तमनुशासनमवेदिष्यन् । विदितवन्तस्तर्हि कथम् । मे मह्यम् । गुणवते शुश्रूषवे भक्ताय नावक्ष्यन् नोक्तवन्तः। यतो मह्यं नोक्तवन्तोऽतोऽनुमीयते एतदनुशासनं नावेदिषुः। तर्हि किं कर्त्तव्यम्। पुनरपि कुत्रचिद् आचार्योऽन्यः कर्तव्यः तदर्थं पुनरपि ब्रह्मचर्यं सेवनीयमिति पितुराशयं विदित्वा पुनरपि आचार्य्यकुलगमनभयात् श्वेतकेतुर्ब्रवीति । तु किन्तु । परंत्विदानीम्। एतद्वस्तु । भगवान् एवं मे ब्रवीतु । अस्मिन्विषये भगवानेव ममाचार्य्यो भवतु । इति पुत्रेण विज्ञप्तः पिता तथास्त्विति वक्ष्यमाणं होवाच ॥ ६ ॥

इति प्रथमखण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद—परम पूजनीय वे ( मेरे आचार्य्य ) इस को नहीं जानते थे यह निश्चय ही है क्योंकि यदि इसको जानते रहते तो मुझको क्यों नहीं कहते। परन्तु अब आपही मुझ से इस का व्याख्यान कहें । हे सोम्य! एवमस्तु ( मैं ही उसका उपदेश करूंगा ) इतना कह श्वेतकेतु के पिता बोले ॥ ६ ॥

पदार्थ—श्वेतकेतु के पिता जब इतना कह चुप हो गये तब वे श्वेतकेतु बोले ( ते ) वे ( भगवन्तः ) पूजनीय मेरे आचार्य्य ( नूनम् ) निश्चय ( एतद् ) आप से उपदिष्ट इस अनुशासन को (न+वै+अवेदिपुः) नहीं जानते थे (हि) क्योंकि ( यत् ) यदि ( एतद् ) इस अनुशासन को ( अवेदिष्यन् ) जानते होते तो ( मे ) मुझ से ( कथम् ) क्यों ( न+अवक्ष्यन् ) नहीं कहते ( तु ) परन्तु अब ( भगवान्+ए ) पूजनीय आप ही ( एतत् ) इस उपदेश को ( ब्रवीतु ) कहें ( इति ) पुत्र के वचन सुन आरुणि बोले कि ( सोम्य ) हे सोम्य ! ( तथा ) तथास्तु ( इति+ह+उवाच ) इतना कह वक्ष्यमाण प्रकार से उपदेश देने लगे ॥ ६ ॥

इति प्रथमखण्डस्य भाषाभाष्यं समाप्तम् ॥ १ ॥

## अथ द्वितीयः खण्डः

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेत ॥ १ ॥**

सद् । एव । सोम्य । इदम् । अग्रे । आसीत् । एकम् । एव । अद्वितीयम् । तद् । ह । एके । आहुः । असद् । एव । इदम् । अग्रे । आसीत् । एकम् । एव । अद्वितीयम् । तस्माद् । असतः । सत् । जायेत ॥ १ ॥

भाष्यम्—सदिति । हे सोम्य सौम्य ! अग्रे प्राक् सृष्टेः । इदं एकरूपेण सर्वत्र सर्वेषु कालेषु भासमानम् । सदेव ब्रह्मैव आसीदविद्यत । सदिति ब्रह्मनामधेयम् । सद् विशिनष्टि । कीदृशंसद् । एकमेव । असहायकमेव । पुनःकीदृशम् । अद्वितीयम् । स्वजातीय–विजातीय–स्वगत–भेदशून्यम् । स्वाभिमतं सिद्धान्तमुक्त्वा सिद्धान्तान्तरं प्रत्याचिख्यासिषुः पूर्वं तन्मतमुपन्यस्यति । तत्तत्र । सृष्टिविषये । ह प्रसिद्धा एके अन्ये नास्तिका आहुर्ब्रुवन्ति । किं ब्रुवन्तीत्याकांक्षायामाह–अग्रे प्राक् सृष्टेः । इदं सम्प्रति व्याकृतनामरूपं दृश्यमानं जगत् । असदेव आसीत् । न विद्यते सद् ब्रह्म यस्मिन् तदसद् । कारण ब्रह्मशून्यम् । ब्रह्मरहितमव्यक्तं किमप्यासीत् । यदा सच्छब्देन भावः प्रतीयते । न सन् । असन् । अभावः । प्राक् सृष्टेरभाव एवासीत् । न किञ्चनासीदित्यर्थः । असद्विशिनष्टि । एकमेवाद्वितीयम् । इदं विशेषणं दृढीकरणार्थम् । असदेवैकमासीद् । न द्वितीयं न तृतीयं न चतुर्थम् । इत्येवं जातीयं किमप्यनासीत् । तर्हि

कथमियं सृष्टिरित्याह । तस्मादसतः सज्जायेत । तस्माद् ब्रह्मशून्यादव्यक्तात् सद्व्यक्तं नामरूपवदिदं जगज्जायते इति संभाव्यते ॥ १ ॥

अनुवाद—हे सोम्य ! ( सृष्टि के ) पूर्व एकही अद्वितीय यह सद् (ब्रह्म ) ही था। इस विषय में कोई कहते हैं कि आगे एक ही अद्वितीय असत् ही था उसी असत् से सत् उत्पन्न होता है ॥ १ ॥

पदार्थः–( सोम्य ) हे प्रियपुत्र श्वेतकेतो ! (अग्रे) आगे सृष्टि के पूर्व ( इदम् ) यह अर्थात् त्रिकाल में एकरूप सर्वत्र भासमान ( सद्+एव ) ब्रह्म ही ( आसीद् ) था। सत् नाम यहां ब्रह्म का है । आगे सत् के विशेषण कहते हैं । वह सत् कैसा है ? (एकम्+एव) असहाय न कोई दूसरा उसे सहायता देने वाला। पुनः वह सत् कैसा है ? ( अद्वितीयम् ) स्वजातीय विजातीय और स्वगत भेद शून्य । इतने से अपने स्वाभिमत सिद्धान्त को वर्णन कर मतान्तर के प्रत्याख्यान=खण्डन करने की इच्छा से उस मत का प्रथम उपन्यास करते हैं ( तत् ) उस सृष्टि विषय में ( ह+एके ) कोई २ नास्तिक लोग ( आहुः ) कहते हैं कि ( अग्रे ) आगे सृष्टि के पूर्व ( असद्+एव ) कारण ब्रह्म रहित कोई अव्यक्त पदार्थ । यद्वा। अभाव ही ( आसीत् ) था । आगे असत् के विशेषण कहे जाते हैं ( एकम्+एव ) ( अद्वितीयम् ) इन दो विशेषणों से केवल अपने पक्ष को दृढ़ करते हैं । केवल एक असत् ही था दूसरी तीसरी आदि कोई वस्तु नहीं थी। तब सृष्टि कैसे हुई सो कहते हैं ( तस्माद् ) उस ( असतः ) असत् ( ब्रह्म रहित अव्यक्त से वा अभाव ) से ( सत् ) सत ( जायेत ) होसकता है ॥ १ ॥

**कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच–कथमसतः सज्जायेतेति। सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥**

कुतः । तु । खलु । सोम्य । एवम् । स्यात् । इति । ह । उवाच । कथम् । असतः । सत् । जायेत । इति । सत् । तु । एव । सोम्य । इदम् । अग्रे । आसीत् । एकम् । एव । अद्वितीयम् ॥ २ ॥

भाष्यम्—कुत इति । हे सोम्य ! कुतः कस्मात्तुखलु प्रमाणात् । एवं स्यात् । असतः सज्जायेतेत्येवं स्यात् । नहि तत्र किमपि प्रमाणं विद्यते । अतो न कदापि असतः सदुत्पत्तिर्भवितुमर्हति । पुनः स्वपक्षं द्रढ़यति । हे सोम्य ! तु किन्तु । अग्रे एकमेवाद्वितीयमिदं सदेव ब्रह्मैव आसीदितिहारुणिः पुत्रमुवाच ॥ २ ॥

अनुवाद-हे सौम्य! कहां से यह हो सकता है। असत् से सत् कैसे हो सकता है। हे सोम्य! किन्तु आगे एक ही अद्वितीय यह सद् (ब्रह्म) ही था। इस प्रकार आरुणि अपने पुत्र से बोले ॥ २ ॥

पदार्थः-(सोम्य) हे सौम्य! (तु) किन्तु (कुतः+खलु) कहां से (एवम्+स्यात्) ऐसा हो सकता है अर्थात् (कथम्) कैसे (असतः) असत् से (सत्+जायेत) सत् हो सकता है। असत् से सत् का होना सर्वथा असंभव है। पुनः अपने पक्ष का उपसंहार करते हैं (सोम्य) हे सोम्य! (तु) परन्तु (अग्रे) आगे (एकम्) एक ही (अद्वितीयम्) अद्वितीय (इदम्) यह प्रत्यक्षवद्भासमान (सद्+एव) ब्रह्म ही (आसीत्) था (इति+ह+उवाच) आरुणि यह बोले ॥ २ ॥

**तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत। तत्तेज ऐक्षत-बहु स्यां प्रजायेयेति। तदपोऽसृजत। तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥**

तद्। ऐक्षत। बहु। स्याम्। प्रजायेय। इति। तद्। तेजः। असृजत। तत्। तेजः। ऐक्षत। बहु। स्याम्। प्रजायेय। इति। तद्। अपः। असृजत। तस्मात्। यत्र। क्व। च। शोचति। स्वेदते। वा। पुरुषः। तेजसः। एव। तद्। अधि। आपः। जायन्ते ॥ ३ ॥

भाष्यम्—तदिति। तत् सत्तत्सच्छब्दवाच्यं ब्रह्म। ऐक्षत अपश्यत्। ईक्षणं चकार। ईक्षणंनाम ज्ञानपूर्वकं संकल्पः। यद्यपि न त्रिकालज्ञे ब्रह्मणि ईक्षणादिक्रिया संभवति तथापि एकरूपेण विद्यमाना एव ईक्षणादिव्यापाराः सृष्टादिव्यवहारदशायां प्रादुर्भूता इव लौकिकभाषया निगद्यन्ते यथा पृथिव्यामन्तर्हितान्येव बीजानि वर्षायां प्रजायन्ते तद्वत्। किमैक्षतेत्याह। बहु स्यामित्यादि। बहु स्यां स्यामिति लडर्थे लिङ्। अहं बहु अस्मि। भूमास्मीत्यर्थः। सर्वं कर्तुं समर्थमास्मि। वहति सम्पूर्णं जगदिदधारयतीति वहु। अस्मादेव भूमेति पदं सिद्ध्यति तदीश्वरस्य नामधेयं भवति "भूमानं भगवो विजिज्ञास" "इत्युपक्रम्य "यत्र नान्यत्पश्यति नान्यच्छृणोति। नान्यद्विजानाति स भूमा" (छा० ७। २४। १) इदमेव वाक्यमाश्रित्य भगवान् सूत्रकारः सूत्रयति "भूमासम्प्रसादादध्युपदेशादिति" ॥ वे० १। ३। ८ एतेन भूमेति ब्रह्मनामधेयं सिध्यति। बहु शब्दात् पृथ्वादिभ्य इमनिज्वा (५। १। १२५) अनेनेमनिचि कृते "बहोर्लोपो भूचबहो-

रिति" ( ६ । १ । १५८ ) भूरादेशेन भूमासिद्धयति । बहोर्निष्पन्नो भूमेति ब्रह्मवाचकस्तर्हि बहु इति तद्वाचकः कथन्नस्यात् । बहु इति गुणवाचि नामास्ति । प्रजायेय अन्तर्भावितण्यर्थः तस्मात् प्रजनयेयं जगदुत्पादयेयमित्यर्थः विज्ञानरूपं संकल्पं कृतवत् । यतोऽहं सर्वसमर्थोऽस्मि अतः जगदुत्पादयेयम् । अथसृष्टिक्रमः । ईक्षणानन्तरम् । तत्सत् । तेज असृजत । अजनयत् । ततः । तत्तेज ऐक्षत । अयं तेजःशब्दो ब्रह्मवचनः । तेजःकारणात्तेजो ब्रह्माभिधीयते "तेजोऽसि तेजोमयिधेहीति प्रमाणात् । यद्वा । तेजःशब्देन तद्वद्व्याख्येयम् । तथाहि । तेजस्तेजस्वि यतस्तद्ब्रह्म तेजस्वि अतस्तेजोऽसृजत । इदमपिबोध्यम् । तेजः पर्य्यायाः प्रायो ब्रह्मवाचिनो दृश्यन्ते । यथा अग्निः । सूर्यः । वैश्वानर इत्यादि । ईदृशेषु स्थलेषु गुणशब्देन गुणवतो ग्रहणम् । यथा श्वेतो धावति । अर्थात् श्वेतवान् अश्वोधावतीत्यर्थः । इत्येवमादि । पुनः प्रकाशस्वरूपं तत्सत् । ऐक्षत बहु स्यां प्रजायेय इति पूर्ववद् ज्ञानरूपं संकल्पं कृतवत् । ततः । तत् सच्छब्दवाच्यं ब्रह्म । अपो जलम् । असृजत अजनयत् । तस्मादितियस्मात्तेजसः कार्य्यभूता आपस्तस्माद्धेतोः । पुरुषः प्राणी । यत्र क्व च यस्मिन् देशे काले वा शोचति संतप्यते । वा अथवा । स्वेदते । प्रस्वेदते । तेजस एव तेजसः सकाशादेव । तदापस्तज्जलम् । अधिजायन्ते । उत्पद्यन्ते । तदिति आर्षत्वाद् क्लीवत्वमेकवचनंच । यद्वा । तत्त्रेति व्याख्येयम् । यत्र शोचति स्वेदतेवा तत्र आप अधिजायन्त इत्यन्वयः । अध्यापो जायन्त इति लोकेव्यवहिता उपसर्गा न प्रयुज्यन्ते । किन्तु । छन्दांसि परेऽपि १ । ४ । ८१ ॥ व्यवहिताश्च १ । ४ ८२ ॥ इत्यनेन नियमेन अधिरार्षत्वाद् व्यवहितः प्रयुक्तः ॥ ३ ॥

अनुवाद—उस सत् (ब्रह्म) ने ज्ञानरूप संकल्प किया कि मैं सर्व समर्थ हूं अतः मैं जगत् को सृजन करूं ( ऐसा सङ्कल्प कर ) उसने तेज का सृजन किया । पुनः उस तेजस्वी ( ब्रह्म ) ने ज्ञानरूप संकल्प किया कि मैं सर्व समर्थ हूं । अतः जगत् का सृजन करूं ( ऐसा संकल्प कर ) उसने जल का सृजन किया । उस कारण जिस किसी स्थान वा काल में प्राणी संतप्त वा स्वेदित होता है वहां तेज से ही जल उत्पन्न होता है ॥ ३ ॥

पदार्थः-( तत् ) वह सत् अर्थात् सत् शब्द वाच्य उस ब्रह्म ने ( ऐक्षत ) ज्ञानरूप संकल्प किया ( बहु ) भूमा सब से सब प्रकार महान् अर्थात् सर्व सामर्थी ( स्याम् ) मैं हूं अतः ( प्रजायेय ) मैं जगत् का सृजन करूं ( इति ) ऐसा संकल्प कर ( तत् ) उस सत् ने ( तेजः ) तेजको ( असृजत ) सिरजा ( इति ) ( तत्+ते-

जः ) उस तेजस्वी सत्=ब्रह्म ने ( ऐक्षत ) ज्ञानरूप संकल्प किया कि ( बहु+स्याम् ) मैं सर्व सामर्थी हूं इस कारण ( प्रजायेय ) मैं जगत् का सृजन करूं ( इति) यह संकल्प कर ( तत् ) उस सत्=ब्रह्म ने ( अपः ) जलका ( असृजत ) सृजन किया ( तस्मात् ) उस कारण ( पुरुषः ) प्राणी ( यत्र+क+च ) जिस किसी स्थान वा काल में ( शोचति ) आतप से संतप्त होता है ( वा ) अथवा ( स्वेदते ) पसीने से प्रस्वेदित होता है ( तत् ) वहां ( तेजसः+एव ) तेज से ही ( आपः ) जल ( अधि+जायन्ते ) उत्पन्न होता है * ॥ ३ ॥

## ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता

---

* प्रजायेय—मैं उत्पन्न होऊं ऐसा अर्थ लोगों ने किया है सो ठीक नहीं । क्योंकि यदि इसका अर्थ ऐसा ही हो तो " तत्तेजोऽसृजत " उसने तेजका सृजन किया । " तद् अपोऽसृजत" उसने जल का सृजन किया इत्यादिस्थलों में " तत्तेजोऽजायत" वह तेज हुआ "ता आपोऽजायन्त्र" वह जल हुआ ऐसा कहना उचित था परन्तु ऐसा नहीं कहा । इसहेतु " प्रजायेय " इस शब्द का अर्थ "मैं उत्पन्न करूं " ऐसा करना चाहिये । समीक्षा में इसका विस्तार देखना । तेजः—इस प्रकरण में तेज, अप, शब्द ईश्वरवाचक है क्योंकि वह ईश्वर तेज और अप=जल का कारण है इस हेतु कार्य कारण के अभेद विवक्षा से तेज और अप भी ब्रह्म कहलाता है । अथवा तेज और अप शब्द से तेजस्वी अप्वान का ग्रहण है अर्थात् गुण से गुणी का ग्रहण है संस्कृत में ऐसे प्रयोग बहुधा आते हैं जैसे " श्वेतो धावति " श्वेत दौड़ता है अर्थात् श्वेतवान् घोड़ा दौड़ता है इत्यादि अनुसन्धान करलेना ॥

बहु+स्याम्—इस पद का अर्थ कोई २ "मैं बहुत होजाऊं" ऐसा करते हैं परन्तु यह अर्थ ठीक नहीं । बहु शब्द यहां ब्रह्म का गुणवाचक नाम है । सर्व समर्थ इसका अर्थ है । ( बहतीति बहु ) जो सम्पूर्ण जगत् का धारण पोषण सृजन करे उसे "बहु" कहते हैं ( इसी बहु शब्द से भूमा शब्द बनता है जो ब्रह्मवाचक होता है छा० ७ । २४ । १ । देखो इस का नाम ही भूमा प्रकरण है । वेदव्यास भी कहते हैं " भूमा सम्प्रसादा दध्युपदेशाद् ॥ वे० । ३ । ८ " यहां सिद्ध किया गया है कि भूमानाम ब्रह्म का है यह भूमा शब्द बहु शब्द ही से सिद्ध होता है संस्कृतभाष्य में साधनिका दिखलाई गई है । अतः "बहु स्याम्" इस पद का अर्थ "मैं सब कुछ कर सकता हूं" यही अर्थ है और "मैं बहुत होऊं" यह अर्थ कदापि नहीं ।

**अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥ ४ ॥**

ताः । आपः । ऐक्षन्त । बह्व्यः । स्याम । प्रजायेमहि । इति । ताः । अन्नम् । असृजन्त । तस्मात् । यत्र । क्व । च । वर्षति । तत् । एव । भूयिष्ठम् । अन्नम् । भवति । अद्भ्यः । एव । तत् । अधि । अन्नाद्यम् । जायते ॥ ४ ॥

भाष्यम्—ता आप इति । अप्शब्दो नित्यं बहुवचनान्तः स्त्रीलिङ्गश्च । आप्नुवन्ति व्याप्नुवन्ति सर्वत्र यास्ता आपो ब्रह्म । यद्वा आपः अप्वान् जलस्रष्टेत्यर्थः । संस्कृते वाचकेषु लिङ्गादिव्यत्ययेन वाच्येषु न व्यत्ययशङ्काकर्त्तव्या अन्यथा दारकलत्रादिशब्दानामेवाप्रयोगः स्यात् । क्वचिदेक एवेश्वरो नपुंसकशब्देन यथा ब्रह्म अक्षरमित्यादि । क्वचित् पुंल्लिङ्ग शब्देन यथा परमात्मा ईश्वर इत्यादि । क्वचिदव्ययशब्देन ओमिति । क्वचित्स्त्रीजलवान् लिङ्गशब्देन आपो भूमिरित्यादि अभिधीयते । एतावता नैव दोषः समायाति संस्कृतभाषायाम् । यद्यद् वस्तु सृष्टम् । तत्रतत्र ईश्वरस्य तादृगेव वाचक शब्दोऽपि तत्त्वविद्भिर्ऋषिभिः प्रयुक्त इति वेदितव्यम् । तथाहि । पूर्वस्मिन्नुदाहरणे तेजसः सृष्टौ "तेज" इति ब्रह्मनामधेयं प्रयुक्तम् । अत्रहि अपां सृष्टौ "आप" इतीश्वरवाचकः प्रयुक्तः । अथ प्रवाकार्थः । बह्व्यः स्याम सर्वसमर्थाःस्मः । अहं सर्वसमर्थोऽस्मीत्यथ यतोऽहं सर्वं कर्तुं समर्थोऽस्मि । अतः प्रजायेमहि । प्रजनयेम । उत्पादयेमेति । ता आपः अप् शब्दवाच्यं तद्ब्रह्म । ऐक्षन्त ज्ञानरूपं संकल्पं कृतवत्य इत्यन्वयः । इत्थमीक्षित्वा । अन्नमसृजन्त । पृथिवी लक्षणमन्नमजनयन् । पार्थिवंह्यन्नम् । अन्नशब्देनात्र पृथिवी लक्ष्यते । तस्मादिति । यस्मादप्कार्यमन्नं विद्यते । तस्माद्धेतोः । यत्र क्व च यस्मिन् देशे वर्षति वृष्टिर्भवति । तत्तत्रैव । भूयिष्ठं बहुतरमन्नं भवति । अद्भ्यएव तदन्नाद्यम् । अन्नञ्च तदद्यञ्चेति । विशेषेण व्रीहियवाद्या उच्यन्ते । अधिजायते । अस्मिन् सृष्टिप्रकरणे त्रीन्वारानीक्षतेः प्रयोगात् । ज्ञानपूर्विकेयं विसृष्टिः । नाकास्मिकी । नचस्वतः प्रवृत्ता । न च केवलजड़प्रकृतिजन्या । नाभावजन्या । नास्यां सृष्टौ केप्यनियमाः । इत्येवमादयो भावा द्योत्यन्ते ॥ ४ ॥

इति द्वितीयखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ २ ॥

अनुवाद—उस सर्व सामग्री प्राप्त ब्रह्म ने संकल्प किया कि मैं सर्वसामर्थ्य युक्त हूं। मैं सृष्टि को उत्पन्न करूं, उसने अन्न ( पृथिवी ) को सिरजा । उस कारण जिस किसी ( देश ) में बरसता है । वहां ही वहुत अन्न होता है । जल से ही अन्न और खाद्य होते हैं ॥ ४ ॥

पदार्थ-( ताः ) उस ( आपः ) सर्व सामग्री प्राप्त ब्रह्म ने ( ऐक्षन्त ) ज्ञानरूप संकल्प किया कि (बह्वचः+स्याम) मैं सर्व सामर्थी हूं अतः (प्रजायेमहि+इति) मैं जगत् का सृजन करूं ऐसा ईक्षणकर ( ताः ) उस ब्रह्म ने ( अन्नम् *) पृथिवी को ( असृजन्त ) उत्पन्न किया ( तस्मात् ) इस हेतु (यत्र+क+च) जहां कहीं (वर्षति) वृष्टि होती (तद्+एव) वहां ही ( भूयिष्ठम्+अन्नम् ) बहुत अन्न (भवति) होता है (अद्भ्यः+एव) जल से ही ( तत्+अन्नाद्यम् ) वह अन्न और अद्य खाने के योग्य सब पदार्थ ( अधि+जायते ) उत्पन्न होता है ॥ ४ ॥

भाष्याशय-( आपः ) अप् शब्द नित्य बहुवचनान्त स्त्रीलिङ्ग है जो सर्वत्र व्याप्त हो उसे आप् कहते हैं अथवा सब सामग्री को जो प्राप्त करता है उसे "आप्" कहते हैं अथवा आप शब्दसे आप्तवान् अर्थ है। संस्कृत में वाचकों में लिङ्गादि व्यत्यय देख वाच्य में लिङ्गादि व्यत्यय की शङ्का करनी नहीं चाहिये। क्योंकि संस्कृत में दार कलत्रादि शब्द पुंल्लिङ्ग नपुंसकलिङ्ग होने पर भी स्त्रीवाचक है। कहीं एक ईश्वर नपुंसक शब्द से जैसे ब्रह्म, अक्षर इत्यादि, कहीं पुंल्लिङ्ग शब्द से यथा परमात्मा, ईश्वर इत्यादि, कहीं अव्यय शब्द से जैसे ओम् इत्यादि, कहीं स्त्रीलिङ्ग शब्द से जैसे आप भूमि पृथिवी आदि कहा जाता है और शब्द के अनुसार ही वचन होते हैं जैसे नित्य बहुवचनान्त दार शब्द है परन्तु एक व्यक्त्यर्थ में इसका प्रयोग होता है। संस्कृत में इससे कुछ क्षति नहीं होती। तत्त्ववित् ऋषियों ने तत्तद् पदार्थ के सृष्टि प्रकरण में ब्रह्म का वाचक शब्द भी वैसा ही प्रयोग किया है। जैसे तेज की सृष्टि प्रकरण में ब्रह्म का "तेज" नाम का प्रयोग किया था वैसा ही यहां "आप्" ( जल ) सृष्टि प्रकरण में ब्रह्मका "आप्" नाम का प्रयोग किया है॥ ४ ॥

इति द्वितीयखण्डस्य भाषाभाष्यं समाप्तम् ॥ २ ॥

## अथ तृतीयः खण्डः

## तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥

तेषाम् । खलु । एषाम् । भूतानाम् । त्रीणि । एव । बीजानि । भवन्ति । आण्डजम् । जीवजम् । उद्भिज्जम् । इति ॥

* अन्न शब्द का अर्थ लक्षणा से पृथिवी का ग्रहण है। क्योंकि पृथिवी से अन्न उत्पन्न होता है और जल इसका निमित्तकारण है।

भाष्यम्—तेषामिति । तेषां प्रसिद्धानाम् । एषां प्रत्यक्षवद्दृश्यमानानाम् । भूतानां भवन्ति जायन्त उत्पद्यन्त इति भूतानि प्राणिनः । तेषाम् । मनुष्यपशुपक्ष्यादीनां सर्वेषांप्राणिनाम् । त्रीण्येव बीजानि कारणानि भवन्ति । कानितानीत्युच्यंते । आण्डजम् । जीवजम् । उद्भिज्जम् । कोऽप्यण्डाज्जायते कोऽपि मातृगर्भे नव वा दश वा मासान् स्थित्वा तस्मान्निस्सरति । कोऽपि पृथिव्याः सकाशादुत्पद्यते । इत्थमिमानि त्रीणि कारणानि आपामराणां सर्वेषां प्रत्यक्षाणि सन्ति । अत्र श्रीशङ्कराचार्य्य आह । तेषां जीवाविष्टानां खल्वेषां पक्ष्यादि भूतानामेषामिति प्रत्यक्षनिर्देशान्नतु तेजः प्रभृतीनां तेषां त्रिवृत्करणस्य वक्ष्यमाणत्वादसति त्रिवृत्करणे प्रत्यक्षनिर्देशानुपपत्तिः । देवताशब्दप्रयोगाच्च तेजः प्रभृतिषु इमास्तिस्रो देवता इति । तस्मात्तेषां खल्वेषां भूतानां पशुपक्षिस्थावरादीनां त्रीण्येव नातिरिक्तानि बीजानि कारणानि भवन्ति । कानि तानीत्युच्यन्ते । आण्डमण्डाज्जातं अण्डजमेवाण्डजं पक्ष्यादि । पक्षिसर्पादिभ्यो हि पक्षिसर्पादयो जायमाना दृश्यन्ते । तेन पक्षी पक्षिणां बीजम् । सर्पःसर्पाणां बीजम् । तथाऽन्यदप्यण्डाज्जातं तज्जातीयानां बीजमित्यर्थः । नन्वण्डाज्जातमण्डजमुच्यतेऽतोऽण्डमेव बीजमिति युक्तं कथमण्डजं बीजमुच्यते । सत्यमेवं स्याद्यदि त्वदिच्छातन्त्रा श्रुतिःस्यात्स्वतन्त्रा श्रुतिर्यत आण्डजाद्येव बीजं नाण्डादीति । दृश्यते चाण्डजाद्यभावे तज्जातीयसन्तत्यभावो नाण्डाद्यभावे अतोऽण्डजादीन्येव बीजान्यण्डजादीनाम् । तथा जीवाज्जातं जीवजं जरायुजमित्येतत्पुरुषपश्वादि । उद्भिज्जं उद्भित्स्थावरं ततो जातमुद्भिज्जं धाना वोद्भिततो जायत इत्युद्भिज्जं स्थावरबीजं स्थावराणां बीजमित्यर्थः । स्वेदजसंशोकजयोराण्डजोद्भिज्जयोरेव यथा सम्भवमन्तर्भावः । एवं ह्यवधारणं त्रीण्येव बीजानीत्युपपन्नं भवति ॥ १ ॥

अनुवाद—प्रसिद्ध इन भूतों के तीनही बीज होते हैं । १—आण्डज २—पिण्डज और ३—उद्भिज्ज ॥ १ ॥

पदार्थः—( तेषाम् ) जीवों से आविष्ट उन ( एषाम् ) इन ( खलु ) प्रसिद्ध ( भूतानाम् ) पशु पक्षी आदि पक्षियों के ( त्रीणि+एव ) तीन ही ( बीजानि ) बीज ( भवन्ति ) होते हैं वे तीनों कौन हैं सो आगे कहते हैं ( आण्डजम् ) आण्डज अण्ड से जिसकी उत्पति हो जैसे पक्षी आदि ( जीवजम् ) जीवसे शरीर से जो उत्पन्न हो जैसे मनुष्य पशु आदि ( उद्भिज्जम् ) पृथिवी को फोड़कर निकलने वाले वृक्ष वनस्पति आदि उद्भित् कहलाते हैं । उनसे जो उत्पन्न हो उसे उद्भिज्ज कहते हैं इति ॥ १ ॥

भाष्याशय—भूत—यहां भूत शब्द से तेज, जल, पृथिवी आदि का ग्रहण नहीं है क्योंकि ( एषाम् ) एतत् शब्द प्रत्यक्ष निर्देश करता है अर्थात् प्रत्यक्ष जो पशु पक्षी

आदि हैं उनका ही ग्रहण है। शङ्का—तेज आदि भी तो प्रत्यक्ष हैं उनका ग्रहण क्यों नहीं। उ०—इन भूतों का त्रिवृत् करण आगे कहा जायगा। जबतक त्रिवृत् करण नहीं हुआ है तबतक प्रत्यक्ष निर्देश इन भूतों में घटित नहीं हो सकता। और इन तेज आदि भूतों में देवता शब्द का भी प्रयोग किया गया है जैसे (इमास्तिस्रो देवता इति) इसकारण भूतपद से पशु पक्षी स्थावर आदि का ही ग्रहण है त्रीणि एव–एव शब्द संस्कृत में अवधारण=निश्चय करता है कि तीन ही ( न अधिक न न्यून किन्तु तीन ही बीज कारण अण्डज—अण्ड+ज। अण्डों से जो उत्पन्न हो वह। पक्षी सर्प आदि से भी पक्षी सर्पादि उत्पन्न होते हैं। इस कारण पक्षी पक्षियों का बीज कारण और सर्प सर्पों का कारण जानना इत्यादि ॥ १ ॥

## सेयं देवतैक्षत–हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति॥२॥

सा। इयम्। देवता। ऐक्षत। हन्त। अहम्। इमाः। तिस्रः। देवता। अनेन। जीवेन। आत्मना। अनुप्रविश्य। नामरूपे। व्याकरवाणि। इति ॥ २ ॥

भाष्यम्–सेति। सा सद्वाच्या। ब्रह्मनाम्नी। देवता परमा देवता। ऐक्षत ज्ञानरूपं सङ्कल्पं कृतवती। किमैक्षतेत्याह। हन्तेदानीम्। अहम्। सर्वं कर्तुं समर्थ ईश्वरोऽहं अनेन जीवेन आत्मना मम सन्निहितेन स्वकर्मणा प्रेरितेन सन्निकटस्थेनोपस्थितेन पुरुषवाच्येन जीवात्मना सार्धम्। इमास्तिस्रोदेवतास्तेजोऽप्पृथिव्याख्यास्त्रिसंख्याका दीप्यमाना वा देवताः। अनुप्रविश्य। अनुप्राविश्येव। नामरूपे नाम च रूपञ्च नामरूपे। व्याकरवाणि विस्तृतं करवाणि। विविधानि नामानि रूपाणि च सर्वतः प्रकाशयेयम्। अयंभावः। तेजस अपां पृथिव्याश्च आसां तिसृणां देवतानां तत् कार्य्याणामसंख्येयानां मध्ये प्रथमं पुरुषाख्यं जीवं संयोज्य। पश्चादहमपि ताः प्रविशन्निव भूत्वा नाम च रूपञ्च करवाणीत्यर्थः ॥ २ ॥

अनुवाद–सो यह सद्वाच्या ब्रह्मनाम्नी देवता ज्ञानरूप संकल्प करने लगी कि इन ( तेज, जल, और अन्नोपलक्षित पृथिवी ) तीनों देवताओं में इस जीव आत्मा (जीवात्मा) के साथ स्वयं मानो पश्चात् प्रवेशकर उनके नाम और रूप को विस्पष्ट करूं॥२॥

पदार्थः– ( सा ) वह ( इयम् ) यह ( देवता ) परमदेवता ईश्वर ( ऐक्षत ) ज्ञानरूप सङ्कल्प को करने लगा कि ( हन्त ) अब ( अहम् ) मैं ( इमाः ) इन ( तिस्रः ) तेज जल और पृथिवी तीनों ( देवताः ) देदीप्यमान भूतों में ( अनेन )

( जीवेन ) इस जीवात्मा के साथ ( आत्मना ) अपने तांईं स्वयं मैं भी (अनुप्रविश्य ) पश्चात् मानो प्रविष्ट हो ( नामरूपे ) इन तेज जल और पृथिवी के कार्यों के नाम और रूप को ( व्याकरवाणि ) विस्तार पूर्वक प्रकाशित करूं ॥ २ ॥

भाष्याशयः—जीवेन आत्मना=जीवात्मा नाम जीव का है यहां जीव और आत्मा शब्द के पृथक् २ प्रयोग से कोई जीव और आत्मा को पृथक् न समझे जैसे जीवात्मा से केवल जीव का ग्रहण होता है । तद्वत् यहां भी जानना ॥ २ ॥

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥**

तासाम् । त्रिवृतम् । त्रिवृतम् । एकैकाम् । करवाणि । इति । सा । इयम् । देवता । इमाः । तिस्रः । देवताः । अनेन । एव । जीवेन । आत्मना । अनुप्रविश्य । नामरूपे । व्याकरोत् ॥ ३ ॥

भाष्यम्—तासामिति । पूर्वोक्तानां तासाम् । तेजो जल पृथिवीनां तिसृणां देवतानां मध्ये । एकैकां तेज आदि देवतामेकैकाम् । त्रिवृतम् २ त्रिगुणां २ करवाणि । इति सेयं देवता परमैक्षत इत्यन्वयः । अत्र एकैकां तेज आदि देवतां प्रथमं द्विधा द्विधा विभज्य पुनरेकैकं भागं द्विधा २ कृत्वा तदितरभागयोर्निक्षिप्य त्रिवृत्करणं विवक्षितम् । इत्थमीक्षित्वा सेयं परमा सद्वाच्या ब्रह्मनाम्नी देवता । इमास्तिस्रोदेवतास्तेजोप्पृथिवी स्वरूपास्त्रिसंख्याकाः देवताः । अनेन संनिकटेन जीवेन आत्मना जीवात्मनैव समम् अनुप्रविश्य स्वयमपि पश्चात् ताः प्रविश्येव । तासां नामरूपे व्याकरोत् । अस्य पदार्थ स्येदन्नामेदंरूपमिति प्रकाशितवती ॥ ३ ॥

अनुवाद—उन तीनों के मध्य एक एक को त्रिवृत् २ ( त्रिगुण २ ) करूं ( ऐसा ज्ञानरूप सङ्कल्प उस परमा देवता ने किया और इस प्रकार से संकल्प करके ) सो वह परमा देवता इन तीनों देवताओं में इस जीवात्मा के साथ पश्चात् स्वयम् भी मानों प्रविष्ट हो उन के नाम और रूप को विस्पष्ट रूप से प्रकाशित करने लगा ॥ ३ ॥

पदार्थः—( तासाम् ) उन तेज, जल और पृथिवीरूप तीनों देवताओं के मध्य ( एकैकाम् ) एक एक को ( त्रिवृतम्+त्रिवृतम् ) तीन २ गुणा ( करवाणि ) करूं ईदृग् ज्ञानरूप ईक्षण उस परमा देवता ने किया इतना सम्बन्ध पूर्व से ही है ।

( इति ) इस प्रकार ईक्षण कर ( सा+इयम्+देवता ) सो यह देवता ब्रह्मनाम्नी परमा देवता ( इमाः ) इन ( तिस्रः ) तेज, जल और पृथिवीरूप तीनों ( देवताः ) देवताओं में ( अनेनैव जीवेन+आत्मना ) इस जीवात्मा के साथ ( अनुप्रविश्य ) स्वयं भी मानों पश्चात् प्रवेश कर ( नामरूपे ) इन तीनों के असंख्येय कार्यों के नाम और रूप को ( व्याकरोत् ) विस्पष्ट रूप से प्रकाशित करने लगा इस का यह नाम है और यह इस का रूप है इस रीति से सकल पदार्थों के नाम और रूप के बनाने वाला केवल एक ईश्वर ही है अन्य नहीं ॥ ३ ॥

भाष्याशयः—इसका भाव यह है कि प्रथम एक २ तेज आदि को दो २ भाग करो इस प्रकार छः भाग होवेंगे । पुनः एक २ भाग ज्यों का त्यों बना हुआ पृथक् रहे । परन्तु एक २ भाग को लेकर दो दो करो इस प्रकार प्रत्येक के तीन २ भाग हुए । एक एक लघुभाग को अन्य २ में मिलादेवे । तब सब भूतों के तीन २ अंश निजके रहे और एक २ अंश दूसरे २ का आया । यथा तेज के क और ख दो भाग किये पुनः क के दो भाग क और ग । इस प्रकार तेजके क+ख+ग भाग हुए । परन्तु क और ग भाग ख भागका आधा आधा है । तेजके क भाग को निकालकर पृथिवी के भागों में रक्खो। और पृथिवी के भागको निकालकर तेज के भाग में मिलाओ पुनः तेज के भागों को जल के भाग में मिला और जल के ग भाग को तेज के भागों में मिलाओ । इसी प्रकार जानो। इसी का नाम त्रिवृत् करण है। इससे यह सिद्ध हुआ कि चार अंशों में दो दो अंश अपने हैं और एक २ अंश दूसरे २ का है । पञ्चीकरण का भी प्रकार ऐसा ही है । ३ ॥

## तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा नु खलु सोम्येमास्तिस्रो देवता स्त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥

तासाम् । त्रिवृतम् । त्रिवृतम् । एकैकाम् । अकरोत् । यथा । नु । खलु । सोम्य । इमाः । तिस्रः । देवताः । त्रिवृत् । त्रिवृत् । एकैका । भवति । तत् । मे । विजानीहि । इति ॥ ४ ॥

भाष्यम्—तासामिति । तासां तेजोप्पृथिवीरूपाणां देवतानां मध्ये । एकैकां देवताम् । त्रिवृतं त्रिवृतं त्रिगुणां २ अकरोदिति पूर्वस्यैव प्रपञ्चः । हे सोम्य ! सौम्य ।

यथानुखलु । इमास्तिस्रो देवता एकैका त्रिवृत् त्रिवृत् भवति । तद्विज्ञानं मे मम निगदतो विजानीहि । विस्पष्टमवधारयेति ॥ ४ ॥

इति तृतीयखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ३ ॥

अनुवाद—उन तीनों के मध्य एक २ को त्रिवृत् २ त्रिगुणा २ ( उस परम देवता ने ) किया । हे सोम्य ! ये तीनों प्रसिद्ध देवताएं एक २ त्रिवृत् २ त्रिगुण २ जैसे होती हैं सो विज्ञान मुझसे विस्पष्टतया सीखो ॥ ४ ॥

पदार्थः—( तासाम् ) उन तीनों के मध्य ( एकैकाम् ) एक २ को ( त्रिवृतम्+त्रिवृतम् ) तीन २ गुणा ( अकरोत् ) उस परमा देवता ने किया । यह वर्णन पूर्वका ही प्रपञ्चमात्र है (सोम्य) हे सौम्य ! ( खलु+नु ) सुप्रसिद्ध ( इमाः+तिस्रः+देवताः ) ये तीन देवता ( एकैका ) एक २ ( त्रिवृत्+त्रिवत्+भवति ) तीन २ गुणा ( यथा ) जैसे होता है ( तत् ) उस त्रिवृत् करण विज्ञान को ( मे ) मुझ से ( विजानीहि ) विस्पष्टतया अवधारण करो ॥ ४ ॥ इति तृतीय खण्डस्य भाषाभाष्यं समाप्तम् ॥ ३ ॥

## अथ चतुर्थः खण्डः

**यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥**

यद् । अग्नेः । रोहितम् । रूपम् । तेजसः । तत् । रूपम् । यत् । शुक्लम् । तत् । अपाम् । यत् । कृष्णम् । तत् । अन्नस्य । अपागात् । अग्नेः । अग्नित्वम् । वाचाऽऽरम्भणम् । विकारः । नामधेयम् । त्रीणि । रूपाणि । इति । एव । सत्यम् ॥ १ ॥

भाष्यम्—यदिति । तत्तद्देवतानां त्रिवृत्करणमुक्तं सम्प्रति तस्यैवोदाहरणमुच्यते । उदाहरणं नामैकदेशप्रसिद्धया शेषप्रसिद्ध्यर्थं यदुदाह्रियते तत् । तदेतदाह । यदग्नेरिति । त्रिवृत्कृतस्य । अग्नेर्भौतिकस्य । वह्नेस्तत्त्वस्य । यद्रोहितंलोहितंरूपं लोके दृश्यते । तदत्रिवृत्कृतस्यतेजसो रूपमस्ति । इति हे सोम्य विद्धि । तथा च । अग्नेर्यच्छुक्लं रूपं तद् । अपां तत्त्वस्य रूपंविद्यत इति जानीहि । तथा च । अग्नेर्यत्कृष्णं श्यामं रूपमस्ति । तदन्नस्य अन्नोपलक्षितायाः अत्रिवृत्कृतायाः पृथिव्या रूपं विजानीहि । एतेन किं सिद्धं सोम्य ! सम्मिलितरूपत्रयव्यतिरेकेण नाग्निर्नाम कोऽपिभिन्नः पदार्थोऽस्तीतिसिद्धम् । अतो यत्त्वंभिन्नमग्निं रूपत्रयाद् इयन्तं कालं अमंस्थाः । तदिदानीमग्नेरग्नित्वम् ! सर्वथा । अपागात् । अपगतं व्यतीतम् । हे सोम्य ! अतो वाचार-

म्भणम् । वाग्वर्धनमेव विकारोनामधेयम् । विकारो नाम नाममात्रम् । नहि विकारस्य परमार्थत्वमितियावत् । अतोऽग्निबुद्धिर्मृषैव । तर्हि किं तत्र तथ्यमित्याह त्रीणि रूपाणीत्येव सत्यम् । परमार्थवस्तु । नाणुमात्रमपि रूपत्रय व्यतिरेकेण सत्यमस्तीत्यवधारणार्थ एवकारः ॥ १ ॥

अनुवाद—अग्नि में जो रोहित रूप है वह तेज का रूप है । ( अग्नि में ) जो शुक्लरूप है वह जल का रूप है । और जो ( अग्नि में ) कृष्णरूप है वह अन्न अर्थात् पृथिवी का रूप है ( हे सौम्य ! ) अब अग्नि से अग्नित्व जाता रहा क्यों कि केवल वाणीवर्धक विकार नाममात्र है । तीन ही रूप सत्य हैं ॥ १ ॥

पदार्थः–( अग्नेः ) त्रिवृत्कृत अग्नि में ( यत् ) जो ( रोहितम् ) रक्तरूप है ( तत् ) वह ( तेजसः ) तेज का ( रूपम् ) रूप है ( यत्+शुक्लम् ) अग्नि में जो शुक्ल रूप है ( तत्+अपाम् ) वह जल का रूप है । ( यत्+कृष्णम् ) आग्नि में जो कृष्णरूप है ( तद्+अन्नस्य ) वह अन्न अर्थात् पृथिवी का रूप है । हे सौम्य इस प्रकार अब ( अग्नेः ) अग्नि से ( अग्नित्वम् ) अग्निपना ( अपागात् ) व्यतीत हो गया क्योंकि ( वाचारम्भणम् ) वाणी का वर्धक ( विकारः ) अग्निरूप विकार ( नामधेयम् ) नाममात्र है ( त्रीणि+रूपाणि+इति+एव ) तीन ही ये रोहित,शुक्ल, कृष्ण रूप ( सत्यम् ) सत्य हैं ॥ १ ॥

**यदादित्यस्य रोहितꣳरूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणिरूपाणीत्येव सत्यम् ॥ २ ॥**

यद् । आदित्यस्य । रोहितम् । रूपम् । तेजसः । तत् । रूपम् । यत् । शुक्लम् । तद् । अपाम् । यत् । कृष्णम् । तद् । अन्नस्य । अपागात् । आदित्यात् । आदित्यत्वम् । वाचाऽऽरम्भणम् । विकारः । नामधेयम् । त्रीणि । रूपाणि । इति । एव । सत्यम् ॥ २ ॥

भाष्यम्—यदिति । त्रिवृत्कृतस्य आदित्यस्य यद्रोहितं रक्तं रूपं तदत्रिवृत्कृतस्य तेजसोरूपं वर्तते । यच्छुक्लमादित्यस्य स्वरूपं दृश्यते तदत्रिवृत्कृतानामपां रूपमस्ति यत् कृष्णं रूपमादित्यस्य दृश्यते तदन्नस्यात्रिवृत्कृतायाः पृथिव्या रूपम् । हे सोम्य ! वाचारम्भणम् वाचया वाण्या हेतुभूतयाऽऽरम्भणमालम्भनमास्पर्शनं विकारोनामधेयम् । न

विकारस्य पारमार्थ्यमस्तीतिविज्ञेयम् । तर्हि किं सत्यमस्तीत्याह त्रीणिरूपाणीत्येव सत्यमस्तीत्यवधारय न नाममात्रमपि रूपत्रयाद्भिन्नं किमपिसत्यमस्तीत्यर्थः ॥ २ ॥

अनुवाद—त्रिवृत्कृत आदित्य ( सूर्य ) में जो रक्तरूप है वह अत्रिवृत्कृत तेज का रूप है । जो शुक्ल रूप है वह जल का है और जो कृष्ण रूप है वह पृथिवी का है । इस कारण सूर्य से सूर्यत्व जाता रहा । क्योंकि वाणी वर्धक विकार नाममात्र है तीन ही रूप सत्य हैं ॥ २ ॥

पदार्थः–( आदित्यस्य ) त्रिवृत् कृत सूर्य में ( यत्+रोहितम्+रूपम् ) जो रक्तरूप दीखता है ( तत्+तेजसः+रूपम् ) वह अत्रिवृत्कृत तेजका रूप है ( यत्+शुक्लम् ) और जो सूर्य में शुक्ल रूप है ( तद्+अपाम् ) वह अत्रिवृत्कृत जल का रूप है ( यत्+कृष्णम् ) जो सूर्य में कृष्ण रूप है ( तत्+अन्नस्य ) वह अन्न अर्थात् अत्रिवृत्कृत् पृथिवी का रूप है । इस कारण हे सौम्य अभी तक तुम ने सूर्य को जो एक भिन्न पदार्थ समझा था वह ( आदित्यात् ) सूर्य से ( आदित्यत्वम् ) आदित्यपना ( अपागात् ) जाता रहा क्योंकि आदित्य इन तीन रूपों से भिन्न पदार्थ नहीं । क्योंकि ( विकारोनामधेयम् ) विकार वस्तु केवल नाममात्र है यथार्थ वस्तु नहीं फिर कैसा है (वाचाऽऽरम्भणम्) वचन का जनक है । अर्थात् विकार वस्तु केवल एक नाम और रूप को ही बढ़ाती है । उसकी यथार्थता नहीं होती ॥ २ ॥

**यच्चन्द्रमसो रोहितꣳरूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येवसत्यम् ॥ ३ ॥**

यत् । चन्द्रमसः । रोहितम् । रूपम् । तेजसः । तत् । रूपम् । यत् । शुक्लम् । तद् । अपाम् । यत् । कृष्णम् । तद् । अन्नस्य । अपागात् । चन्द्रात् । चन्द्रत्वम् । वाचाऽऽरम्भणम् । विकारः । नामधेयम् । त्रीणि । रूपाणि । इति । एव । सत्यम् ॥ ३ ॥

भाष्यम्—यदिति । त्रिवृत्कृतस्य चन्द्रमसो यद्रोहितं रक्तं रूपं तत्तेजसो रूपं विद्धि । यच्छुक्लं रूपं चन्द्रमसः तदपां रूपं विद्धि । यच्चन्द्रमसः कृष्णं रूपं तदन्नस्य पृथिव्या रूपं विद्धि । अतः सोम्य ! चिरकालादद्यत्त्वं चन्द्रमसमेतद्रूपत्रयव्यतिरेकेणावेदीस्तदिदानीं चन्द्राच्चन्द्रत्वमपागात् व्यपगतम् । नहि रूपत्रयाद्भिन्नश्चन्द्रो नाम पदार्थः यतः वाचारम्भणं वागालम्भनं विकारोनामधेयम् । तर्हि किं तत्र सत्यमित्याह त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥

अनुवाद—त्रिवृत्कृत चन्द्र में जो रक्तरूप है वह तेज का रूप है, जो उस में शुक्लरूप है वह जल का, जो उसमें कृष्णरूप है वह अन्न अर्थात् पृथिवी का, इस लिये हे सौम्य! अभी तक इन तीनों रूपों से भिन्न चन्द्रमा को तुमने जो समझ रक्खा था वह चन्द्र से चन्द्रत्व जाता रहा। तीन ही ये रूप सत्य हैं ॥ ३ ॥

पदार्थः—( चन्द्रमसः ) त्रिवृत्कृत चन्द्रमा में ( यत्+रोहितम्+रूपम् ) जो रक्त रूप दीखता है ( तत्+तेजसः+रूपम् ) वह अत्रिवृत्कृत तेज का रूप है ( यत्+शुक्लम् ) जो चन्द्रमा में शुक्ल रूप है ( तत्+अपाम् ) वह अत्रिवृत्कृत जल का रूप है ( यत्+कृष्णम् ) जो चन्द्रमा में कृष्णरूप है ( तत्+अन्नस्य ) वह अन्न अर्थात् अत्रिवृत्कृत पृथिवी का रूप है। इस हेतु हे सौम्य! ( चन्द्रात्+चन्द्रत्वम् ) चन्द्र से चन्द्रत्व (चन्द्रपना) (अपागात्) जातारहा क्योंकि ( वाचाऽऽरम्भणम् ) वाणी का बढ़ाने वाला ( विकारः+नामधेयम् ) विकार नाममात्र है। तब सत्य क्या है सो आगे कहते हैं ( त्रीणि+रूपाणि ) तीन रूप ( इत्येवसत्यम् ) ये ही सत्य हैं ॥ ३ ॥

**यद्विद्युतो रोहितꣳरूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचाऽऽरम्भणं विकारोनामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥**

यत्। विद्युतः। रोहितम्। रूपम्। तेजसः। तत्। रूपम्। यत्। शुक्लम्। तद्। अपाम्। यत्। कृष्णम्। तद्। अन्नस्य। अपागात्। विद्युतः। विद्युत्त्वम्। वाचाऽऽरम्भणम्। विकारः। नामधेयम्। त्रीणि। रूपाणि। इति। एव। सत्यम् ॥ ४ ॥

भाष्यम्—यदिति। त्रिवृत्कृताया विद्युतो यद्रोहितं रक्तं रूपं विद्यते तदत्रिवृत्कृतस्य तेजसो रूपं विद्धीत्यादि समानम् ॥ ४ ॥

अनुवाद—त्रिवृत्कृत विद्युत् में जो रक्त रूप है वह अत्रिवृत्कृत तेजका रूप है। जो उस में शुक्ल रूप है वह जलका रूप। जो उस में कृष्ण रूप है वह अन्न अर्थात् पृथिवी का रूप है इस हेतु हे सोम्य! विद्युत् से विद्युत्त्व अर्थात् बिजलीपना जाता रहा। क्योंकि वाणीका बर्धक विकार नाममात्र है। तीन ही ये रूप सत्य हैं ॥४॥

पदार्थः—( विद्युतः ) विद्युत् में ( यत्+रोहितम्+रूपम् ) जो रक्त रूप दीखता है ( तत्+तेजसः+रूपम् ) वह तेजका रूप है ( यत्+शुक्लम ) जो विद्युत् में शुक्ल रूप है ( तदपाम् ) वह जल का रूप है ( यत्+कृष्णम् ) जो बिजुली में कृष्ण

रूप है ( तत्+अन्नस्य ) वह अन्न अर्थात् पृथिवी का रूप है । इस हेतु हे सौम्य ! इतने काल तक तुमने जो विद्युत् की अस्तित्व को यथार्थ समझ रक्खा था वह ( विद्युतः+विद्युत्त्वम् ) विद्युत् से विद्युत्त्व (अपागात्) जाता रहा क्योंकि ( विकारः+नामधेयम् ) विकार नाममात्र है । फिर कैसा है ? ( वाचाऽऽरम्भणम् ) वाणीमात्र का बढ़ानेवाला है ( त्रीणि+रूपाणि+इति+एव+सत्यम् ) हे सोम्य ! तीन ही रूप सत्य हैं ॥ ४ ॥

**एतद्धस्म वै तद्विद्वांसᳲस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुः ॥ ५ ॥**

एतद् । ह । स्म । वै । तद्विद्वांसः । आहुः । पूर्वे । महाशालाः । महाश्रोत्रियाः । न । नः । अद्य । कश्चन । अश्रुतम् । अमतम् । अविज्ञातम् । उदाहरिष्यति । इति । हि । एभ्यः । विदाञ्चक्रुः ॥ ५ ॥

भाष्यम्—एतदिति । ते प्रसिद्धा विद्वांसस्तद्विद्वांसः । यद्वा । तदेतत् प्रसिद्धं पूर्वोक्तमेतत् । त्रिवृत्करणशास्त्रम् । विद्वांसो विजानन्तः सन्तः । विदेः शतुर्वसुः ७ । १ । ३६ ॥ इति शतुर्वस्वादेशेनसिद्धम् । पूर्वे पुरातनाः । महाशाला महाविद्यालयाः । महत्यःशालाः पाठशाला येषां ते । महाश्रोत्रियाः । छन्दोधीयते ये ते श्रोत्रियाश्छान्दसाः । महान्तश्चामी श्रोत्रिया इति महाश्रोत्रियाः । श्रोत्रियश्छन्दोऽधीते ५ । २ । ८४ ॥ इत्यनेन साधुः । यद्वा । श्रूयते धर्माधर्मावनेन इति श्रोत्रोवेदः श्रोत्रं विन्दंति ये ते श्रोत्रियाः । वैदिकाः । इमे महाशाला महाश्रोत्रिया आहुर्ब्रुवन्ति स्म ह वै किल । किमाहुरित्याह । नोऽस्मान् । अद्य । इदानीम् । कश्चन कश्चित् पुरुषः । अश्रुतम् । अमतमनर्कितम् । अविज्ञातञ्च वस्तु । नोदाहरिष्यति । न कथयिष्यसि । वयं सर्वं जानीम इत्यर्थः । यद्वा । नोऽस्माकं कुले कश्चन वंश्यः पुरुषः । अश्रुतममतमविज्ञातञ्च नोदाहरिष्यति इति न । किन्तु सर्वो जनोस्मत्कुलीन अश्रुतमपि अमतमपि अविज्ञातमपि वस्तु अवश्यं उदाहरिष्यति । व्याख्यास्यति इदमीदृगिति सम्यग्विज्ञास्यति । अस्माकं कुलीनानां सर्वं विज्ञातमेवास्तीत्यर्थः । यतो वयं सद् विजानन्तः सर्वान् वंश्यान् सर्वदैव शिक्षमाणा एव वर्तामहे । ते पुनः कथं सर्वं विज्ञातवन्त इत्याह । हि निश्चितम् । एभ्यो रोहितादिरूपेभ्यस्त्रिवृत्कृतेभ्यो विज्ञातेभ्यः सर्वमन्यच्छिष्टम् । एवमेवेति विदाञ्चक्रुः । विदितवन्तः । अथवा । एभ्योऽन्यादिभ्यो दृष्टांतेभ्यो विज्ञातेभ्यः सर्वमन्यद्विदाञ्चक्रुः ॥ ५ ॥

अनुवाद—इस विज्ञान को जानते हुए पूर्व=प्राचीन महाशाल और महाश्रोत्रिय

लोग कहा करते थे कि हम लोगों से अभी कोई भी ऐसा पुरुष नहीं है । जो अश्रुत अमत और अविज्ञात वस्तु को न कह सकेगा । निश्चय उन्होंने ( पूर्वले विद्वानों ने ) इन से ही ( इन दृष्टान्तों से वा रोहितादि रूपों के विज्ञान शास्त्र से ) जाना था ॥ ५ ॥

पदार्थः—( तत्+एतत्+ह+वै ) उस इसी उत्तम विज्ञान को ( विद्वांसः ) जानते हुए ( पूर्वे ) अति प्राचीन ( महाशालाः ) महाशाला वाले ( महाश्रोत्रियाः ) महावैदिक (आहुः+स्म) कहा करते थे कि (नः) हम लोगों से (अद्य) सम्प्रति (कश्चन) कोई पुरुष ( अश्रुतम् ) अश्रुत ( अमतम् ) अतर्कित ( अविज्ञातम् ) अविज्ञात वस्तु को ( न+उदाहरिष्यति ) नहीं कहेगा ( हि ) क्योंकि वे लोग ( एभ्यः ) इन दृष्टान्तों से ( विदाञ्चक्रुः ) सब कुछ जाना करते थे अर्थात् हमलोगों को कोई वस्तु ऐसी नहीं जो न विदित हो इस हेतु हमलोगों से कोई मनुष्य नवीन वस्तु नहीं कह सकेगा ॥ ५ ॥

**यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदाञ्चक्रुर्यदु शुक्लमिवाभूदित्यपाᳬ रूपमिति तद्विदाञ्चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदाञ्चक्रुः ॥६॥**

यद् । उ । रोहितम् । इव । अभूत् । इति । तेजसः । तद् । रूपम् । तद् । विदाञ्चक्रुः । यद् । उ । शुक्लम् । इव । अभूत् । इति । अपाम् । रूपम् । इति । तद् । विदाञ्चक्रुः । यद् । उ । कृष्णम् । इव । अभूत् । इति । अन्नस्य । रूपम् । इति । तद् । विदाञ्चक्रुः ॥ ६ ॥

भाष्यम्—यद्विति । कथं ते विदाञ्चक्रुरित्येवमर्थं विस्पष्टयति । उशब्दो वितर्के । यत्किमपिवस्तु रोहितमिवाभूत् । रोहितो रक्तोवर्णः । सोऽस्यास्तीति रोहितम् । रक्तगुणविशिष्टमिवाभूत् । तेषां समीपे रोहितं वस्तु यदाऽदृश्यत । तदा ते तद्विदाञ्चक्रुः । किं विदाञ्चक्रुरित्याह । तद्रूपं तेजसोऽस्ति । तद्रोहित गुणविशिष्टं वस्तु तेजसएववर्तत इतिविदाञ्चक्रुः । एवमेवयत्किमपि शुक्लमिवाभूत् । शुक्लगुणविशिष्टमिवादृश्यत । तदपांरूपमिति ते विज्ञातवन्तः । यद्वस्तु कृष्णमिव कृष्णवर्णमिवाभूत् । तदन्नस्य पृथिव्या रूपमिति तद्विदाञ्चक्रुः । विदितवन्तो विज्ञातवन्त इत्यर्थः ॥ ६ ॥

अनुवाद—उन पूर्वविद्वानों ने जो (वस्तु) रक्त वर्ण सी थी उसे तेज का रूप जाना । जो वस्तु शुक्ल वर्ण सी थी उसे जल का रूप जाना और जो कृष्णवर्ण सी थी उसे पृथिवी का रूप जाना ॥ ६ ॥

पदार्थः—( यद्+उ ) जो कुछ ( रोहितमिव+अभूत्+इति ) रक्तसा प्रतीत हुआ ( तत्+तेजसः+रूपम्+इति ) वह तेज ( अग्नि ) का रूप है ऐसा ( तत्+विदाञ्चक्रुः ) उसको उन ऋषियों ने जाना ( यत्+उ ) जो कुछ ( शुक्लम्+इव+अभूत् ) शुक्ल रूप सा प्रतीत हुआ ( अपाम्+रूपम् ) वह जल का रूप है ऐसा ( तत्+विदाञ्चक्रुः ) उसको उन्होंने जाना ( यत्+उ+कृष्णम्+इव+अभूत् ) जो कुछ कृष्ण वर्ण सा प्रतीत हुआ (तत्+अन्नस्य+रूपम्) वह पृथिवी का रूप है ऐसा ( तत्+विदाञ्चक्रुः ) उन्होंने उसको जाना ॥ ६ ॥

**यद्वविज्ञातमेवाभूदित्येतासामेव देवतानाᳫं समास इति तद्विदाञ्चक्रुर्यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥**

यद् । उ । अविज्ञातम् । इव । अभूत् । एतासाम् । एव । देवतानाम् । समासः । इति । तत् । विदाञ्चक्रुः । यथा । नु । खलु । सोम्य । इमाः । तिस्रः । देवताः । पुरुषम् । प्राप्य । त्रिवृत् । त्रिवृत् । एकैका । भवति । तत् । मे । विजानीहि । इति ॥ ७ ॥

भाष्यम्—यद्वविज्ञातमिति । तेषां महाशालानां महाश्रोत्रियाणां पूर्वेषां विदुषाम् । यदु । यदपि अत्यन्तदुर्लक्षतया अविज्ञातमिव अविदितमिव । अभूत् । यदपि सम्यग् ज्ञातुमशक्यमिव जातम् । तदपि एतासामेवरोहितशुक्लकृष्णानां तिसृणां देवतानां समासः समुदायोस्तीति ते विदाञ्चक्रुः । एतेभ्यस्त्रिभ्यो रूपेभ्योऽतिरिक्तस्य रूपस्याभावात् । एतेषामेव रूपाणां सम्मिलितानां किञ्चिन्नवीनमिव रूपमभूदितिसम्यग् विज्ञातुमधुना न शक्नुमः । किन्तु नह्येतेभ्योभिन्नं किमपि । एवं तावद्बाह्यं वस्तु अग्न्यादिवद् विज्ञातम् । तथेदानीं यथा नु खलु । येनैवप्रकारेण इमास्तिस्रो देवताः । पुरुषम् । जीवात्मानं प्राप्य लब्ध्वा एकैकादेवता त्रिवृत् त्रिवृत् भवति । तद्विज्ञानशास्त्रं त्वं हे सोम्य ! विजानीहि इति ॥ ७ ॥ इति चतुर्थखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ४ ॥

अनुवाद – जो कुछ ( उन लोगों को ) अविज्ञात सा प्रतीत हुआ वह भी इन्हीं रोहित कृष्ण शुक्लवर्ण रूप देवताओं का समुदाय है ऐसा उसको जाना । हे सोम्य ! जिस प्रकार ये तीनों देवता पुरुष को पाकर एक २ तीन २ होते हैं । उस विज्ञान को हम से जानो ॥ ७ ॥

पदार्थः-(यत्+उ) जो कुछ उन ऋषियों को ( अविज्ञातम्+इव+अभूत् ) अविज्ञात सा प्रतीत हुआ वह भी ( एतासामेव+देवतानाम् ) इन्हीं रोहित कृष्ण शुक्लरूप देवताओं का (समासः) समुदाय है ( इति+तत्+विदाञ्चक्रुः ) ऐसा उस को उन ऋषियों ने जाना इस प्रकार अविज्ञात वस्तु को भी ऋषि लोग अनुमान के द्वारा जान लिया करते थे । अब आगे इन तीनों में से एक २ तीन २ प्रकार कैसे होता है सो कहेंगे । उस के लिये भूमिका बांधते हैं ( सोम्य ) हे सोम्य! ( यथा नु खलु ) जिस प्रकार ( इमाः+तिस्रः+देवताः ) ये तीनों देव (पुरुषम्+प्राप्य) जीवात्मा से मिल ( एकैका ) उन में से एक२ ( त्रिवृत्+त्रिवृत्+भवति) तीन २ प्रकार का होता है ( तत् ) उस विज्ञान को ( मे+विजानीहि+इति ) मुझ से अध्ययन करो ॥ ७ ॥

इति चतुर्थखण्डस्य भाषाभाष्यं समाप्तम् ॥ ४ ॥

अथ पञ्चमः खण्डः

**अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति । यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः ॥ १ ॥**

अन्नम् । अशितम् । त्रेधा । विधीयते । तस्य । यः । स्थविष्ठः । धातुः । तत् । पुरीषम् । भवति । यः । मध्यमः । तत् । मांसम् । यः । अणिष्ठः । तत् । मनः ॥१॥

भाष्यम्—अन्नमिति । अन्नम् । आशितम् । भुक्तम् । त्रेधाविधीयते । जठराग्निना पच्यमानं त्रिधा विभजते । एतदेवाग्रे ब्रूते तस्यान्नस्य यः स्थविष्ठः स्थूलतमः धातुर्भागः तत् विधेय प्राधान्यान्नपुंसकत्वम् । तत् स्थूलतमं वस्तु पुरीषं भवति । विष्ठाभूत्वा निःसरति । योऽन्नस्य मध्यमः । यो मध्यमोंशो धातुरस्ति । तद् रसादिक्रमेण परिणम्य मांसं भवति । अन्नस्ययोऽणिष्ठः । अणुतमोंशो धातुरस्ति । तत् । उर्द्ध्वं हृदयं प्राप्य सूक्ष्मासु हिताख्यासु नाडीषु अनुप्रविश्य वागादिकरणसंघातस्य स्थितिमुत्पादयन्मनोभवति । मनोरूपेण विपरिणमन् मनस उपचयं करोति ॥ १ ॥

अनुवाद—भुक्त अन्न तीन प्रकार से विभक्त होता है । उस अन्न का जो अतिशय स्थूल भाग है वह पुरीष ( विष्ठा ) जो मध्यम अंश है वह मांस और जो अत्यन्त अणु अंश है वह मन होता है ॥ १ ॥

पदार्थः-( अन्नम् ) अन्न ( अशितम् ) भुक्त होने पर (त्रेधा+विधीयते) जठराग्नि से पच्यमान होकर तीन प्रकार से विभक्त होता है। सो आगे कहते हैं (तस्य+यः+स्थ-

विष्ठः+धातुः) उसका जो बहुत स्थूलभाग है (तत्+पुरीषम्) वह पुरीष (विष्ठा (भवति) होता है ( यः+मध्यमः ) जो मध्यम भाग है ( तत्+मांसम् ) वह रसादि क्रम से परिणत होकर मांस होता है ( यः+अणिष्ठः ) जो अणुतम ( अतिसूक्ष्म ) भाग है (तत्+मनः) वह मन होता है। अर्थात् वह अणुतम भाग ऊपर को उठ हृदय को पा हिता नाम अतिसूक्ष्म नाड़ियों में पैठ वचनादि इन्द्रिय समूहों की स्थिरता को उत्पादन करता हुआ मन रूप इन्द्रिय को सहायता करता है ॥ १ ॥

**आपःपीतास्त्रेधा विधीयन्ते। तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति। यो मध्यमस्तल्लोहितम्। योऽणिष्ठः स प्राणः ॥ २ ॥**

आपः। पीताः। त्रेधा। विधीयन्ते। तासाम्। यः। स्थविष्ठः। धातुः। तत्। मूत्रम्। भवति। यः। मध्यमः। तत्। लोहितम्। यः। अणिष्ठः। सः। प्राणः ॥ २ ॥

भाष्यम्—आप इति। आपः। जलानि। पीताः पुरुषेण पीताः सत्यः। त्रेधा विधीयन्ते जाठरेणाग्निना विपच्यमाना त्रिधाविभजन्ते। तथाहि। तासामपां यः स्थविष्ठो धातुः। यः स्थूलतमोंऽशोऽस्ति। तन्मूत्रं भवति। अपां यो मध्यमोंशः। तद्रसादि क्रमेण विपरिणम्य लोहितम्। रक्तं भवति। योऽणिष्ठः। योणुतमोंऽशः। स प्राणो भवति। प्राणस्य सोऽपां भागो विपरिणम्योपचयमात्रं करोति। न सर्वथा स एव प्राणत्वेन विपरिणम्यते॥२॥

अनुवाद—पीत जल तीन प्रकार से विभक्त होता है। जल का जो स्थूल भाग है। वह मूत्र होता है और जो मध्यम अंश है वह शोणित होता है और जो अतिशय अणुतम भाग है वह प्राण होता है ॥ २ ॥

पदार्थः—( आपः+पीताः ) वैसे ही जल पीयेजाने पर (त्रेधा+विधीयन्ते) तीन हिस्सों में विभक्त होता है (तासाम्+यः+स्थविष्ठः+धातुः) उसका जो स्थूलतम अंश है (तत्+मूत्रम्+भवति) वह मूत्र होता है (यः+मध्यमः) जो उसका मध्यम अंश है (तत्+लोहितम्) वह शोणित रुधिर होता है ( यः+अणिष्ठः ) जो सूक्ष्मतमभाग है ( सः प्राणः ) वह प्राण का सहायक होता है ॥ २ ॥

**तेजोऽशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तदस्थि भवति। यो मध्यमः स मज्जा। योऽणिष्ठः सा वाक् ॥ ३ ॥**

तेजः । अशितम् । त्रेधा । विधीयते । तस्य । यः । स्थविष्ठः । धातुः । तद् । अस्थि । भवति । यः । मध्यमः । सः । मज्जा । यः । अणिष्ठः । सा । वाक् ॥ ३ ॥

भाष्यम्– तेज इति । तेजः । तैजसं तिलघृतादिकं वस्तु । अशितम् । भक्षितं सत् त्रेधाविधीयते । जाठरेणाग्निना विपच्यमानंसत्रिधाविभजते । तस्य तैजसस्य वस्तुनः । यः स्थविष्ठः स्थूलतमोधातुरंशः । तद् अस्थि भवति । योऽणिष्ठः अणुतमोभागः । सा वाग् भवति वाचस्सहायको भवतीत्यर्थः ॥३ ॥

अनुवाद–घृत तैलादि । तैजसरूप पदार्थ भुक्त होने पर तीन प्रकार से विभक्त होता है । उसका जो स्थूलतम भाग है वह अस्थि ( हड्डी ) होती है । जो मध्यम अंश है वह मज्जा होता है और जो अणुतम भाग है वह वाणी होती है ॥ ३ ॥

पदार्थः—( तेजः+अशितम् ) वैसा ही तैल घृतादि तेजोमयपदार्थ भुक्त होने पर (त्रेधा+विधीयते) त्रिधा विभक्त होता है ( तस्य+यः+स्थविष्ठः+धातुः ) जो उसका स्थूलभाग है ( तत्+अस्थि+भवति ) वह अस्थि होता है (यः+मध्यमः) जो मध्यम भाग है ( सः+मज्जा ) वह मज्जा होता है (यः+अणिष्ठः) जो अणुतम भाग है ( सा+वाग् ) वह वचन का सहायक होता है ॥ ३ ॥

## अन्नमयꣳ हि सोम्य ! मन आपोमयःप्राणस्तेजोमयी वागिति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ४ ॥

अन्नमयम् । हि । सोम्य । मनः । आपोमयः । प्राणः । तेजोमयी । वाग् । इति । भूयः । एव । मा । भगवान् । विज्ञापयतु । इति । तथा । सोम्य । इति । ह । उवाच ॥ ४ ॥

भाष्यम्–अन्नमयमिति । पूर्वोक्तमेवोपसंहरति । हे सोम्य ! यतोऽन्नमेवपरिणमन्मनो भवति । अतः । अन्नमयं हि मनोविज्ञेयम् । यतोऽपामेवऽणिष्ठोंशःप्राणत्वेन विपरिणमते अतः । आपोमयः प्राणो विज्ञेयः । यतश्च तेजसोऽणिष्ठोंऽशो वाणीत्वेन विपरिणमते । अतस्तेजोमयी वाग् वाणी वेदितव्या । इति पितुरुपदेशं श्रुत्वा अतृप्तःसन् पुनरपि श्वेतकेतुः "भूय एव मा भगवान् विज्ञापयतु बोधयतु इति" पितरं निवेदयामास तथास्तु सोम्य ! होवाच पितारुणिः ॥ ४ ॥ इति पञ्चम खण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ५ ॥

अनुवाद—हे सोम्य ! अन्नमय मन, आपोमय प्राण, तेजोमयी वाणी है । इति । पुनरपि भगवान् मुझको समझावें । इति । पुत्र का वचन सुन आरुणि तथास्तु कह पुनः बोले ॥ ४ ॥

पदार्थः—( सोम्य ) हे प्रियपुत्र ! (हि) क्योंकि (अन्नमयम्+हि+मनः) अन्नप्रधान ही मन है ( आपोमयः+प्राणः ) जलमय प्राण है ( तजोमयी+वाग् ) और तेजोमयी वाणी है ( इति ) इसे सुन पुनः श्वेतकेतु बोला कि ( भगवान् ) आप (भूयः+एव) पुनरपि ( मा ) मुझको ( विज्ञापयतु ) विज्ञान सिखलावें ( इति ) पुत्र के इस वचन को सुन ( तथा+सोम्य ) एवमस्तु प्रियपुत्र ! ( इति+ह+उवाच ) यह आरुणि बोले ॥ ४ ॥

इति पञ्चमखण्डस्य भाषाभाष्यं समाप्तम् ॥ ५ ॥

अथ षष्ठः खण्डः

## दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥

दध्नः । सोम्य । मथ्यमानस्य । यः । अणिमा । सः । ऊर्ध्वः । समुदीषति । तत् । सर्पिः । भवति ॥ १ ॥

भाष्यम्—दध्नइति । हे सोम्य ! मथ्यमानस्य मन्थनदण्डादिना आलोड्यमानस्य दध्नो दुग्धविकारस्य योऽणिमा । अणोर्भावोऽणिमा । अणुभागोऽस्ति । स ऊर्ध्वः । समुदीषति । संभूयनवनीतभावेनोर्ध्वमागच्छति । तदणुभागाख्यं सर्पिर्घृतं भवति । घृत पद वाच्यं जायते ॥ १ ॥

अनुवाद—हे सोम्य जैसे मथ्यमान दही का जो अणुतम भाग है वह मिलकर ऊपर उठता है वह घृत होता है ॥ १ ॥

पदार्थः—( सोम्य ) हे सौम्य ! ( मथ्यमानस्य ) मन्थन दण्डादिक पदार्थ से मथ्यमान मथाजाता हुआ ( दध्नः ) दही का ( यः+अणिमा ) जो अणु भाग है (सः) वह ( ऊर्ध्वः+समुदीषति ) नवनीत भाव को प्राप्त हो ऊपर को मिलकर उठता है ( तत्+सर्पिः ) वह घृत ( भवति ) होता है ॥ १ ॥

## एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥

एवम् । एव । खलु । सोम्य । अन्नस्य । अश्यमानस्य । यः । अणिमा । सः । ऊर्ध्वः । समुदीषति । तत् । मनः । भवति ॥ २ ॥

भाष्यम्—एवमेवेति। एवमेव। हे सोम्य! यथा पूर्वोक्तो दृष्टान्तोऽधुनैव प्रदर्शितः। एवमेव तथैव। अश्यमानस्य भुज्यमानस्य खाद्यमानस्य। अन्नस्य। ओदनादिखाद्यपदार्थस्य योऽणिमा। अणोर्भावोऽणिमा अणुभागः। स ऊर्ध्वः समुदीषति। अयमर्थः। जाठरेणाग्निना वायुसहितेन खजेनैव मथ्यमानस्यान्नस्याणिष्ठो भागः सम्भूय नवनीतवदूर्ध्वमायाति तन्मनो भवति। तन्मनसः प्रवृद्धिकरं भवति खलु। तन्निश्चितमेवनात्र संदेहः॥ २॥

अनुवाद—हे सौम्य! वैसा ही भुज्यमान (खायाजाता हुआ) अन्न का जो अणुतम भाग है वह ऊपर को उठता है। सो मन होता है॥ २॥

पदार्थः—(एवमेव) जैसे पूर्व दृष्टान्त कहागया है वैसे ही (सोम्य) हे सौम्य! इस को भी जानो (अश्यमानस्य) जीवों से खाद्यमान (अन्नस्य) अन्न का (यः+अणिमा) जो अणिमा अर्थात् अणुभाग है (सः+ऊर्ध्वः+समुदीषति) वह मिल कर ऊपर को उठता है (तत्+मनः+भवति) वह मन होता है। अर्थात् मन की प्रवृद्धि करने वाला होता है॥ २॥

**अपाᳬ सोम्य! पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति॥ ३॥**

अपाम्। सोम्य। पीयमानानाम्। यः। अणिमा। सः। ऊर्ध्वः। समुदीषति। सः। प्राणः। भवति॥ ३॥

भाष्यम्—अपामिति। हे सोम्य! एवमेव। पीयमानानां जीवैः पीयमानानामपां योऽणिमा अणुभागोऽस्ति। स ऊर्ध्वः समुदीषति। यथा शारीरेण नियमेन जाठरेण वैश्वानरेण पाच्यमानः सन् नवनीतवदूर्ध्वमागच्छति स प्राणो भवति। स प्राणस्योपचायको भवतीत्यर्थः॥ ३॥

अनुवादः-हे सोम्य! (वैसा ही) पीयमान जल का जो अणुभाग है। वह मिल कर ऊपर को उठता है सो प्राण का वृद्धिकारक होता है॥ ३॥

पदार्थः—(सोम्य) हे सौम्य पुत्र! (पीयमानानाम्) पीयमान (अपाम्) जलों का (यः+अणिमा) जो अणुभाग है (सः+ऊर्ध्वः+समुदीषति) वह मिलकर ऊपर को उठता है (सः) वह (प्राणः) प्राण (भवति) होता है अर्थात् प्राण का पोषक वा वर्धक होता है॥ ३॥

**तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति॥ ४॥**

तेजसः । सोम्य । अश्यमानस्य । यः । अणिमा । सः । ऊर्ध्वः । समुदीषति । सा । वाग् । भवति ॥ ४ ॥

भाष्यम् —हे सोम्य ! एवमेव । अश्यमानस्य भुज्यमानस्य तेजसः । तेजोगुण प्रधानस्य घृततैलादेः । योऽणिमाः स ऊर्ध्वः समुदीषति । सा वाग् वाणी भवति ॥ ४ ॥

इति षष्ठखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ६ ॥

अनुवादः—हे सौम्य ! भुज्यमान तैजस (घृततैलादि) पदार्थ का जो अणुभाग है वह मिलकर ऊपर को उठता है वह वाणी होती है ॥ ४ ॥

पदार्थः—( सोम्य ) हे सौम्य पुत्र ! ( अश्यमानस्य ) भुज्यमान=खाया जाता हुआ (तेजसः) तेजो गुण प्रधान घृत तैलादि पदार्थ का (यः+अणिमा) जो अणुभाग है ( सः+ऊर्ध्वः+समुदीषति ) वह ऊपर को उठता है ( सा+वाग्+भवति ) वह वाणी होती है वाणी का वर्धक होता है ॥ ४ ॥

**अन्न मयꣳ हि सोम्य ! मन आपोमयः प्राण-स्तेजोमयी वागिति । भूय एव मा भगवान् विज्ञा-पयत्विति । तथा सोम्येति होवाच ॥ ५ ॥**

भाष्यम्—यह प्रवाक ६ । ५ । ४ प्रवाक के समान है यहां ही अर्थ देखो ॥

इति षष्ठ खण्डस्य भाषाभाष्यं समाप्तम् ॥ ६ ॥

## अथ सप्तमः खण्डः

**षोडशकलः सोम्य ! पुरुषः पञ्चदशाहानि माशीः काममपः पिबाऽऽपोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ १ ॥**

षोडशकलः । सोम्य । पुरुषः । पञ्चदश । अहानि । मा । अशीः । कामम् । अपः । पिब । आपोमयः । प्राणः । न । पिबतः । विच्छेत्स्यते । इति ॥ १ ॥

भाष्यम्—षोडश इति । षट् च दशच षोडश । षोडश संख्याका कला यस्य सः । हे सोम्य । पुरुषः । पुरिशेते पुरुषः । जीवात्माषोडश कलोस्ति । हे पुत्र ! एतत्प्रत्यक्षी कर्तुं यदि त्वमिच्छसि तर्हि पञ्चदशाहानि । पञ्चच दशच पञ्चदश । अहानि दिनानि माशीः । मा अशीः । मा बभक्षः । अशनं भक्षणं माकार्षीः । अहानीत्यत्र कालाध्वनो-रत्यन्तसंयोगे २ । ३ । ५ ॥ इति द्वितीया ॥ पञ्चदशदिनानि अनश्नतो मम प्राणः कथं स्थास्यतीत्याह । हे सोम्य ! अपो जलं कामं यथेच्छं पिब । जलं पिबतस्तवप्राणोजीवनवृ-

तिः । न नैव विच्छेत्स्यते । नैवविच्छेदं वियोगं प्राप्स्यते । यतः । अयं प्राण आपोमयः । अम्मयः । अब्विकार इति । आपोमय इति प्राचीन प्रयोगः ॥ १ ॥

अनुवाद—हे सौम्य ! पुरुष षोडशकल है । पन्द्रह दिन भोजन मत करो ( परन्तु ) यथेच्छ जल पीओ ( जलको ) पीते हुए तेरा प्राण शरीर से वियुक्त नहीं होगा ( क्योंकि ) जलमय प्राण है । इति ॥ १ ॥

पदार्थः—( सोम्य ) प्रियपुत्र ! ( पुरुषः ) यह शरीरी आत्मा ( षोडशकलः ) षोडशकला युक्त है । यदि इसकी परीक्षा करनी हो तो ( पञ्चदश ) पन्द्रह ( अहानि ) दिन ( मा+अशीः ) मत भोजन करो । पञ्चदश दिन भोजन न करते हुए मेरा प्राण कैसे रहेगा । अतएव आगे कहते हैं ( अपः ) जलको ( कामम् ) इच्छानुसार ( पिब ) पीओ ( पिवतः ) जल पीते हुए तेरा ( प्राणः ) प्राण ( न + विच्छेस्वते ) शरीर से वियुक्त नहीं होगा अर्थात् नहीं मरोगे ॥ १ ॥

**स ह पञ्चदशाहानि नाऽऽशाथ हैनमुपससाद । किं ब्रवीमि भो इत्यृचः सोम्य ! यजूꣳषि सामानीति । स होवाच–न वै मा प्रतिभान्ति भो इति ॥ २ ॥**

सः । ह । पञ्चदश । अहानि । न । आश । अथ । ह । एनम् । उपससाद । किम् । ब्रवीमि । भोः । इति । ऋचः । सोम्य । यजूंषि । सामानि । इति । सः । ह । उवाच । न । वै । मा । प्रति । भान्ति । भोः । इति ॥ २ ॥

भाष्यम्—सहेति । स ह पितुराज्ञां स्वीकृत्य मनसोऽन्नमयत्वं प्रत्यक्षीकर्तुमिच्छन्सन् । पञ्चदशाहानि । पञ्चदशसंख्याकानि दिनानि । न आश अशनं न कृतवान् । अथ षोडशेदिने हैनं पितरम् । उपससाद । अभ्याजगाम । पितुरन्तिकमाजगामेत्यर्थः । आगत्य च होवाच । भोः पितः किमहंब्रवीमि । किमहमधुना ब्रवाणि । इति पुत्रेण पृष्टः पितोवाच । हे सोम्य ! ऋचः ऋङ्मंत्रान् । यजूंषि यजुर्मन्त्रान् । सामानि साममन्त्रान् । ब्रूहि इति शेषः । हे भगवन् ! अधुना ऋगादीनिकानिचिदपि वस्तूनि मम मनसि न वै प्रतिभान्ति । नैव दृश्यंते । न किमपिविस्फूर्य्यंते । सर्व विस्मृतमिव प्रतिभातीत्यर्थः इत्युवाच पुत्रः ॥ २ ॥

अनुवाद–उस श्वेतकेतु ने पञ्चदश दिन भोजन नहीं किया तत्पश्चात् ( अर्थात् सोलहवें दिन ) अपने पिता के निकट आया (और आकर बोला) कि हे भगवन् । मैं क्या कहूं ( पिता ) हे सोम्य ! ऋग् यजुः और सामवेद को कहो । हे भगवन् ! मु-

झे कुछ नहीं प्रतिभात होता है । अर्थात् इस समय मुझे ऋगादि कुछ भी नहीं मन में आता है ॥ २ ॥

पदार्थः-( सः+ह ) उस प्रसिद्ध श्वेतकेतु ने ( पञ्चदश+अहानि ) पन्द्रह दिन ( न+आश ) नहीं खाया ( अथ ) अनन्तर सोलहवें दिन ( ह+एनम् ) इस अपने पिता के निकट ( उपससाद ) आया और आ बोला कि ( भोः ) हे पूज्यपाद् पिताजी ( किं ब्रवीमि ) मैं क्या कहूं ! मैं आपके सामने क्या पढ़ूं । इसे सुन उस के पिता बोले कि ( ऋचः ) ऋग्वेद को ( यजूंषि ) यजुर्वेद को ( सामानि ) सामवेद को ( इति ) इन सब को पढ़ो अनन्तर ( स+ह+उवाच ) वे श्वेतकेतु बोले कि ( भोः ) हे पूज्यपिताजी ! ( मा ) मुझको ( न+वै ) कुछ नहीं ( प्रतिभान्ति ) मन में भासित होता है । हे पिताजी इस समय सबही विस्मृत सा प्रतीत हो रहा है ॥ २ ॥

**तꣳ होवाच यथा सोम्य ! महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवꣳ सोम्य ! ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवस्यशान ॥३॥**

तम् । ह । उवाच । यथा । सोम्य । महतः । अभ्याहितस्य । एकः । अङ्गारः । खद्योतमात्रः । परिशिष्टः । स्यात् । तेन । ततः । अपि । न । बहु । दहेद् । एवम् । सोम्य । ते । षोडशानाम् । कलानाम् । एका । कला । अतिशिष्टा । स्यात् । तया । एतर्हि । वेदान् । न । अनुभवसि । अशान ॥ ३ ॥

भाष्यम्—तमिति । न वै मे प्रतिभान्तीति पुत्र वचनमाकर्ण्य येन कारणेन न तुभ्यमृगादीनि प्रतिभान्ति तच्छृणु इति तं होवाच पिता । हे सोम्य । सोम्य सुन्दर ! यथा महतः । खे आकाशे द्योतत इति खद्योतः । ज्वलदग्निकीटविशेषः । तस्योड्डयनेन रात्रौ किञ्चित्प्रकाशो भवति । खद्योतः परिमाणमस्येति खद्योतमात्रः । तत्तुल्य इत्यर्थः । परिशिष्टः । अवशिष्टः । एकोऽङ्गारः स्याद्भवेत् । तेन अङ्गारेण । ततोपि तत्परिमाणादीषदपि न बहु दहेत् । अग्निर्बहु दग्धं न शक्नुयात् । हे सोम्य ! एवमेव । ते तव । अन्नोपचितानां षोडशानां मध्ये एकाकला अतिशिष्टा अवशिष्टा स्याद्भवेत् । अतस्त्वमेतर्हि अधुना तया खद्योतमात्राङ्गारतुल्यया अवशिष्टया कलया । वेदान् । नानुभवसि । न सम्यक् स्मरसि । अतस्त्वं गत्वा । अशान भुंक्ष्व ॥ ३ ॥

अनुवाद-उससे ( उसकेपिता ) बोले कि हे सौम्य! जैसे महान् और वृद्धिको प्राप्त अग्नि का खद्योतमात्र एक ही अङ्गार अवशिष्ट रहजाय तो उस ( अङ्गार ) से उससे भी लघुतर ( वस्तु ) को अग्नि नहीं जला सकता । हे सौम्य ! वैसे ही तेरी षोडश कलाओं के बीच एकही कला अवशिष्ट रह गई है इस हेतु अभी उस ( अवशिष्टकला ) से वेदों का अनुभव नहीं करते हो जाओ भोजन करो ॥ ३ ॥

पदार्थः-( तम् ) उस श्वेतकेतु से ( ह+उवाच ) श्वेतकेतु के पिता आरुणि बोले ( सोम्य ) हे सौम्य मधुरमूर्ते ! ( यथा ) जैसे ( महतः ) बड़े महाज्वाला सम्पन्न और ( अभ्याहितस्य ) प्रवर्धित अर्थात् इन्धनों से भरे हुए अग्नि का (खद्योतमात्रः) खद्योत ( जुगनू ) कीट के समान ( एकः+अङ्गारः ) एक अङ्गार ( परिशिष्टः+स्यात् ) अवशिष्ट रहजाय तो ( तेन) उस खद्योतमात्र अङ्गार से ( ततोऽपि ) उससे भी ( बहु ) बहुत छोटे परिमाण वाली वस्तुको अग्नि ( न+दहेत् ) नहीं जला सकता (एवम् ) वैसा ही ( सोम्य ) हे सौम्य ! ( ते ) तेरी ( षोडशानाम्+कलानाम् ) षोडश कलाओं में से ( एकाकला ) एककला ( अतिशिष्टा ) अवशिष्ट बाकी ( स्यात् ) रह गई है (एतर्हि) इसलिये इससमय ( वेदान् ) वेदों को ( न ) नहीं (अनुभवसि ) स्मरण करते हो वेद तुम को भासित नहीं होता इस हेतु ( अशान ) भोजनकरो ॥ ३ ॥

**अथ मे विज्ञास्यसीति । स हाशाथ हैनमुपससाद । तꣳह यत्किञ्च पप्रच्छ सर्वꣳह प्रतिपेदे । तꣳहोवाच ॥४॥**

अथ । मे । विज्ञास्यसि । इति । सः । ह । आश । अथ । ह । एनम् । उपससाद । तम् । ह । यत् । किञ्च । पप्रच्छ । सर्वम् । ह । प्रतिपेदे । तम् । ह । उवाच ॥४॥

भाष्यम्—अथेति । अशानेति पूर्वमुक्तम् । तेनायं मन्त्रः संबध्यते । हे सोम्य ! गत्वा भुंक्ष्व । भोजनानन्तरं यदा ममान्तिकमागमिष्यसि अथ मे मम वचनं विज्ञास्यसि । ज्ञातुं समर्थो भविष्यसि । इति पितृ वचनमवधार्य स ह श्वेतकेतुः आश भक्षयांचकार । अशनं कृतवान् । अथानन्तरम् । एनम् पितरमुपससाद आजगाम । तमागतं श्वेतकेतुं ह पिता यत्किञ्च यत्किमपि पप्रच्छ पृष्टवान् । तत्सर्वं ह स प्रतिपेदे । अनुबभूव । तं श्वेतकेतुं ह प्रति पिता वक्ष्यमाणमुवाच ॥ ४ ॥

अनुवाद-तब तुम मेरे कथन को जानोगे । उसने भोजन किया । अनन्तर वह अपने पिता के निकट आया । तब उससे पिता ने जो कुछ पूछा उसने उस सब का उत्तर दिया उससे आरुणि बोले ॥ ४ ॥

पदार्थः—( अथ ) पूर्व में कहा गया है कि जाओ भोजन करो जब तुम भोजन करके आओगे ( अथ ) उसके पीछे ( मे ) मेरे वचन को ( विज्ञास्यसि ) समझोगे इस समय तेरी एक कला अवशिष्ट है। इस कारण जो कुछ हम पूछते हैं वह तुम्हें नहीं विदित होता है। जब तुम खाकर आओगे मेरी सब समझ सकोगे ( इति) (स ह) श्वेतकेतुने ( आश ) भोजन किया ( अथ ) भोजन के अनन्तर ( ह+एनम् ) अपने पिता के ( उपससाद ) निकट आया ( तम्+ह ) आए हुए उस से (यत्+किञ्च) जो कुछ ( पप्रच्छ ) पिता ने पूछा ( सर्वम्+ह) सबों को ( प्रतिपेदे ) समझसका ( तम्) पुनः उससे ( उवाच ) आरुणि बोले ॥ ४ ॥

**यथा सोम्य ! महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत्तेन ततोऽपि बहु दहेत् ॥ ५ ॥**

यथा । सोम्य । महतः । अभ्याहितस्य । एकम् । अङ्गारम् । खद्योतमात्रम् । परिशिष्टम् । तम् । तृणैः । उपसमाधाय । प्राज्वलयेत् । तेन । ततः । अपि । बहु । दहेत् ॥ ५ ॥

भाष्यम्— यथेति । सोम्य हे सोम्य ! यथा येनप्रकारेण महतः । अभ्याहितस्य । इन्धनैः समृद्धस्य अग्नेः। खद्योतमात्रम् । खद्योत ज्वलदग्निकीटविशेषः । स प्रमाणमस्येति खद्योतमात्रस्तस्य " प्रमाणे द्वयसज् दघ्नच् मात्रचः ५ । २ । ३७ ॥ इति मात्रच् प्रत्ययः " परिशिष्टं अवशिष्टम् । तमेकमङ्गारम् । तृणैः शुष्कैरेधोभिः चूर्णितैर्लघुभिर्वनस्पतिभिः । उपसमाधाय संयोज्य। प्राज्वलयेत् प्रदीपयेत् । वर्धयेत् । तर्हि तेन समिद्धेनाङ्गारेण । ततोपि पूर्वपरिमाणात् । बहु । दहेत् । बहुभस्मसात्कुर्यात् ॥ ५ ॥

अनुवाद-हे सौम्य! जैसे बड़े और वृद्धि को प्राप्त अग्नि के उस खद्योतमात्र परिशिष्ट एक अंगार को तृणों से संयुक्तकर कोई प्रज्वलितकरे तो उससे अग्नि उससे भी अधिक को जला सकता है ॥ ५ ॥

पदार्थः—( सोम्य ) हे सौम्य !( यथा ) जैसे ( महतः ) बहुज्वाला संयुक्त और ( अभ्याहितस्य ) इन्धनों से प्रवर्धित अग्नि का (तम्) उस ( खद्योतमात्रम्+परिशिष्टम् ) खद्योत समान अवशिष्ट ( एकम्+अङ्गारम् ) एक अङ्गारको (तृणैः) शुष्कचूर्णित छोटे २ वनस्पतियों से (उपसमाधाय) संयुक्तकर ( प्राज्वलयेत् ) प्रदीप्त करे तो (तेन)

उस अङ्गार से ( ततः+अपि ) उस से भी ( बहु ) बहु परिमाण वाले को ( दहेत् ) अग्नि जला सकता ॥ ५ ॥

**एवꣳ सोम्य ! ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत्साऽन्नेनोपसमाहिता प्राज्वालीत्तयैतर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य ! मन आपोमयः प्राणस्तेजोमयी वागिति ! तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥**

एवम् । सोम्य । ते । षोडशानाम् । कलानाम् । एका । कला । अतिशिष्टा । अभूत् । सा । अन्नेन । उपसमाहिता । प्राज्वालीत् । तया । एतर्हि । वेदान् । अनुभवस्यासि । अन्नमयम् । हि । सोम्य । मनः । आपोमयः । प्राणः । तेजोमयी । वाक् । इति । तत् । ह । अस्य । विजज्ञौ । इति । विजज्ञौ इति ॥ ६ ॥

भाष्यम्—एवमिति । यथातृणैर्वर्धितः सोऽवशिष्टोऽङ्गारो बहुदहति । एवमेव हे सोम्य ! ते तव षोडशानांकलानां मध्ये एकाकला । अतिशिष्टा । अवशिष्टा । अभूत् । सा पश्चादन्नेन उपसमाहिता उपचिता वर्धिता सती । प्राज्वालीत् । अग्निवत् प्रज्वलिता उपचिताबभूव । तया अन्नेन वर्धितया एकयाऽवशिष्टया कलया । एतर्हि । अधुना । वेदान् अनुभवसि । उपलभसे । एवं व्यावृत्त्यनुवृत्तिभ्यामन्नमयत्वं मनसः सिद्धमित्युपसंहरति । अन्नमयमित्यादि । हे सोम्य अनेनप्रघट्टकेनेदं सिद्धम् । यन्मनः । अन्नमयम् । अन्नेनैवमनसोवृद्धिः । अन्नाभावेअकिञ्चित्करं तद्भवति । हे सोम्य ! यथा तवैतन्मनसो अन्नमयत्वं सिद्धं तथैव त्वं विजानीहि यत् । प्राण आपोमयोस्ति । जलमयो वर्त्तते जलेन सम्पन्नः सन्प्राणः कार्यसाधकः । एवमेव वाग्वाणी तेजोमयीवर्तते । इति । पित्रासम्बोधितः श्वेतकेतुः । विजज्ञौ । मनसोऽन्नमयत्वम् प्राणस्याम्मयत्वम् । वाचस्तेजोमयत्वं विज्ञातवान् । द्विरभ्यासः प्रकरणसमाप्त्यर्थः ॥ ६ ॥

इति सप्तमखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ७ ॥

अनुवाद–हे सौम्य वैसे ही तेरी षोडश ! कलाओं में से एककला अवशिष्ट रहगई थी । वह अन्न से प्रवर्धित होकर फिर प्रज्वलित हुई । उस से अब वेदों को तुम समझते हो । हे सौम्य ! क्योंकि अन्नमय मन, जलमय प्राण और तेजोमयी वाणी है । पिता के इस वचन को उसने जाना, उसने जाना ॥ ६ ॥

पदार्थः-( सोम्य ) हे सौम्य! ( एवम् ) जैसे अग्नि का अवशिष्ट एक अङ्गार तृणों से युक्त होकर प्रज्वलित होता है। वैसे ही ( ते ) तेरी ( षोडशानाम् ) षोडश ( कलानाम् ) कलाओं में से ( एकाकला ) एककला (अवशिष्टा+अभूत्) अवशिष्ट अर्थात् बाकी रह गई थी ( सा ) वह अवशिष्ट कला ( अन्नेन ) अन्न से ( उपसमाहिता ) वर्धित हो ( प्राज्वालीत् ) पुनः अग्निवत् प्रज्वलित हो गई और ( एतर्हि ) इस समय ( तया ) अन्न से प्रवर्द्धित उस कला से ( वेदान् ) वेदों को (अनुभवति) समझते हो अब इतने वर्णन से क्या विषय निकला सो कहते हैं ( हि ) क्योंकि ( सोम्य ) हे सौम्य ( मनः+अन्नमयम् ) मन अन्न मय है अर्थात् अन्न से ही इसकी वृद्धि होती है। अतः अन्न के विना मन अकिञ्चित्कर हो जाता है हे सौम्य! जिस प्रकार प्रत्यक्ष उदाहरण से तुमको अन्नमय मन है। यह सिद्ध हुआ वैसा ही यह भी समझो कि (प्राणः+आपोमयः) प्राण जलमय है और ( वाग्+तेजोमयी ) वाणी तेजोमयी है (अस्य) इस प्रकार समझाते हुए अपने पिता के ( तत्+ह ) उस वचन को ( विजज्ञौ ) श्वेतकेतु ने समझा ( विजज्ञौ ) समझा ( इति ) ॥ ६ ॥

इति सप्तम खण्डस्य भाषाभाष्यं समाप्तम् ॥ ७ ॥

## अथाष्टमः खण्डः

**उद्दालकोहारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳह्यपीतो भवति ॥१॥**

उद्दालकः । ह । आरुणिः । श्वेतकेतुम् । पुत्रम् । उवाच । स्वप्नान्तम् । मे । सौम्य । विजानीहि । इति । यत्र । एतत् । पुरुषः । स्वपिति । नाम । सता । सोम्य । तदा । सम्पन्नः । भवति । स्वम् । अपीतः । भवति । तस्मात् । एनम् । स्वपिति । इति । आचक्षते । स्वम् । हि । अपीतः । भवति ॥ १ ॥

भाष्यम्-उद्दालक इति। हेति किलार्थः। आरुणिरुद्दालकः पुत्रं श्वेतकेतुमुवाच किल। हे सोम्य सौम्य! मे मम व्याचक्षाणस्य सकाशात्। स्वप्नान्तम्। सुषुप्तम्। विजानीहि। विस्पष्टमवधारय। स्वप्नमन्तयति विनाशयति स स्वप्नान्तः। कदा स्वप्नान्तो भवतीत्युच्यते। यत्र यस्मिन् काले सुषुप्तस्य पुरुषस्य "स्वपिति" एतन्नामभवति। सुषुप्तावस्थां यदा पुरुषः प्राप्नोति तस्य स्वपिति इति नामधेयं भवति। हे सोम्य तदा तस्मिन् काले पुरुष

आत्मा सता सच्छब्दवाच्येन ब्रह्मणा सह सम्पन्नः सङ्गतो भवति। अयंभावः । ब्रह्मऽऽनन्देन सह सम्पन्नो भवति । यद्वा । सुषुप्त्यवस्थायां सता सद्रूपेण विद्यमानेन स्वात्मना-सह सम्पन्नो भवति। सम्पूर्णं दिनं रात्रौ स्वप्नपर्य्यन्तञ्च एष जीवः प्रतिक्षणं मनसा सार्धमितश्चेतश्च बहून् असंख्येयान् विषयान् प्रति धावति । अतोऽतिचञ्चलत्वाद् आनन्दं नानुभवति । यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति । तत् सुषुप्तं यदा आत्मा प्राप्नोति तदा स्वस्थः सन् आनन्दघनं विन्दति । स्वपितिपदं व्युत्पादयति । यत आत्मा "स्वमपीतोभवति" स्वमात्मानम्+अपीतो गतइति स्वमपीतोभवति । सर्वान् व्यापारान् संहृत्य स्वकीयमात्मानं प्राप्नोति । तस्माद्धेतोर्जनाः । एनमात्मानं "स्वपिति" इत्याचक्षते । पुनस्तदेव विस्पष्टयति । स्वं हि अपीतो गतो भवति । अपि पूर्वकाद् इतेर्धातोः क्त प्रत्यये अपीत इति रूपम् । स्वमपीतः स्वापीतः । यदास्वापीतः पुरुषो भवति । तदा तस्य "स्वपिति" इति नाम स्यात् । पृषोदरादीनि यथोपादिष्टम्। ६ । ३ । १०९ ॥ इति साधुः ॥ १ ॥

अनुवाद—आरुणि उद्दालक अपने पुत्र श्वेतकेतु से बोले कि हे सौम्य? मुझ से सुषुप्ति की विद्या सीखो जिस अवस्था में ( पुरुष का ) "स्वपिति" नाम होता है तब पुरुष ब्रह्मानन्द के साथ सम्मिलित होता है । यद्वा । तब पुरुष निज आत्मा से सम्मिलित होता है ( अर्थात् ) स्वस्थ ( अपने में ) होकर परमानन्द को प्राप्त होता है जिस हेतु पुरुष अपने को प्राप्त होता है इस हेतु इसको "स्वपिति" विद्वान् लोग कहते हैं क्योंकि वह अपने में ही प्राप्त होता है ॥ १ ॥

पदार्थः—( ह ) यह प्रसिद्ध है कि किसी समय ( आरुणिः ) अरुण के पुत्र ( उद्दालकः ) उद्दाकल नाम मुनि ( श्वेतकेतुम्+पुत्रम् ) श्वेतकेतु पुत्र से (उवाच) बोले कि ( सोम्य ) हे सौम्य? ( मे ) मुझ से ( स्वप्नान्तम् ) सुषुप्ति अवस्था की विद्या को ( विजानीहि+इति ) सीखो ( यत्र ) जिसकाल में पुरुष का (एतत् ) यह ( स्वपिति ) स्वपिति ( नाम ) नाम होता है ( तदा ) उसकाल में ( पुरुषः) पुरुष ( सता ) ब्रह्मके साथ वा ब्रह्मानन्द के साथ वा अपने साथ ( सम्पन्नः ) सम्मिलित होता है वह स्वपिति नाम वाला क्यों होता है सो आगे दिखलाते हैं । वह पुरुष (स्वम् ) अपने को ( अपीतः+भवति ) प्राप्त होता है ( तस्माद् ) उस हेतु ( एनम् ) इस पुरुष को ( स्वपिति+इति+आचक्षते ) स्वपिति ऐसा कहते हैं । पुनः उसीको विस्पष्ट करते हैं ( हि ) क्योंकि ( स्वम्+अपीतः+भवति ) अपने को प्राप्त होता है अर्थात् अपने स्वरूप में स्थित होता है ॥ १ ॥

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य! तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳ हि सोम्य मन इति ॥ २ ॥**

सः । यथा । शकुनिः । सूत्रेण । प्रबद्धः । दिशम् । दिशम् । पतित्वा । अन्यत्र । आयतनम् । अलब्ध्वा । बन्धनम् । एव । उपश्रयते । एवम् । एव । खलु । सोम्य । तत् । मनः । दिशम् । दिशम् । पतित्वा । अन्यत्र । आयतनम् । अलब्ध्वा । प्राणम् । एव । उपश्रयते । प्राणबन्धनम् । हि । सोम्य । मनः । इति ॥ २ ॥

भाष्यम्—स इति । दृष्टान्तेन स्वप्नान्तं स्वपुत्रं बोधयति । यथा स शकुनिः । सुप्रसिद्धः शकुनिर्विहगः । सूत्रेण प्रबद्धः व्याधस्यहस्तगतेनसूत्रेणजालेन पाशितःसन् । दिशंदिशं प्रतिदिशं यथाशक्ति पतित्वा । बन्धनमोक्षार्थमितस्ततो जाले उड्डीय । अन्यत्र सूत्रादन्यत्रायतनमाश्रयम् । अलब्ध्वा अप्राप्य । पुनर्बन्धनमेव । उपश्रयते । प्राप्नोति बध्यतेऽनेन बन्धन सूत्रेणेत्यर्थः । हे सोम्य? एवमेव यथायंदृष्टान्तोऽस्ति । तथैव तन्मनः तत् मनस्थः पुरुषः । मञ्चाक्रोशवन्मनःशब्देन मनस्थः पुरुषो गृह्यते । स मनस्थः पुरुषः । जागरणस्वप्नावस्थयोः । दिशंदिशं प्रतिदिशं विषयंविषयं पतित्वा । अन्यत्रायतनमाश्रयम् । अलब्ध्वा अप्राप्य । प्राणं स्वसत्तामेव । यद्वा । ब्रह्मानन्दमेव उपश्रयते । प्राप्नोति । हि यतः । मनो मनस्थ आत्मा । प्राणबन्धनं विद्यते । प्राणः स्वसत्ता ब्रह्मानन्दो वा बन्धनं यस्य तत्प्राणबन्धनम् ॥ २ ॥

अनुवाद—जैसे वह पक्षी सूत्र से प्रतिबद्ध हो प्रतिदिशा को गिरकर अन्यत्र आश्रय न पाकर पुनः बन्धन को ही प्राप्त होता है । हे सौम्य ! वैसे ही वह मनस्थ आत्मा प्रतिदिशा में विषय २ के प्रति धावनकर अन्यत्र आश्रय न पाकर फिर स्वसत्ता को ही प्राप्त होता है क्योंकि प्राणबन्धन आत्मा है ॥ २ ॥

पदार्थः—( यथा ) जैसे ( सः+शकुनिः ) वह पक्षी ( सूत्रेण ) व्याधा के हस्तगत जालसे ( प्रबद्धः ) बद्ध होकर ( दिशम्+दिशम् ) चारोंतरफ ( पतित्वा ) गिरकर ( अन्यत्र ) उस सूत्र से अन्यत्र ( आयतनम् ) आश्रय को ( अलब्ध्वा ) न पाकर ( बन्धनमेव ) उस बन्धन को ही ( उपश्रयते ) प्राप्त होता है ( एवम्+एव ) जैसे यह दृष्टा-

न्त है वैसेही ( सोम्य ) हे सौम्य ! ( खलु ) निश्चय ( तन्मनः ) वह मनस्थ पुरुष= आत्मा ( दिशम् २ ) प्रतिदिशाको ( पतित्वा ) विषय २ के प्रति जाकर ( अन्यत्र+ आयतनम्+अलब्ध्वा ) अन्यत्र विश्राम न पाकर ( प्राणम्+एव ) अपनी स्वसत्ता को वा प्राण शब्दवाच्य उस सत् ब्रह्म को ( उपश्रयते ) प्राप्त होता है (सोम्य ) हे सौम्य ! ( हि ) क्योंकि ( मनः ) मनस्थ आत्मा ( प्राणबन्धनम् ) प्राणबन्धनवाला है । प्राण स्वसत्ता वा ब्रह्मानन्द ही है बन्धन जिसका ॥ २ ॥

**अशनापिपासे मे सोम्य ! विजानीहीति । यत्रैतत्पुरुषोऽशिशिषति नामाऽऽप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनाय पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य ! विजानीहि । नेदममूलं भविष्यतीति ॥ ३ ॥**

अशनापिपासे । मे । सोम्य । विजानीहि । इति । यत्र । एतत् । पुरुषः । अशिशिषति । नाम । आपः । एव । तद् । अशितम् । नयन्ते । तद् । यथा । गोनायः । अश्वनायः । पुरुषनायः । इति । एवम् । तद् । अपः । आचक्षते । अशनाय । इति । तत्र । एतत् । शुङ्गम् । उत्पतितम् । सोम्य । विजानीहि । न । इदम् । अमूलम् । भविष्यति । इति ॥ ३ ॥

भाष्यम्--अशनेति । अशनापिपासे । अशितुं भोक्तुमिच्छा अशना । पातुमिच्छापिपासा । अशनाच पिपासा च अशनापिपासे । हे सोम्य ! सोममर्हति यः स सोम्यः । मे मम निगदतः सकाशाद् । अशनापिपासे अशनापिपासाविद्ये । विजानीहि विशेषेणावधारय । यत्र यस्मिन्काले अशना समये पुरुषस्यैतन्नाम भवति । किंतन्नामेत्याह । "अशिशिषति" इत्येतन्नामजायते । यतोऽशितुं भोक्तुमिच्छति । अतः "अशिशिषति" इतिनाम । पुरुष एव भोक्तुमिच्छति । अतः "अशिशिषति" इति नामान्वर्थकं गौणञ्च भवति । यद्वा । यत्र येन कारणेन । पुरुषः । एतदन्नम् । अशिशिषतिनाम । नामेतिवाक्यालङ्कारार्थे । यतः पुरुषोऽशितुमिच्छति । अतः पुरुषस्याऽन्नादशाभवितुमर्हति । अथाऽऽपएव भुक्तंवस्तु यथास्थानं नयन्तीति दर्शयितुं प्रकरणमारभते । हे सोम्य ! तदशितं पुरुषेण भुक्तंवस्तु । आपोजलमेव नयन्ते । नाडीसहायका पीता आप एव सर्वत्र भुक्तमन्नं द्रवीकृत्य रसादिभावेन विपरिणमयन्ते तत्तस्माद्धेतोः । अपो जलम् । अशनायेत्याचक्षते । अशनायेति अश-

नाय इति अशनाया इतियावत् । तत्त्वविद् आचक्षते व्याकुर्वते । अयंभावः । यतोऽशनाया नेत्र्य आपो भवन्ति अतस्ता अशनाया उच्यन्ते । अशनमशः । अशंनयन्ति यास्ता अशनायाः । अशनाया इति वक्तव्येऽशनायेति विसर्गलोपेनसन्धिरार्षः । अत्रदृष्टान्तानाह । तद्यथा तत्तत्रेमे दृष्टान्ताः । गोनायो गांनयति यः स गोनायो गोपालकः खलु गोनेतृत्वाद् गोनाय इत्युच्यते । अश्वनायः अश्वंनयति यः सोऽश्वनायः । अश्वपालोऽश्वनेतृत्वादश्वनाय इत्युच्यते । पुरुषनायः पुरुषान् मनुष्यान् वीरांन्वा नयति यः स पुरुषनायो राजासेनापतिर्वा पुरुषनेतृत्वात् पुरुषनाय इत्युच्यते । इत्येवम् । अमुना प्रकारेण पूर्वोक्त दृष्टान्तवद् । आपोऽशनानेतृत्वादशनाया इत्युच्यन्ते । इत्थं जलेन सार्धं भुक्तं वस्तु जीर्य्यते । जीर्णेऽन्नेसति प्रकृत्या जीवो भोक्तुमिच्छति । अतोऽपि अशिशिषतीति पुरुषस्य गौणं नामधेयम् । तत्रैवंसति । अद्भीरसादिभावेन नीतेनाशितेनान्नेन निष्पादितमेतच्छरीरम् । वटकणिकायामिव शुङ्गः अङ्कुरोत्पातित उद्गतः । तमिमं शुङ्गं कार्य्यं शरीराख्यम् । वटादिशुङ्गवदुत्पतितं विजानीहि किं तत्र विज्ञेयमित्युच्यते । शृणु । शुङ्गवत्कार्य्यत्वाद् इदं शरीरं नामूलम् मूलरहितं न भविष्यति । अवश्यमेवतस्य शरीरस्यापि मूलं भविष्यति तन्मूलं त्वं जानीहि सोम्य ! ॥ ३ ॥

अनुवाद—हे सोम्य ! अशनाविद्या और पिपासाविद्या को मुझ से अच्छे प्रकार सीखो । जहां पुरुष का नाम "अशिशिषति" होता है ( क्योंकि पुरुष खाने की इच्छा करता है इस हेतु उसका यह "अशिशिषति" नाम होता है ) यद्वा जिस हेतु पुरुष खाने की इच्छा करता है इस हेतु पुरुष की अशना दशा होती है। उसे तुम मुझ से सीखो। पुरुष से अशित ( भुक्त ) अन्न को जलही ले जाते हैं इस हेतु जैसे ( गोपाल को ) गोनाय ( अश्वपालको ) अश्वनाय और ( राजा वा सेनानायक को ) पुरुषनाय कहते हैं वैसे ही ( अपः ) जलको विज्ञानी लोग अशनाय कहते हैं। हे सोम्य ! इस उत्पन्न हुए शुङ्ग ( देहरूप कार्य्य ) को विस्पष्ट रूप से जानो । यह ( देहरूप कार्य्य ) निर्मूल नहीं होगा ॥ ३ ॥

पदार्थः-( सोम्य ) हे सौम्य ! चन्द्रवत् प्रियपुत्र (अशना+पिपासे) अशना=भूख। पिपासा=प्यास तत्सम्बन्धी विद्या को ( मे ) मुझ से ( विजानीहि ) विस्पष्टरूपसे जानो ( इति ) ( यत्र ) जिस काल में जिस कारण ( पुरुषः ) पुरुष ( अशिशिषति ) खाने की इच्छा करता है भूखा होता है इस हेतु उस पुरुष का ( नाम ) नाम ( अशिशिषति ) अशिशिषति होता है । अब इस प्रकार इतने अंश की व्याख्या करनी चाहिये कि ( यत्र ) जिस हेतु ( पुरुषः ) पुरुष ( अशिशिषति+नाम ) खाने को इच्छता है

इस हेतु पुरुष की अशना दशा होती है ( तदशितम् ) पुरुष से भुक्त अन्नको (आपः+एव ) पीये हुए जल ही ( नयन्ते ) द्रव बनाकर रसादि भाव से शरीर के अवयवों में पहुंचाया करते हैं तब वह भुक्त अन्न जीर्ण हो जाता है। अन्न जीर्ण होने से वह पुरुष भूखा होता है। और जिस कारण जल भुक्त अन्न को शरीरावयवों में पहुंचाया करता है ( तद् ) उस कारण ( अपः ) जल को ( अशनाय+इति ) अशनाय ऐसा ( आचक्षते ) विद्वान् लोग कहते हैं। यहां दृष्टान्त देते हैं ( तद्यथा ) जैसे गोपालक को ( गोनायः ) गोनाय कहते हैं। अश्वपाल को ( अश्वनायः ) अश्वनाय कहते हैं। राजा या सेनापति को ( पुरुषनायः ) पुरुषनाय कहते हैं ( इत्येवम् ) इसी प्रकार जल को अशनाय कहते हैं ऐसा अन्वय करना। आगे इस अशित अन्न से उत्पन्न शरीर के विषय में कहते हैं ( सोम्य ) हे सौम्य ! ( उत्पतितम् ) उत्पत्ति को प्राप्त ( एतत् ) इस ( शुङ्गम् ) कार्य्य अर्थात् देहरूप कार्य्य को ( विजानीहि ) विस्पष्टरूप से जानो इति ( इदम् ) यह देहरूप कार्य्य ( अमूलम् ) मूलरहित ( न+भविष्यति ) नहीं होगा इस शरीर का जो मूल कारण है उसे जानो ॥ ३ ॥

**तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य ! शुङ्गेन तेजो मूलमन्विच्छ। तेजसा सोम्य ! शुङ्गेन सन्मूलमन्विच्छ। सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥**

तस्य। क्व। मूलम्। स्यात्। अन्यत्र। अन्नात्। एवम्। एव। खलु। सोम्य। अन्नेन। शुङ्गेन। अपः। मूलम्। अन्विच्छ। अद्भिः। सोम्य। शुङ्गेन। तेजः। मूलम्। अन्विच्छ। तेजसा। सोम्य। शुङ्गेन। सत्। मूलम्। अन्विच्छ। सन्मूलाः। सोम्य। इमाः। सर्वाः। प्रजाः। सदायतनाः। सत्प्रतिष्ठाः ॥ ४ ॥

भाष्यम्—तस्येति। नेदममूलं भविष्यतीति पूर्वमुक्तम्। मूलमिदानीमाह। हे श्वेतकेतो ! अन्नात् अन्नोपलक्षिताया पृथिव्याः अन्यत्र विना तस्य क्व मूलं स्यात्। अन्नमेव तस्य शरीरस्यमूलमित्यर्थः। कथम्। अशितंह्यन्नं जलेन द्रवीकृतं जाठरेणाग्निना पच्यमानं रसादिभावेन परिणमते। रसाच्छोणितात् मांसं मांसान्मेदो मेदसोऽस्थीन्यस्थिभ्यो मज्जा

मज्जातः शुक्रम् । इत्थं शरीरमिदं अन्नकार्यमिति सिद्धयति । एवमेव खलु सोम्य ! अन्नेन शुङ्गेण, अन्न रूपेन कार्य्येण अपोमूलं जलरूपं कारणं जानीहि । अन्नस्य जलकारणत्वात् । हे सोम्य ! अद्भिः शुङ्गेन जल रूपेण कार्य्येण तेजो मूलमन्विच्छ । अपां तेजः कारणत्वात् । तेजसा शुङ्गेन कार्येण सोम्य सन्मूलं मूलांप्रकृतिं जानीहि । सर्वेषां प्रकृति कारणत्वात् । अग्रे सद्वर्णयति । सद्रूपं कारणं कीदृशं वर्तत इत्यत आह । हे सोम्य ! इमाः सर्वा प्रजाः सन्मूलाःसन्ति सतीप्रकृतिः मूलं मूलकारणं यासां ताः सन्मूलाः । पुनस्सदायतनाः । सतीमूलप्रकृति आयतनमाश्रयो यासां ताः । पुनः सत्प्रतिष्ठाः । सत्येव मूल प्रकृतिरेव प्रतिष्ठा स्थितिर्यासांताः ॥ ४ ॥

अनुवाद–अन्न से अन्यत्र उसका मूल कहां होसकता है हे सौम्य ! वैसा ही अन्न रूप पृथिवी कार्य से जलरूप मूल कारण को जानो । हे सौम्य ! कार्य रूप जल से तेज रूप मूल कारण को जानों । हे सौम्य ! तेजो रूप कार्य से सद्रूप कारण जो प्रकृति उस को जानो यही सद्रूपा प्रकृति सब जगत् का मूल घर और स्थिति वा स्थान है ॥ ४ ॥

पदार्थः-पूर्व में कहागया है कि इस कार्य शरीर का कोई कारण अवश्य होगा इस हेतु अब कारण दिखलाते हैं ( अन्नात् ) अन्न अर्थात् पृथिवी से ( अन्यत्र ) दूसरा ( तस्य ) उस कार्य शरीर का ( मूलम्+क्व+स्यात् ) मूल कहां होगा अर्थात् इस कार्य शरीर का मूल कारण पृथिवी है ( एवमेव ) वैसे ही ( सोम्य ) हे सौम्य ! (खलु) निश्चय ( अन्नेन ) अन्न आर्थात् पृथिवी रूप ( शुङ्गेन ) कार्य से ( अपोमूलम् ) जलरूप कारण को ( अन्विच्छ ) जानो ( सोम्य+अद्भिः+शुङ्गेन ) हे सोम्य ! जलरूप कार्य्य से ( तेजः+मूलम्+अन्विच्छ ) तेजरूप मूल कारण को जानो ( सोम्य+तेजसः+शुङ्गेन ) हे प्रियपुत्र श्वेतकेतु ! तेज रूप कार्य से ( सत्+मूलम्+आन्विच्छ ) सत् रूप कारण को जानो सत् नाम यहां प्रकृति का है ( सोम्य+इमाः+सर्वाः+प्रजाः ) हे सौम्य ! ये सम्पूर्ण प्रजाएं ( सन्मूलाः ) प्रकृति मूलक ( सदायतनाः ) प्रकृति आश्रयक और (सत्प्रतिष्ठः) प्रकृति में स्थित होनेवाली हैं । अर्थात् इन प्रजाओं का सत् ही मूल है । सत् ही आयतन=घर है और सत् ही प्रतिष्ठा स्थिति स्थान है ॥ ४ ॥

**अथ यत्रैतत्पुरुषः पिपासति नाम । तेज एव तत्पीतं नयते । तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति । तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य ! विजानीहि । नेदममूलं भविष्यतीति ।५।**

अथ । यत्र । एतत् । पुरुषः । पिपासति । नाम । तेजः । एव । तत् । पीतम् । नयते । तत् । यथा । गोनायः । अश्वनायः । पुरुषनायः । इति । एवम् । तत् । तेजः । आचष्टे । उदन्य । इति । तत्र । एतद् । एव । शुङ्गम् । उत्पतितम् । सोम्य । विजानीहि । न । इदम् । अमूलम् । भविष्यति । इति ॥ ५ ॥

भाष्यम्-अथेति । अथेदानीमप्शुङ्गद्वारेण सतोमूलस्यानुगम कार्य इत्यतआह । यत्र यस्मिन् काले पुरुषः पिपासति इत्येतत् नाम बिभर्ति यतः पुरुषः पातुमिच्छति अतस्तस्य पिपासतीतिनामधेयम् । अशिशिषतीतिवद्गौणं तन्नाम वर्तते । तत्पीतं पानीयं तेज एव नयते प्रापयति । तद्यथा लोके गोनेतृत्वात् गोनाय अश्वनेतृत्वादश्वनायः पुरुषनेतृत्वात् पुरुषनायश्च कथ्यते । इत्येवमनेनप्रकारेण तत्तेजः उदन्येतिउदन्यमिति उदानि वेति आचष्टेलोकः कथयति । उदकं नयतीति उदानि उदकनायकमित्यर्थः यथा यो गां नयति स गोनायो निगद्यते तथैव यतस्तेजोजलं इतस्ततोः नयति अतः उदानि अर्थात् उदकनायमिति निगद्यते । उदन्येति आर्ष प्रयोगः । तत्र तस्मिन् कारणे सति एतदेव एतञ्छरीररूपम् । उत्पतितं शुङ्गं कार्यं सोम्य विजानीहि । नेदममूलं भविष्यतीति ॥ ५ ॥

अनुवाद-अनन्तर जब यह पुरुष=जीवात्मा पीने की इच्छा करता है तब उसका "पिपासति" ऐसा नाम होता है उस पीत वस्तु को तैजस शक्ति ही शरीर में यथास्थान को ले जाती है । सो जैसे (गोपालक को) गोनाय (अश्वपालक को) अश्वनाय (राजा वा सेनापति को) पुरुषनाय कहते हैं वैसे ही उस तेज को उदन्य अर्थात् उदकनाय कहते हैं इस प्रकार उत्पन्न इस शरीर रूप कार्य को जानो निष्कारण यह नहीं होगा । ५ ॥

पदार्थः-( अथ ) अब ( यत्र ) जिस समय ( पुरुषः ) जीवात्मा ( एतत् ) इस जलादि वस्तु को ( पिपासति ) पीना चाहता है उस समय ( पिपासति+नाम ) पुरुष का पिपासति ऐसा नाम होता है ( तत्+पीतम् ) उस पीये हुए वस्तु को ( तेजः+एव ) तैजस शक्ति ही ( नयते ) शरीर के यथास्थान में पहुंचाती है इस हेतु (तत्तेजः ) उस तेज को ( उदन्य+इति+आचष्टे ) उदन्य अर्थात् उदकनायक कहते हैं क्यों कि जल को इधर उधर यह लेजाता है । इस में दृष्टान्त कहते हैं ( तद्यथा ) सो जैसे ( गोनायः ) गायों के नायक अर्थात् इधर उधर लेजाने वाले को गोनाय ( अश्वनायः ) घोड़े के नेता को अश्वनाय ( पुरुषनायः ) पुरुषों के नेता को पुरुषनाय कहते हैं ( इत्येवम् ) वैसे ही तेज को उदकनाय कहते हैं ( तत्र ) इस प्रकार (एतत्+एव+उत्पतितम्+शुङ्गम् ) इस उत्पन्न शरीररूप कार्य को ( सोम्य+विजानीहि ) हे प्रिय पुत्र ! जानो ( न+इदम्+अमूलम्+भविष्यति+इति ) यह निर्मूल नहीं होगा ॥ ५ ॥

मज्जातः शुक्रम् । इत्थं शरीरमिदं अन्नकार्यमिति सिद्धयति । एवमेव खलु सोम्य ! अन्नेन शुङ्गेण, अन्न रूपेन कार्य्येण अपोमूलं जलरूपं कारणं जानीहि । अन्नस्य जलकारणत्वात् । हे सोम्य ! अद्भिः शुङ्गेन जल रूपेण कार्य्येण तेजो मूलमन्विच्छ । अपां तेजः कारणत्वात् । तेजसा शुङ्गेन कार्येण सोम्य सन्मूलं मूलांप्रकृतिं जानीहि । सर्वेषां प्रकृति कारणत्वात् । अग्रे सद्वर्णयति । सद्रूपं कारणं कीदृशं वर्तत इत्यत आह । हे सोम्य ! इमाः सर्वा प्रजाः सन्मूलाःसन्ति सतीप्रकृतिः मूलं मूलकारणं यासां ताः सन्मूलाः । पुनस्सदायतनाः । सतीमूलप्रकृति आयतनमाश्रयो यासां ताः । पुनः सत्प्रतिष्ठाः । सत्येव मूल प्रकृतिरेव प्रतिष्ठा स्थितिर्यासांताः ॥ ४ ॥

अनुवाद–अन्न से अन्यत्र उसका मूल कहां होसकता है हे सौम्य ! वैसा ही अन्न रूप पृथिवी कार्य से जलरूप मूल कारण को जानो । हे सौम्य ! कार्य रूप जल से तेज रूप मूल कारण को जानों । हे सौम्य ! तेजो रूप कार्य से सद्रूप कारण जो प्रकृति उस को जानो यही सद्रूपा प्रकृति सब जगत् का मूल घर और स्थिति वा स्थान है ॥ ४ ॥

पदार्थः-पूर्व में कहागया है कि इस कार्य शरीर का कोई कारण अवश्य होगा इस हेतु अब कारण दिखलाते हैं ( अन्नात् ) अन्न अर्थात् पृथिवी से ( अन्यत्र ) दूसरा ( तस्य ) उस कार्य शरीर का ( मूलम्+क्व+स्यात् ) मूल कहां होगा अर्थात् इस कार्य शरीर का मूल कारण पृथिवी है (एवमेव) वैसे ही ( सोम्य ) हे सौम्य ! (खलु) निश्चय ( अन्नेन ) अन्न आर्थात् पृथिवी रूप ( शुङ्गेन ) कार्य से ( अपोमूलम् ) जलरूप कारण को ( अन्विच्छ ) जानो ( सोम्य+अद्भिः+शुङ्गेन ) हे सोम्य ! जलरूप कार्य्य से ( तेजः+मूलम्+अन्विच्छ ) तेजरूप मूल कारण को जानो ( सोम्य+तेजसः+शुङ्गेन ) हे प्रियपुत्र श्वेतकेतु ! तेज रूप कार्य से ( सत्+मूलम्+आन्विच्छ ) सत् रूप कारण को जानो सत् नाम यहां प्रकृति का है ( सोम्य+इमाः+सर्वाः+प्रजाः ) हे सौम्य ! ये सम्पूर्ण प्रजाएं ( सन्मूलाः ) प्रकृति मूलक ( सदायतनाः ) प्रकृति आश्रयक और (सत्प्रतिष्ठः) प्रकृति में स्थित होनेवाली हैं । अर्थात् इन प्रजाओं का सत् ही मूल है । सत् ही आयतन=घर है और सत् ही प्रतिष्ठा स्थिति स्थान है ॥ ४ ॥

**अथ यत्रैतत्पुरुषः पिपासति नाम । तेज एव तत्पीतं नयते । तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति । तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य ! विजानीहि । नेदममूलं भविष्यतीति ।५।**

अथ । यत्र । एतत् । पुरुषः । पिपासति । नाम । तेजः । एव । तत् । पीतम् । नयते । तत् । यथा । गोनायः । अश्वनायः । पुरुषनायः । इति । एवम् । तत् । तेजः । आचष्टे । उदन्य । इति । तत्र । एतद् । एव । शुङ्गम् । उत्पतितम् । सोम्य । विजानीहि । न । इदम् । अमूलम् । भविष्यति । इति ॥ ५ ॥

भाष्यम्—अथेति । अथेदानीमप्शुङ्गद्वारेण सतोमूलस्यानुगम कार्य इत्यतआह । यत्र यस्मिन् काले पुरुषः पिपासति इत्येतत् नाम बिभर्ति यतः पुरुषः पातुमिच्छति अतस्तस्य पिपासतीतिनामधेयम् । अशिशिषतीतिवद्गौणं तन्नाम वर्तते । तत्पीतं पानीयं तेज एव नयते प्रापयति । तद्यथा लोके गोनेतृत्वात् गोनाय अश्वनेतृत्वादश्वनायः पुरुषनेतृत्वात् पुरुषनायश्च कथ्यते । इत्येवमनेनप्रकारेण तत्तेजः उदन्येतिउदन्यमिति उदानि वेति आचष्टेलोकः कथयति । उदकं नयतीति उदानि उदकनायकमित्यर्थः यथा यो गां नयति स गोनायो निगद्यते तथैव यतस्तेजोजलं इतस्ततोः नयति अतः उदानि अर्थात् उदकनायमिति निगद्यते । उदन्येति आर्ष प्रयोगः । तत्र तस्मिन् कारणे सति एतदेव एतच्छरीररूपम् । उत्पतितं शुङ्गं कार्यं सोम्य विजानीहि । नेदममूलं भविष्यतीति ॥ ५ ॥

अनुवाद—अनन्तर जब यह पुरुष=जीवात्मा पीने की इच्छा करता है तब उसका "पिपासति" ऐसा नाम होता है उस पीत वस्तु को तैजस शक्ति ही शरीर में यथास्थान को ले जाती है । सो जैसे (गोपालक को) गोनाय (अश्वपालक को) अश्वनाय (राजा वा सेनापति को) पुरुषनाय कहते हैं वैसे ही उस तेज को उदन्य अर्थात् उदकनाय कहते हैं इस प्रकार उत्पन्न इस शरीर रूप कार्य को जानो निष्कारण यह नहीं होगा । ५ ॥

पदार्थः—( अथ ) अब ( यत्र ) जिस समय ( पुरुषः ) जीवात्मा ( एतत् ) इस जलादि वस्तु को ( पिपासति ) पीना चाहता है उस समय ( पिपासति+नाम ) पुरुष का पिपासति ऐसा नाम होता है ( तत्+पीतम् ) उस पीये हुए वस्तु को ( तेजः+एव ) तैजस शक्ति ही ( नयते ) शरीर के यथास्थान में पहुंचाती है इस हेतु (तत्तेजः ) उस तेज को ( उदन्य+इति+आचष्टे ) उदन्य अर्थात् उदकनायक कहते हैं क्यों कि जल को इधर उधर यह लेजाता है । इस में दृष्टान्त कहते हैं ( तद्यथा ) सो जैसे ( गोनायः ) गायों के नायक अर्थात् इधर उधर लेजाने वाले को गोनाय ( अश्वनायः ) घोड़े के नेता को अश्वनाय ( पुरुषनायः ) पुरुषों के नेता को पुरुषनाय कहते हैं ( इत्येवम् ) वैसे ही तेज को उदकनाय कहते हैं ( तत्र ) इस प्रकार (एतत्+एव+उत्पतितम्+शुङ्गम् ) इस उत्पन्न शरीररूप कार्य को ( सोम्य+विजानीहि ) हे प्रिय पुत्र ! जानो ( न+इदम्+अमूलम्+भविष्यति+इति ) यह निर्मूल नहीं होगा ॥ ५ ॥

तस्य क्व मूलꣳस्यादन्यत्राद्भ्योऽद्भिः सोम्य ! शुङ्गेन तेजोमूलमन्विच्छ । तेजसा सोम्य ! शुङ्गेन सन्मूलमन्विच्छ । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य ! पुरुषस्य प्रयतो वाङ्मनसि संपद्यते । मनः प्राणे । प्राणस्तेजसि । तेजः परस्यां देवतायाम् । स य एषोऽणिमा ॥ ६ ॥

तस्य । क्व । मूलम् । स्यात् । अन्यत्र । अद्भ्यः । अद्भिः । सोम्य । शुङ्गेन । तेजः । मूलम् । अन्विच्छ । तेजसा । सोम्य । शुङ्गेन । सत् । मूलम् । अन्विच्छ । सन्मूलाः । सोम्य । इमाः । सर्वाः । प्रजाः । सदायतनाः । सत्प्रतिष्ठाः । यथा । तु । खलु । सोम्य । इमाः । तिस्रः । देवताः । पुरुषम् । प्राप्य । त्रिवृत् । त्रिवृत् । एकैका । भवति । तद् । उक्तम् । पुरस्तात् । एव । भवति । अस्य । सोम्य । पुरुषस्य । प्रयतः । वाक् । मनसि । संपद्यते । मनः । प्राणे । प्राणः । तेजसि । तेजः । परस्याम् । देवतायाम् । सः । यः । एषः । अणिमा ॥६॥

भाष्यम्— तस्येति । शरीराख्यस्य शुङ्गस्य मूलमाह । सोम्य ! अद्भ्योऽन्यत्र तस्य शरीरस्य क्व मूलं स्यात् । यथा पृथिव्या इदं शरीरं शुङ्गं वर्तते तथैव अपामपि इदं शरीरंशुङ्गमस्ति हे सोम्य ! एवमेव अद्भिः शुङ्गेन तेजो मूलमन्विच्छेत्यादि पूर्ववत् । हे सोम्य ! यथा तु खलु येन प्रकारेण इमा तेजोऽबन्नाख्यास्तिस्रोदेवताः पुरुषं प्राप्य एकैका त्रिवृत् त्रिवृत् त्रिगुणा २ भवति तदुक्तं पुरस्तादेव भवत्यस्य अस्य जीवस्य अन्नमाशितं त्रेधाभवतीत्यादि । अग्रे उत्क्रान्तिं दर्शयति । अस्य पुरुषस्य हे सोम्य ! प्रयतः म्रियमाणस्य वाक् वाणी मनसि मन इन्द्रिये संपद्यते उपसंह्रियते । अथ तदाहुर्ज्ञातयो न वदतीति । मनः पूर्वको हि वाग् व्यापारः यद्वै मनसाध्यायति तद्वाचावदतीति प्रमाणात् । वाच्युपसंह्रितायां मनसि व्यापारेण केवलेन वर्तते । मनोऽपि यदोपसंह्रियते तदामनः मन इन्द्रियं प्राणे मुख्ये प्राणे संपन्नं भवति । तदा पार्श्वस्था ज्ञातयो न विजानातीत्याहुः । मनसि उपह्रिते सति प्राणः तेजसि संपद्यते तदाहुर्ज्ञातो न चलतीति । ततस्तेजः

प्राणे उपहृते सति प्राणः तेजसि संपद्यते । मृतो नेति वा विचिकित्सन्तो देहमालभमाना उष्णञ्चोपलभमाना देह उष्णो जीवतीति यदा तदाप्यौष्ण्यलिङ्गं तेज उपसंह्रियते तदा तत्तेजः परस्यां देवतायां उपशाम्यति तदेवं क्रमेणोपसंह्रियते स्वमूलं प्राप्ते च मनसि तत्स्थो जीवोऽपि सुषुप्तकालवन्निमित्तोपसंहारादुपसंह्रियमाणः सन् सत्याभिसन्धिपूर्वकं चेदुपसंह्रियते सदेव संपद्यते न पुनर्देहान्तराय सुषुप्तादिवोत्तिष्ठति । यथा लोके सभये देशे वर्त्तमाना कथञ्चिदेवाभयं देशं प्राप्तस्तद्वत् । इतरस्त्वनात्मज्ञस्तस्मादेवमूलात् सुषुप्तादिवोत्थाय मृत्वा पुनर्देहजालमाविशति । यस्मान्मूलादुत्थाय देहमाविशति जीवः । स य एषोऽणिमेति क्वचित्पुस्तके सप्तमप्रवाकेणसार्धं पठितम् । अणोर्भावोऽणिमा । अत्र अणीयानित्यस्मिन्नर्थे प्रयुक्तोस्ति । यत्र तेजः सम्पद्यते स कोऽस्तीति प्रश्ने एषोऽणिमेत्युत्तरम् । स अणीयान्परमेश्वरोऽस्ति ॥ ६ ॥

अनुवाद—जल के अतिरिक्त उसका मूल कारण कहां होगा ? हे सोम्य ! जलरूप कार्य से तेज रूप कारण जानो । हे सोम्य ! तेजो रूप कार्य से सद्रूप अर्थात् प्रकृति रूप कारण को जानो । हे सोम्य ! ये सम्पूर्ण प्रजाएं सन्मूल सदायतन सत्प्रतिष्ठावाली हैं । सौम्य ! और जैसे ये तीनों देवता पुरुष को प्राप्त करके एक २ त्रिवृत् २ होते हैं इस विषय को हमने पहिले ही कहा । हे सोम्य ! मरने के समय पुरुष की वाणी मन में लीन होती है और मन प्राण में और प्राण तेज में और तेज परम देवता में लीन होता है । सो जो यह अणुतर है ॥ ६ ॥

पदार्थः—पूर्व में कहा है कि इस कार्य रूप शरीर का कोई कारण अवश्य होगा सो कारण आगे कहते हैं ( अद्भ्यः+अन्यत्र ) जल को छोड़ कर ( तस्य+क्व+मूलम्+स्यात् ) उसका मूल कारण कहां होगा अर्थात् इस शरीर का जल भी मूल कारण है ( सोम्य+अद्भिः+शुङ्गेन ) हे सोम्य ! जल रूप कार्य से ( तेजः+मूलम्+अन्विच्छ ) तेज रूप मूल कारण को जानो ( सोम्य+तेजसा+शुङ्गेन ) हे सोम्य ! तेज रूप कार्य से ( सत्+मूलम्+अन्विच्छ ) सत् अर्थात् प्रकृति रूप कारण को जानो अब आगे प्रकृति का वर्णन करते हैं ( सोम्य+इमाः+सर्वाः+प्रजाः ) हे सोम्य ये सम्पूर्ण प्रजाएं ( सन्मूलाः ) प्रकृति मूलवाली हैं ( सदायतनाः ) सत्—प्रकृति आयतन आश्रय वाली हैं (सत्+प्रतिष्ठाः ) प्रकृति में स्थित करने वाली हैं । आगे इस जीव की गति का वर्णन करते हैं ( यथा+तु+खलु+सोम्य ) हे सोम्य ! जैसे ही (इमाः+तिस्रः+देवताः) ये तीनों तेज, जल, और पृथिवी देवता ( पुरुषम्+प्राप्य ) जीवात्मा को प्राप्त करके ( एकैका ) एक २ ( त्रिवृत् २+भवति ) त्रिगुणा २ होते हैं ( तदुक्तम्+पुरस्तात्+एव ) इस विषय

को पूर्व ही कह चुके हैं ( भवति+अस्य ) इस पुरुष का जैसे खाया हुआ अन्न तीन प्रकार का होता है इत्यादि ( सोम्य+प्रयतः+पुरुषस्य ) म्रियमाण पुरुष जीव के ( मनसि+वाक्+संपद्यते ) मन में वाणी लीन हो जाती है ( प्राणे+मनः ) और प्राण में मन ( तेजसि+प्राणः ) तेज में प्राण ( परस्याम्+देवतायाम्+तेजः ) और परम देवता में तेज लीन होता है जिसमें तेज लीन होता है वह देवता कौन है सो आगे कहते हैं ( सः+यः ) सो जो ( एषः+अणिमा ) यह अणुभाव है अर्थात् जो अणुतर है उसी में तेज लीन होता है ॥ ६ ॥

**ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा "तत्त्वमसि" श्वेतकेतो! इति भूय एव मा भगवान् विज्ञापयत्त्विति । तथा सोम्येति होवाच ॥ ७ ॥**

ऐतदात्म्यम् । इदम् । सर्वम् । तत् । सत्यम् । सः । आत्मा । तत्त्वम् । असि । श्वेतकेतो । इति । भूयः । एव । मा । भगवान् । विज्ञापयतु । इति । तथा । सोम्य । इति । ह । उवाच ॥ ७ ॥

भाष्यम्—ऐतदात्म्यमिति । ऐतदात्म्यम् । एषा सदाख्या परा देवता आत्माजीवनं यस्य तदेतदात्म । तस्य भाव ऐतदात्म्यम् । यद्वा । एतदात्मैव ऐतदात्म्यम् । स्वार्थे प्रत्ययः । इदं सर्वं दृश्यादृश्यं जगद् । ऐतदात्म्यं वर्त्तते । एतया परया देवतया दैवजीवनेन संयुक्तमस्ति । तदिति पूर्वपरामर्शकं तत्पूर्वोक्तं जगद्बीजं सदेकरसं सद्वर्तमानं सच्छब्दवाच्यं ब्रह्म सत्यमस्ति अविनश्वरं वर्तते सत्यमिति ब्रह्मनाम । यद्वा । सत्यं सतीच संश्च इति सन्तौ प्रकृत्यात्मानौ । पुमान् स्त्रिया १ । २ । ६७ ॥ इति पुमान् शिष्यते । सतोर्भवः स्वव्याप्त्यास्थितम् । इति सत्यम् । सदित्यस्य विशेषणम् । सद्भ्यां प्रकृत्यात्मभ्यां हितम् । हितकरम् । इति सत्यम् । हे श्वेतकेतो ! यत्सत्यं वर्तते । स आत्मा आप्नोति व्याप्नोति सर्वम् । स आत्मा । यः सदाख्यः परमेश्वरः । तत् तत्त्वमसि । तत्त्वमस्ति । स एव सर्वव्यापी परमेश्वरः । एकं सेव्यमुपासनीयं तत्त्वं परमार्थं वस्तु विद्यते । तदेव तत्त्वं हे श्वेतकेतो ! विजानीहि । अतः परं नास्ति किमपि तत्त्वमित्येवं बोधितः श्वेतकेतुराह भगवान् पूजनीयो भवान् मा मां प्रति भूय एव पुनरेव विज्ञापयतु बोधयतु । न मम संदेहो निवृत्तोऽस्ति । इति पुत्रेण विज्ञापितआरुणिः तथास्तु हे सोम्येति होवाच । अत्र केचित् प्रत्यवतिष्ठन्ते । असीत्यस्य मध्यमपुरुषैकवचनत्वात् त्वमिति कर्तृपदं भवितु मर्हति । नहि तत्त्वमिति प्रथमपुरुषैकवचनम् । अत्रब्रूमः । असीति अस्ति स्थाने आर्षः

प्रयोगः । शतशः खलु ईदृशा आर्षप्रयोगा दृश्यन्ते । अस्मिन्नेव प्रपाठके तद्यथा ॥ आस—छा० ६ । १ । १ । अप्राक्ष्यः—छा० ६ । १ । १ । भगवः—छा० ६ । १ । १ । अधि+आपः जायन्ते—छा० ६ । २ । ३ । आण्डजम्—छा० ६ । ३ । १ । अशनायेति । ६ । ८ । ३ । उदन्येति । ६ । ८ । ५ ॥ पुरुष व्यत्ययोऽपि तद्यथा । तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति । अत्र प्रथम स्थाने उत्तमः प्रयुक्तोऽस्ति । इत्यादीनि विविधानि आर्षवचनानि दृश्यन्ते । तर्हि कथं न भसि स्थाने असीति आर्षः प्रयोगो मन्तव्यः । अतो मया प्रकरणादर्थवशाच्च विपरिणमितोऽयं प्रयोगः । तत्त्वमित्यत्र पदद्वयं कृत्वा । तत्+त्वम्+असि इति व्याचक्षते केचित् । तन्न । कथम् । तदित्यस्य केन सम्बन्धः नहि ब्रह्मवाचकेन सता सम्बन्धो भवितु मर्हति । कथम् । सतः स्थाने आत्मशब्दः अव्यवहितः पूर्वः प्रयुक्तोऽस्ति ! तस्य पुंस्त्वात् । तदिति पुंल्लिङ्गेन भवितव्यम् श्वेतकेतोरपि पुंस्त्वात् विधेय प्राधान्याच्च स त्वमसीति भवितव्यम् । अतः तत्त्वमिति पदद्वयं न व्याख्येयम् । ननुआत्मा तत्त्वमिति कथं वाच्यम् । विधेये न लिङ्गादि व्यत्ययः । वेदाः प्रमाणमित्यादि शतशः प्रयोगा भवन्ति । यद्वा । इत्थं व्याख्येयम् । हे श्वेतकेतो । त्वम् तत् । तत्स्थोसि तत्सत्स्थोसीत्यर्थः । यथा मञ्चाः क्रोशन्ति इत्यत्रमञ्चशब्देन मञ्चस्थाः पुरुषा गृह्यन्ते यथा च प्राणबंधनं सोम्य मन इत्यत्र ( ६ । ८ । २ ) मनः शब्देन मनस्थः पुरुषो गृह्यते ॥ ७ ॥ इत्यष्टमखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ८ ॥

अनुवाद—इस सम्पूर्ण जगत् का वही परमात्मा जीवन है वही ब्रह्म सत्य है वही परमात्मा तत्त्व ( परमार्थवस्तु ) है हे श्वेतकेतो ! उसी एक तत्त्व को जानो (इतना सुन श्वेतकेतु बोला कि ) कृपा कर मुझ को आप पुनः समझावें । आरुणि बोले हे सोम्य ! तथास्तु इतना कह उपदेश देनेलगे ॥ ७ ॥

पदार्थ—( श्वेतकेतो ) हे प्रिय पुत्र श्वेतकेतु ! ( इदम् ) यह ( सर्वम् ) सम्पूर्ण जगत् ( ऐतदात्म्यम् ) ईश्वर जीवन वाला है अर्थात् इस सम्पूर्ण जगत् का जीवन ईश्वर है ( तत्+सत्यम् ) वही सत्य है ( सः+आत्मा ) वही आत्मा है ( तत्त्वम्+असि ) वही परमार्थ वस्तु है ( इति ) इतना वचन सुन श्वेतकेतु पुनः पिता से बोला कि ( भूयः+एव ) पुनरपि ( मा ) मुझ को ( भगवान् ) आप कृपा करके ( विज्ञापयतु ) समझावें ( इति ) यह मेरी प्रार्थना है ( तथा+सोम्य+इति+ह+उवाच ) हे सोम्य ! तथास्तु इतना कह पिता पुत्र को पुनः उपदेश देने लगे ॥ ७ ॥

भाष्याशयः—ऐतदात्म्य—एतत् और आत्म शब्द से ऐतदात्म्य बनता है। यह सत् नाम धारी परा देवता आत्मा जीवन है जिसका वह एतदात्म कहलाता है अर्थात् जि-

सका जीवन यह ईश्वर हो उसे एतदात्म कहते हैं यहां आत्म शब्द का अर्थ जीवन है। स्वार्थ में प्रत्यय करने पर एतदात्म से ऐतदात्म्य हो जाता है। अथवा भाव में प्रत्यय करने पर भी ऐतदात्म्य बनता है। २—सत्यम्—सत्य नाम ब्रह्म का है यह विषय प्रसिद्ध ही है यद्वा सत् नाम जीव और प्रकृति दोनों का है ( सती च संश्च इति सन्तौ सतोर्भवः सत्यम् ) प्रकृति और जीवात्मा में जिसकी व्याप्ति हो उसे सत्य कहना चाहिये यद्वा (सद्भ्यां प्रकृत्यात्मभ्यां हितमिति सत्यम् ) प्रकृति और आत्मा का जो हित करने वाला है वह सत्य। ३—तत्त्वमसि—इस सम्पूर्ण जगत् का जो जीवन है वही सत्य है, वही व्यापक है। हे श्वेतकेतो ! वही "तत्त्वमसि" एक तत्त्व यथार्थ सदास्थिर रहने वाला परमार्थ वस्तु है यह अर्थ " तत्त्वमसि " पद का होता है परन्तु शङ्कराचार्य्य जी "तत्+त्वम्+असि" ऐसा पदच्छेद कर वह तू है ऐसा अर्थ करते हैं सो किसी तरह से ठीक नहीं हो सकता क्योंकि यदि वैसा अर्थ होता तो " स त्वमसि " ऐसा पद होता क्योंकि विधेय की प्रधानता के कारण तत् शब्द यहां पुंल्लिङ्ग होना चाहिये सो पुंल्लिङ्ग यहां नहीं है। अतः तत्त्वमसि का अर्थ वह तू है ऐसा अर्थ ठीक नहीं। यहां तत्त्व पद ब्रह्म के लिये आया है वह ब्रह्म ही तत्त्व अर्थात् परमार्थ वस्तु है दूसरा नहीं इसको सूचित करने के लिये तत्त्व पद का प्रयोग किया गया है। यह एक पद है दो नहीं तत्त्व नाम परमात्मा और वस्तुमात्र का है। जैसे सत्त्व, रज, तम ये तीन प्रकार के तत्त्व हैं। तेज, अप, पृथिवी, आत्मा ये चार प्रकार के तत्त्व हैं। शब्द स्पर्श रूप रस गन्ध ये पांच प्रकार के तत्त्व हैं इत्यादि और भी जैसे तत्त्वज्ञानी तत्त्ववित् तत्त्वज्ञान तत्त्ववेत्ता तत्त्वदर्शी आदि अनेक प्रयोग होते हैं ऐसे स्थलों में परमार्थ वस्तु का नाम तत्त्व होता है। जिस कारण ब्रह्म ही एक परमार्थ वस्तु है इस हेतु ब्रह्म के विषय में तत्त्व का प्रयोग हुआ है। शङ्का—यहां यह एक शङ्का हो सकती है कि यहां तत्त्व एक पद मानाजाय तो मध्यम पुरुष एक वचन का प्रयोग होना उचित नहीं किन्तु प्रथम पुरुष के एक वचन का प्रयोग होना था। अर्थात् तत्त्वमस्ति ऐसा प्रयोग होना चाहिये। उ०—यहां अस्ति के स्थान में असि का प्रयोग हुआ है यह आर्ष प्रयोग कहलाता है। इस प्रकार के प्रयोग उपनिषदों में सैकड़ों हैं देखो " तावदेवाचिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति " ६।१४।२॥ यहां प्रथमपुरुष " विमोक्ष्यते " की जगह उत्तम पुरुष विमोक्ष्ये और प्रथम पुरुष " सम्पत्स्यते " की जगह "सम्पत्स्ये" ऐसा प्रयोग हुआ है। यहां शङ्कराचार्य भी कहते हैं कि " पुरुष व्यत्ययेन " पुरुष के उलटा से ऐसा प्रयोग हुआ है इसी प्रकार तत्त्वमसि इस वाक्य में भी प्रथम पुरुष

की जगह मध्यम पुरुष होना कुछ आश्चर्य जनक नहीं । परन्तु आश्चर्य की बात यह है कि शङ्कराचार्य जी ने जैसा अर्थ करदिया उसी का अनुकरण अभीतक लोग करते हैं । इन सब का विस्तार समीक्षा में देखना॥७॥ इत्यष्टम खण्डस्यभाषाभाष्यं समाप्तम् ॥८॥

अथ नवमः खण्डः

**यथा सोम्य ! मधु मधुकृतो निस्तिष्ठन्ति । नानाऽत्ययानां वृक्षाणाꣳ रसान् समवहारमेकताꣳ रसं गमयन्ति ॥ १ ॥**

यथा । सोम्य । मधु । मधुकृतः । निस्तिष्ठन्ति । नानात्ययानाम् । वृक्षाणाम् । रसान् । समवहारम् । एकताम् । रसम् । गमयन्ति ॥ १ ॥

भाष्यम्—यथेति । हे सोम्य ! यथा मधुकृतः । मधुक्षौद्रंकुर्वन्ति सम्पादयन्ति ये ते । मधुकृतो भ्रमराः । करोतेः क्विप् तुक् च । मधुक्षौद्रम् । निस्तिष्ठन्ति निष्पादयन्ति । कथं निष्पादयन्तीत्याह । नानात्ययानाम् । नानात्ययानां नाना फलानां वृक्षाणां द्रुमाणां रसान् सारभूतान् पदार्थान् । समवहारम् । समवह्रियन्ते पदार्था अस्मिन् कर्मणि इति समवहारम् । समवहारं यथास्यात्तथा । समाहृत्येत्यर्थः । एकतां मधुत्वेनैक भावं प्रापय्य रसं गमयन्ति मधुरूपरसमापादयन्ति । ते यथा तत्र न विवेकं लभन्ते इत्युत्तरेणसम्बन्धः ॥१॥

अनुवाद—हे सौम्य ! जैसे भ्रमर मधु बनाते हैं अर्थात् नाना वृक्षों के रसों को इकट्ठे करके एक मधु नामक रस बना देते हैं ॥ १ ॥

पदार्थः— (सोम्य) हे सौम्य ! (यथा) जैसे (मधुकृतः) मधु के बनाने वाले भ्रमर (मधु) मधु को (निस्तिष्ठन्ति) बनाते हैं। कैसे बनाते हैं सो कहते हैं (नानात्ययानाम्) नाना फलवाले (वृक्षाणाम्) वृक्षों के (रसान्) रसों को (समवहारम्) इकट्ठेकर (एकताम्) एक बनाकर (रसम्) मधुस्वरूप रस (गमयन्ति) बनादेते हैं ॥१॥

**ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति ॥ २ ॥**

ते । यथा । तत्र । न । विवेकम् । लभन्ते । अमुष्य । अहम् । वृक्षस्य । रसः । अस्मि । अमुष्य । अहम् । वृक्षस्य । रसः । अस्मि । इति । एवम् । एव । खलु । सो-

म्य । इमाः । सर्वाः । प्रजाः । सति । संपद्य । न । विदुः । सति । सम्पद्यामहे । इति ॥ २ ॥

भाष्यम्—ते यथेति। यथा ते मधुत्वेनैकतां नीतास्ते रसाः तत्र मधुपटले विवेकं परिचयं न लभन्ते । प्राप्नुवन्ति । कीदृग् विवेक इत्याह। अमुष्यवृक्षस्याहं रसोऽस्मि । अस्यवृक्षस्याहं रसोस्मि तस्य वृक्षस्य स रसोस्ति । एतस्य वृक्षस्य त्वं रसोऽसि । इत्येवंप्रकारकं विवेकं ते न प्राप्नुवन्ति। एवमेव एतद्दृष्टान्ततुल्यमवेदम् । तथाहि । हे सोम्य! इमाः सर्वाः प्रजा जनाः । सति । सद्व्याच्ये परमे ब्रह्मणि । सम्पद्य सम्यग्योगं प्राप्यापि। सति ब्रह्मणि वयं सम्पद्यामहे । अहनि अहनि अस्माकं ब्रह्मणैव सार्धं योगोस्ति इति न विदुः । न जानन्ति । ब्रह्म सर्वस्मिन्काले सर्वत्र वर्तते । जले मत्स्या इव ब्रह्मणि वयं वर्त्तामहे । यथा मत्स्यानां जलमाधारो जीवनं निवासस्थानञ्चवर्तते। तद्विहाय जीवितुमपि ते न पारयन्ति तथैव ब्रह्माधारा ब्रह्मजीवना ब्रह्मनिवासा वयमपि वर्तामहे । परन्त्विदं न जानीमहे । अतोमुह्यामः ॥ २ ॥

अनुवाद—जैसे उस में वे विवेक को नहीं प्राप्त करते हैं कि इस वृक्ष का रस मैं हूं इस वृक्ष का रस मैं हूं वैसे ही निश्चय हे सौम्य! ये सम्पूर्ण जन, सत् (ब्रह्म) में योग प्राप्त करके भी यह नहीं जानते हैं कि हम लोगों का योग ब्रह्म से है ॥२॥

पदार्थः—(यथा) जैसे (तत्र) उस मधुपटल में (ते) वे पूर्वोक्तरस (विवेकम्) विवेक को (न लभन्ते) नहीं पाते हैं। कैसा विवेक सो आगे कहते हैं (अमुष्य) इस (वृक्षस्य) वृक्ष का (अहम्) मैं (रसः+अस्मि) रस हूं (अमुष्य+वृक्षस्य+अहम्+रसः+अस्मि) इस वृक्ष का रस मैं हूं (इति) जैसे वे रस यह नहीं समझते हैं कि मैं अमुक वृक्ष का रस हूं (एवमेव) वैसे ही (खलु) यह निश्चय है कि (सोम्य) हे सोम्य! (इमाः+सर्वाः+प्रजाः) ये सम्पूर्ण जन (सति) ब्रह्म में=ब्रह्म के साथ (सम्पद्य) योग प्राप्त करके भी (न+विदुः) नहीं जानते हैं कि (सति+सम्पद्यामहे) ब्रह्म में हम लोग वरतते हैं अर्थात् ब्रह्म के साथ हमारा योग है (इति) ॥ २ ॥

**त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति॥ ३ ॥**

ते । इह । व्याघ्रः । वा । सिंहः । वा । वृकः । वा । वराहः । वा । कीटः । वा । पतङ्गः । वा । दंशः । वा । मशकः । वा । यद् । यद् । भवन्ति । तत् । आभवन्ति ॥३॥

भाष्यम्—त इहेति । अतोऽज्ञानावृत्तत्वाद् । ते जीवाइह अस्मिन्लोके व्याघ्रो वा सिंहो वा वृको वा वराहो वा शूकरो वा कीटो वा पतङ्गो वा दंशो वा । मशको वा यत् यत् पूर्वमिह लोके भवन्ति संबभूवुरित्यर्थः तदेव पुनराभवन्ति युगसहस्रकोट्यन्तरितापि संसारिणो जन्तोर्या पुरा भाविता वासना सा न नश्यतीत्यर्थः ॥ ३ ॥

अनुवाद—वे प्राणी इस लोक में व्याघ्र वा सिंह वा वृक वा शूकर वा कीट वा पतङ्ग वा दंश वा मशक जैसे २ पूर्व में थे वही पुनः २ होते रहते हैं ॥ ३ ॥

पदार्थः—( ते ) वे जीव ( इह ) इस संसार में ( व्याघ्रो वा ) व्याघ्र अथवा ( सिंहो वा ) सिंह ( वृको वा ) अथवा वृक ( वराहो वा ) अथवा शूकर ( कीटो वा ) अथवा कीट ( पतङ्गो वा ) अथवा पतङ्ग ( दंशो वा ) अथवा दंश ( मशको वा ) अथवा मशक ( यत्+यत्+भवन्ति ) जो २ कुछ पूर्व जन्म में थे (तत्+आभवन्ति ) वही २ पुनः होते रहते हैं ॥ ३ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा "तत्त्वमसि" श्वेतकेतो ? इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥४॥**

सः । यः । एषः । अणिमा । इत्यादि

भाष्यम्—स इति । स यः सद्वाच्यः एषः प्रसिद्धोऽणिमास्ति । अणोर्भावः अणिमा अणुतमोस्तीति यावत् । अणुतम इति वक्तव्ये अणिमेत्यार्षः प्रयोगः । यः परमेश्वरः अणुतमोऽस्ति । इदं सर्वं दृश्यमानं जगत् ऐतदात्म्यम् । एतद्ब्रह्म जीवनमित्यर्थः । तत्सत्यं तदेव सत्यं शाश्वतम् । स आत्मा हे श्वेतकेतो ! तदेव तत्त्वमसि तत्त्वमस्ति । अस्य व्याख्यानमष्टम खण्डस्य सप्तमप्रवाकस्योपरि द्रष्टव्यम् ॥ ४ ॥

इति नवम खण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद— सो जो यह सद्वाच्य ब्रह्म अणुतम है उसी ब्रह्म से यह सम्पूर्ण जगत् परीपूर्ण है वही सत्य है , वही आत्मा है हे श्वेतकेतो ! वही परमार्थ वस्तु है ( श्वेतकेतु ) हे भगवान् पूज्यपाद मुझ को पुनरपि यह समझावें ( पिता) एवमस्तु सोम्य ! इतना कह समझाने लगे ॥ ४ ॥

पदार्थः—(सः+यः) सो जो (एषः) यह प्रत्यक्षवद्दृश्यमाण ब्रह्म ( अणिमा ) अत्य-

न्त सूक्ष्म है ( इदम्+सर्वम् ) यह सम्पूर्ण विश्व ( ऐतदात्म्यम् ) एतत् ब्रह्मात्मक है अर्थात् वही अणुतम ब्रह्म इस जगत् का जीवन स्वरूप है ( तत्सत्यम् ) इत्यादि का अर्थ ६ । ८ । ७ । में देखो यहां इतना जानना चाहिये कि " स य एषोऽणिमा " इतनापद ६ । ८ । ७ । के साथ नहीं है किन्तु ६ । ८ । ३ । के साथ है परन्तु यहां पर " ऐतदात्म्य" के साथ ही इसका पाठ दिया है ॥ ४ ॥

इति नमम खण्डस्य भाषाभाष्यं समाप्तम् ॥ ९ ॥

अथ दशमः खण्डः

**इमाः सोम्य ! नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात् समुद्रमेवापियन्ति । स समुद्र एव भवति । ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥**

इमाः । सोम्य । नद्यः । पुरस्तात् । प्राच्यः । स्यन्दन्ते । पश्चात् । प्रतीच्यः । ताः । समुद्रात् । समुद्रम् । एव । अपियन्ति । सः । समुद्रः । एव । भवति । ताः । यथा । तत्र । न । विदुः । इयम् । अहम् । अस्मि । इयम् । अहम् । अस्मि । इति ॥ १ ॥

भाष्यम्--इमा इति । अपरं दृष्टान्तं सोम्य ! शृणु । हे सोम्य ! प्राच्यः प्राञ्चन्ति । पूर्वांदिशामञ्चन्ति गच्छन्ति यास्ता प्राच्यः पूर्वदिग्वाहिन्यः । इमा नद्यः । प्रसिद्धा गङ्गाद्यानद्यः । पुरस्तात् पूर्वादिशंप्रति । स्यन्दन्ते स्रवन्ति निःसरन्ति । प्रतीच्यः प्रत्यञ्चन्ति । प्रतीचींदिशमञ्चन्ति गच्छन्ति यास्ताः प्रतीच्यः । पश्चिमदिग् वाहिन्यो नद्यः । सिन्ध्वादयः । पश्चात् पश्चिमां दिशं प्रति स्यन्दन्ते । काश्चिन्नद्यः पूर्ववाहिन्यः । काश्चित् पश्चिमवाहिन्यः । अपरा उत्तरवाहिन्यः अन्या दक्षिणवाहिन्यः । इत्थं समासतश्चतुर्विधा नदी वर्तते । ताः सर्वानद्यः । समुद्रात् समुद्रमेवापियन्ति गच्छन्ति । स समुद्र एव भवति विधेय प्रधान्यादेकवचनत्वं पुंल्लिङ्गत्वं च । सर्वा मिलित्वा समुद्रस्वरूपाएव भवन्ति । समुद्रात् सूर्यकिरणा जलानि ऊर्द्ध्वमाकृष्य मेघरूपेण परिणमयन्ति । ते च मेघाजलरूपेण पृथिव्यां पतन्ति । तान्येवसरांसि नदीपल्वलानि इत्येवमादीन् जलाशयान् विदधति । नद्यः खलु प्रायः समुद्रेण संगच्छन्ते । समुद्रात् पुनरपि जलानि सूर्यकिरणैरूर्द्ध्वमारुह्य पूर्ववत् परिभ्रमन्ति । अतः समुद्रात् समुद्रमेवापियन्ति । अथ च । यथा तत्र समुद्रे ता नद्यो न विदुः । न विदन्ति । यत् । इयमहमस्मि ।इयमहमस्मि । इति सोम्य ।अहं गङ्गास्मि । अहं यमुनास्मि । अहं सरस्वती वर्ते । इति समुद्रं प्राप्य यथानद्य आत्मपरिचयं

न लभन्ते। एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामहे इति। इत्यादेरुत्तरेण सम्बन्धः ॥ १ ॥

अनुवाद—हे सोम्य! ये पूर्ववाहिनी नदियें पूर्व दिशा को बहती हैं और पश्चिमवाहिनी नदियें पश्चिम दिशा को बहती है वे समुद्र से समुद्र को ही जाती हैं और समुद्र स्वरूप ही हो जाती हैं सो जैसे समुद्र में प्राप्त हुई नदियें नहीं जानती हैं कि यह मैं हूं यह मैं हूं। इति ॥ १ ॥

पदार्थः—( सोम्य ) हे सौम्य ! ( प्राच्यः ) पूर्व दिशा को जानेवाली ( इमाः ) ये ( नद्यः ) नदिएं ( पुरस्तात् ) पूर्व की ओर ( स्यन्दन्ते ) बहती हैं और ( प्रतीच्यः ) पश्चिम दिशा को जानेवाली नदियें ( पश्चात्स्यन्दन्ते ) पश्चिमदिशा को बहती है ( ताः ) वे सब नदियें ( समुद्रात् ) समुद्र से ( समुद्रमेव ) समुद्रको ही ( अपि यन्ति) जाती हैं (स समुद्र एव भवति) और वहां जाकर समुद्र स्वरूप ही होजाती हैं। हे सौम्य! ( यथा ) जैसे ( तत्र ) उस समुद्रमें ( ताः ) समुद्रत्व को प्राप्त वे नदियें (न-विदुः ) यह नहीं जानती हैं कि ( इयम्+अहम्+अस्मि ) यह मैं हूं ( इयम्+अहम्+-अस्मि) यह मैं हूं ( इति ) ॥ १ ॥

**एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति। त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ २ ॥**

एवम्। एव। खलु। सोम्य। इमाः। सर्वाः। प्रजाः। सतः। आगम्य। न। विदुः। सतः। आगच्छामहे। इति। ते। इह। व्याघ्रः। वा। सिंहः। वा। वृकः। वा। वराहः। वा। कीटः। वा। पतङ्गः। वा। दंशः। वा। मशकः। वा। यद्। यद्। भवन्ति। तद्। आभवन्ति ॥ २ ॥

भाष्यम्—एवमेवेति। एवमेव पूर्वदृष्टान्त इव। हे सोम्य! इमाः सर्वाः प्रजाः। खलु निश्चितम्। सतः सच्छब्दवाच्याद्ब्रह्मणः सकाशादागम्यागत्य। इह लोकं प्राप्य। न विदुः। नैवजानन्ति। यत् सतो ब्रह्मणः सकाशाद् वयमागच्छामहे। आगच्छामः। अतोऽस्मादज्ञानात् संसारिण एव पुनः पुनस्ते भवन्ति। तद्यथा तइहेत्यादि पूर्वखण्डवत् ॥ २ ॥

अनुवाद—वैसे ही हे सौम्य! यह तुम निश्चय जानो कि सब प्राणी सत् (ब्रह्म) के समीप से आकर यह नहीं जानते हैं कि हम ब्रह्म के समीप से आये हैं। इस हेतु वे इस संसार में व्याघ्र वा सिंह, वृक वा शूकर, कीट वा पतङ्ग, दंश व मशक जैसे २ पूर्व में थे वे ही २ पुनः २ होते रहते हैं ॥ २ ॥

पदार्थः—( एवमेव ) वैसे ही ( खलु ) निश्चय (इमाः+सर्वाः+प्रजाः) ये सब प्राणी (सतः+आगम्य) सत् स्वरूप ब्रह्म के निकट से आकर ( न+विदुः ) नहीं जानते हैं कि ( सतः+आगच्छामहे ) सत् से हम लोग आये हैं ( इति ) इस हेतु ( ते ) वे जीव ( इह ) इस संसार में (व्याघ्रो वा सिंहो वा) व्याघ्र अथवा सिंह (वृको वा वराहो वा) वृक वा वराह ( कीटो वा पतङ्गो वा ) कीट वा पतङ्ग ( दंशो वा मशको वा ) दंश अथवा मशक ( यत्+यत्+भवन्ति ) जो २ पूर्व जन्म में थे ( तत्+आभवन्ति ) वे ही पुनः २ होते रहते हैं ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳस आत्मा "तत्त्वमसि" श्वेतकेतो ! इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥३॥**

यह प्रवाक ६ । ८ । ७ । के समान है इस हेतु भाष्यादि वहां ही देखो ।

इति दशम खण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥

## अथैकादशः खण्डः

**अस्य सोम्य ! महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत्स एष जीवेनाऽऽत्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥**

अस्य । सोम्य । महतः । वृक्षस्य । यः । मूले । अभ्याहन्यात् । जीवन् । स्रवेत् । यः । मध्ये । अभ्याहन्यात् । जीवन् । स्रवेत् । यः । अग्रे । अभ्याहन्यात् । जीवन् । स्रवेत् । सः । एषः । जीवेन । आत्मना । अनुप्रभूतः । पेपीयमानः । मोदमानः । तिष्ठति ॥ १ ॥

भाष्यम्—अस्यसोम्येति । पुनरपि दृष्टान्तं शृणु सोम्य ! अङ्गुली निर्देशेन दर्शयन्नाह हे सोम्य ! अस्य पुरतः स्थितस्य । महतो बहुशाखापल्लवसमन्वितस्य । वृक्षस्य । मूले । यः कश्चित्पुरुषः । अभ्याहन्यात्परश्वादिना सकृत्प्रहरेत् । तर्हि सकृत्प्रहारेण न शुष्यति वृक्षः । किन्तु

स जीवन् अशुष्यन् एव तिष्ठति । तदाप्रहारेण तस्य रसः स्रवेत्। निःसरेत्। एवमेव यदि मध्ये । अभ्याहन्यात् प्रहरेत् । जीवन् सन्नेव स स्रवेत् । तथाच। अग्रे वृक्षस्यान्त्यभागे । कोऽपि । अभ्याहन्यात् । तदापि जीवन्नेव स्रवेत् । जीवतस्तस्य रसो निःसरेत्। कथमिद-मित्याह । यतः स एष जीवन्नभ्यहन्यमानोवृक्षः । जीवेनात्मना जीवात्मना । अनुप्रभूतः अनुव्याप्तः सन् । पेपीयमानः पादैराकृष्यात्यर्थं पृथिव्या रसान् पिबन् सन् । मोदमान आनन्दमनुभवंस्तिष्ठति ॥ १ ॥

अनुवाद–हे सोम्य ! इस महान् वृक्ष के मूल में जो कोई प्रहार करे तो जीता हुआ वृक्ष स्रवित होगा ( उसका रस चूने लगेगा ) मध्य में प्रहार करे तो जीता हुआ वह वृक्ष चूने लगेगा । अन्त में यदि कोई प्रहार करे तो वह वृक्ष जीता हुआ चूने लगेगा क्यों कि सो यह वृक्ष जीवात्मा से व्याप्त होकर पुनः २ पीता हुआ सहर्ष खड़ा रहता है ॥ १ ॥

पदार्थः—( सोम्य ) हे प्रिय पुत्र ! अन्य दृष्टान्त भी सुनो । अङ्गुली निर्देश से दिखलाकर कहते हैं ( अस्य+महतः+वृक्षस्य ) इस महान् वृक्ष की (मूले) जड़ में (यः+अभ्याहन्यात् ) यदि कोई कुल्हाड़ी आदि से एक वार प्रहार करे तो (जीवन्+स्रवेत्) प्रहार करने से भी वह वृक्ष न सूखकर जीता ही हुआ स्रवित होगा । उसका दूध गिरता रहेगा परन्तु सूखेगा नहीं । इसी प्रकार ( यः+मध्ये+अभ्याहन्यात् ) यदि वृक्ष के मध्य में प्रहार करे तो ( जीवन्+स्रवेत् ) जीता हुआ स्रवित होगा इसी प्रकार ( यः+अग्रे+अभ्याहन्यत् ) वृक्ष के अग्र भाग में कोई प्रहार करे तो ( जीवन्+स्रवेत् ) जीता हुआ स्रवित होगा क्योंकि ( सः+एषः ) सो यह वृक्ष ( जीवेन+आत्मना ) जीवात्मा के साथ ( अनुप्रभूतः ) अनुव्याप्त होकर ( पेपीयमानः ) अपनी जड़ों से पृथिवी के अभ्यन्तर से रस को चूसता हुआ (मोदमानः+तिष्ठति) सहर्ष खडा रहता है ॥ १ ॥

**अस्य यदेकाᳬ शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति। तृतीयां जहात्यथ सा शुष्यति । सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य ! विद्धीति होवाच ॥ २ ॥**

अस्य । यद् । एकाम् । शाखाम् । जीवः । जहाति । अथ । सा । शुष्यति । द्वितीयाम् । जहाति । अथ । सा । शुष्यति । तृतीयाम् । जहाति । अथ । सा । शु-

ष्यति । सर्वम् । जहाति । सर्वः । शुष्यति । एवम् । एव । खलु । सोम्य । विद्धि । इति । ह । उवाच ॥ २ ॥

भाष्यम्—अस्येति । यद्यदा जीवः । तस्यास्य पुरतः स्थितस्य व्याधिग्रस्तस्य हतस्य वा वृक्षस्य । एकां शाखां जहाति त्यजति । अथ तदा सा शाखा । शुष्यति शुष्काभवति । यदि जीवस्तस्यद्वितीयां शाखां जहाति । अथ सा द्वितीया शुष्यति । यदि जीवस्तृतीयां शाखां जहाति । अथ सा शुष्यति । यदि सर्वं वृक्षं जहाति । तदा सर्वो वृक्षः शुष्यति । एवमेव । हे सोम्य ! यथास्मिन् वृक्षे दृष्टान्तो दर्शितः । जीवेन संयुक्तो वृक्षो जीवन् संस्तिष्ठति जीवापेतश्चेत् शुष्को भवति । एवमेव खलु सोम्य ! वक्ष्यमाणं वचनमपि विद्धि जानीहि । इति होवाचारुणिः पुत्रं प्रति ॥ २ ॥

अनुवाद—जब जीव इस वृक्ष की एक शाखा को त्यागता है तब वह (शाखा) सूख जाती है । दूसरी शाखा को त्यागता है तो वह सूख जाती है । तीसरी को त्यागता है । तो वह सूख जाती है । सम्पूर्ण वृक्ष को त्यागता है तो सम्पूर्ण वृक्ष सूख जाता है । वैसे ही हे सोम्य ! निश्चय कर इसको भी जानो इस प्रकार आरुणि पुत्र से फिर बोले ॥२॥

पदार्थः–( अस्य ) इस महान् वृक्ष की ( एकाम् शाखाम् ) किसी एक शाखा को ( यत् ) जब ( जीवः+जहाति ) जीव त्याग देता है ( अथ+सा+शुष्यति ) तब वह शाखा सूख जाती है (द्वितीयाम्+जहाति) जब जीव द्वितीय शाखा को त्यागता है (अथ+सा+शुष्यति ) तब वह सूख जाती है (तृतीयाम्+जहाति+अथ+सा+शुष्यति) जब जीव तृतीय शाखा को त्यागता है तो वह सूख जाती है ( सर्वम्+जहाति+सर्वः+शुष्यति ) यदि वह जीव सम्पूर्ण वृक्ष को त्याग देता है तो सम्पूर्ण वृक्ष सूख जाता है ( एवम्+एव+खलु ) वैसे ही ( सोम्य ) हे सोम्य ! (विद्धि+इति) शरीर की दशा जानो। इसको स्वयं आगे कहेंगे (इति+ह+उवाच) इस प्रकार पुत्र को शिक्षा दे पुनः आरुणि बोले ॥ २ ॥

**जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति । स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा "तत्त्वमसि" श्वेतकेतो ! इति । भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥**

जीवापेतम् । वाव । किल । इदम् । म्रियते । न । जीवः । म्रियते । इति । सः । यः । एषः । अणिमा । इत्यादि पूर्ववत् ॥ ३ ॥

भाष्यम्-जीवापेतमिति । पूर्वोक्तमुपसंहरति हे सोम्य ! इदं शरीरं जीवापेतंवाव जीवेन जीवात्मना अपेतं रहितमेव यदाभवति तदा म्रियते । न जीवो म्रियत इति । शरीरी जीवस्तु कदापि न म्रियते इति त्वं वृक्षदृष्टान्तेन विजानीहि स य इत्यारभ्य होवाचेति पर्य्यन्तं पूर्वं व्याख्यातम् ॥ ३ ॥ इत्येकादशखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ११ ॥

अनुवाद—निश्चय जीव रहित यह शरीर मरता है किन्तु जीव नहीं मरता । सो जो यह अणुतम ब्रह्म है उसी से यह सम्पूर्ण जगत् परिपूर्ण है । इत्यादि ६ । ८ । ७ । के समान जानना ॥ ३ ॥

पदार्थः-( वाव ) निश्चय ( इदम् ) यह शरीर ( जीवापेतम्+किल ) जीव रहित होने पर ( म्रियते ) मर जाता अर्थात् निश्चेष्ट हो जाता है। हे सौम्य ! ( जीवः+न+म्रियते ) जीवात्मा कदापि नहीं मरता । "स य एष से लेकर होवाच पर्य्यन्त ६ । ८ । ७ । के समान है वहां ही अर्थ देखो" ॥ ३ ॥

इत्येकादशखण्डस्य भाषाभाष्यं समाप्तम् ॥ ११ ॥

अथ द्वादशः खण्डः

**न्यग्रोधफलमत आहरेतीदं भगव!इति । भिन्धीति। भिन्नं भगव! इति। किमत्रपश्यसीत्यण्व्य इवेमा धाना भगव ! इत्यासामङ्गैकां भिन्धीति । भिन्ना भगव ! इति । किमत्र पश्यसीति । न किञ्चन भगव ! इति ॥ १ ॥**

न्यग्रोधफलम् । अतः । आहर । इति । इदम् । भगवः । इति । भिन्धि । इति । भिन्नम् । भगवः । इति । किम् । अत्र । पश्यसि । इति । अण्व्यः । इव । इमाः । धानाः । भगवः । इति । आसाम् । अङ्ग । एकाम् । भिन्धि । इति । भिन्ना । भगवः । इति । किम् । अत्र । पश्यसि । इति । न । किञ्चन । भगवः । इति ॥ १ ॥

भाष्यम्—न्यग्रोधफलमिति । दृष्टान्तरमाह हे सोम्य ! अतोऽस्मात् पुरतःस्थितान्महतो न्यग्रोधान्न्यग्रोधफलम् । न्यग्रोधस्यैकं फलम् । आहर आनय । इति पित्रोक्तः पुत्रः फलमेकमानीय । भगवोभगवन्निदं फलंमयानीतं गृह्यतामित्युवाच । ततः पिता । हे सोम्य ! इदं भिन्धि छिन्धि । पुत्रः । हे भगवो भगवन् । भिन्नमिदंफलम् । इति । पिता । अत्रफले हे सोम्य! किं पश्यसि । पुत्रः हे भगवो भगवन् ! अण्व्य अणुतराइव इमा धाना

वीजानिसन्ति । ताः पश्यामि । पिता । अङ्ग हे वत्स ! आसामणुतराणां धानानां मध्ये । एकां धानां भिन्धि । पुत्रः । हे भगवो ! मयाधानाभिन्ना । पिता । यदि धाना भिन्ना । तर्हि भिन्नायामस्यां धानायां त्वं किं पश्यसि । पुत्रः । हे भगवः ! किञ्चन किञ्चिदपि न पश्यामि ॥ १ ॥

अनुवाद–(पिता)हे सौम्य ! इस से न्यग्रोध का एक फल ले आवो (पुत्र) हे भगवन् । यह है ( पिता ) तोड़ो ( पुत्र ) हे भगवन् ! तोड़ा ( पिता ) इस में क्या देखते हो ( पुत्र ) बहुत अणु ( सूक्ष्म ) ये बीज दीखते हैं ( पिता ) इन में से एक धाना को फिर तोड़ो ( पुत्र ) हे भगवन् तोड़ा ( पिता ) इस में क्या देखते हो ( पुत्र ) हे भगवन् कुछ नहीं ॥ १ ॥

पदार्थः–पिता–( अतः+न्यग्रोधफमाहर+इति ) इस से न्यग्रोध नाम के वृक्ष का फल लाओ । पुत्र–( इदम्+भगवः+इति ) हे भगवन् ! यह है । पिता–(भिन्धि+इति) फोड़ो । पुत्र–( भिन्नम्+भगव+इति ) हे भगवन् ! यह फोड़ा । पिता–( किमत्रपश्यसि+इति ) इस में क्या देखते हो । पुत्र–(अण्व्यः+इव+इमाः+धानाः+भगव+इति ) हे भगवन् ! छोटी २ धानी के समान । पिता–( अङ्ग+आसाम्+एकाम्+भिन्धि+इति ) हे पुत्र इन में से एक को फोड़ो ( भिन्नाभगव+इति ) हे भगवन् ! धाना को फोड़ा । पिता–( किम्+अत्र+पश्यसि+इति ) इस में क्या देखते हो । पुत्र–( न+किञ्चन+भगव+इति ) हे भगवन् ! कुछ नहीं ॥ १ ॥

**तꣳहोवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धस्व सोम्येति॥ २ ॥**

तम् । ह । उवाच । यम् । वै । सोम्य । एतम् । अणिमानम् । न । निभालयसे। एतस्य । वै । सोम्य। एषः। अणिम्नः । एवम् । महान्यग्रोधः । तिष्ठति । श्रद्धस्व । सोम्य । इति ॥ २ ॥

भाष्यम्–तमिति । तं श्वेतकेतुं पिता आरुणिर्होवाच । हे सोम्य ! न्यग्रोधस्य वीजस्य यमेतम् । अणिमानम् । अणुभावम् । अणुतरमंशं न निभालयसे। न पश्यसि। हे सोम्य ! वै निश्चितमिदं विद्धि यत् । एतस्यैव न्यग्रोधवीजस्य अणिम्नोऽणुतरभागस्य । एवं महान्यग्रोधो वृक्षस्तवाग्रे तिष्ठति । हे सोम्य ! अस्यैवाति सूक्ष्मस्य अदृश्यमानस्य बीजांशस्य कार्यभूतः स्थूलशाखास्कन्ध पलाशवान् भूत्वायं न्यग्रोधवृक्षस्तिष्ठति तथैवाति

सूक्ष्मादहश्यादव्यक्तात्सतः सकाशाज्जगदिदं महास्थूलं पृथिव्या द्युपकरणसहितं दृश्यते एतस्मिन्विषये श्रद्धत्स्व सोम्य ॥ २ ॥

अनुवाद-( आरुणि) उस ( अपने पुत्र ) से पुनरपि बोले कि हे सौम्य ! यह निश्चय जानो कि जिस इस बीज के अणुतम भाग को तुम नहीं देखते हो उसी अणुभाग का ( कार्यभूत ) ऐसा यह बड़ा न्यग्रोधवृक्ष खड़ा है इस में अणुमात्र सन्देह नहीं हे सोम्य इस में श्रद्धा रक्खो ॥ २ ॥

पदार्थः-( तम्+ह+उवाच ) आरुणि फिर अपने उस पुत्र से बोले ( सोम्य ) हे पुत्र ! (यम्+वै+एतम्+अणिमानम्) जिस इस अणुतम अंश को (न+निभालयसे) तुम नहीं देखते हो ( एतस्य+वै+अणिम्नः ) इसी अणुतमबीजांश का कार्यभूत ( जो अत्यन्त सूक्ष्म और अदृश्यमान है ) ( एषः+महान्यग्रोधः ) यह महान न्यग्रोध वृक्ष ( एवम् ) ऐसा स्थूल शाखास्कन्ध फल पलास आदियों से भूषित होकर ( तिष्ठति ) स्थित है वैसे ही अतिसूक्ष्म अदृश्य अव्यक्त सद्वाच्यब्रह्म से यह महास्थूल पृथिव्यादि उपकरण सहित जगत् दीखता है ( श्रद्धत्स्व सोम्येति ) हे सोम्य इस बात का विश्वास करो ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा "तत्त्वमसि" श्वेतकेतो ! इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥३॥**

भाष्यम्-सर्वं व्याख्यात मेवास्ति ॥ ३ ॥

पदार्थः-स य इत्यादि ६ । ८ । ७ । के समान है ॥ ३ ॥

इति द्वादश खण्डस्य संस्कृत भाषाभाष्ये समाप्ते ॥ १२ ॥

अथ त्रयोदशः खण्डः

**लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार । तꣳहोवाच यद्दोषा लवणमुदकेऽबाधा अङ्ग । तदाहरेति । तद्धावमृश्य न विवेद ॥१॥**

लवणम् । एतद् । उदके । अवधाय । अथ । मा । प्रातः । उपसीदथाः । इति । सः । ह । तथा । चकार । तम् । ह । उवाच । यत् । दोषा । लवणम् । उदके । अबाधाः । अङ्ग । तत् । आहर । इति । तत् । ह । अवमृश्य । न । विवेद । ॥१॥

भाष्यम्—लवणमिति । विद्यमानमपिवस्तु क्वचिन्नोपलभ्यते प्रकारान्तरेणतूपलभ्यत एवेतिशृण्वत्रदृष्टान्तम् । यदि चेवमर्थं प्रत्यक्षीकर्तुमिच्छसि तर्हि हे सोम्य ! इदं कुरु । एतत् पिण्डाकारं लवणं सैन्धवम्। उदके घटादिस्थे जले। अवधाय स्थापयित्वा। अथानन्तरं । प्रातः प्रातःकाले । मा माम् । उपसीदथा उपसीद उपगच्छ । मम समीपं प्रातःकाले त्वयाऽऽगन्तव्यमित्यर्थः। इति पित्राज्ञप्तस्सन् सःश्वेतकेतुस्तथा चकार । पितुराज्ञानुसारेण लवणमुदके प्रक्षिप्तवान् । प्रातःकाले तं ह पितोवाच सोम्य ! दोषारात्रौ यल्लवणमुदकेपानीये। अवाधा निक्षिप्तवानसि। तल्लवणम्। अङ्ग हे प्रियवत्स! आहर आनय । इति पित्रोक्तः स तल्लवणमुदके अवमृश्य मार्गयित्वा न विजिज्ञौ विवेद न लवणमप्राप्य पितरमुपसद्योवाच । क्वास्ति लवणपिण्डमित्यहंनजाने मार्गयित्वापि न लब्धम् । पुत्रेणोक्तः पिताह । अङ्ग हे वत्स ! लवणमिदमुदके तथा विलीनं यथा त्वं न जानासि । किन्तु विलीनमेव लवणं यथा त्वंजानीयास्तथोपायं ब्रवीमि शृणु इत्युत्तरेण सम्बन्धः ॥१॥

अनुवाद–हे सौम्य! इस लवण को जलमें रखकर तदनन्तर प्रातःकाल मेरे निकट तुम उपस्थित होना । उसने वैसा ही किया ( आरुणि ) उससे बोले कि हे पुत्र रात्रि में जिस लवण को तुमने पानी में रक्खाथा उसको लाओ ( श्वेतकेतु ) उसको लाने की इच्छासे उस पानी में उसे अन्वेषण करके भी नहीं जाना ॥ १ ॥

पदार्थः–( एतत् ) इस ( लवणम् ) लवणपिण्ड को ( उदके ) जलमें ( अवधाय ) रखकर ( अथ ) तदनन्तर ( प्रातः ) प्रातःकाल ( मा ) मेरे ( उपसीदथाः ) समीप आओ ( इति ) इस प्रकार पिता से आज्ञप्त होकर ( स ह ) उस श्वेतकेतु ने ( तथा+चकार ) वैसाही किया ( तम्+ह+उवाच ) उस श्वेतकेतु से उसके पिता ने प्रातःकाल कहा कि ( दोषा ) रात्रि में ( यत् ) जो ( लवणम् ) लवण ( उदके ) जल में ( अवाधाः ) रक्खाथा ( अङ्ग ) हे वत्स! ( तद्+आहर ) उस लवण को ले आओ ( इति ) उस लवण को लाने की इच्छा से ( तत्+ह ) उसे ( अवमृश्य ) खोजकर ( न+विवेद ) न जाना अर्थात् नहीं पाया । अनन्तर पिता के निकट आकर निवेदन किया कि हे भगवन् ! मुझे वह लवणपिण्ड नहीं मिलता ॥ १ ॥

**यथा विलीन मेवाङ्गस्यान्तादाचामेति । कथमिति । लवणमिति। मध्यादाचामेति । कथमिति लवणमित्यन्तादाचामेति । कथमिति । लवणमित्यभि-**

**प्राऽश्यैनदथमोपसीदथा इति । तद्ध तथा चकार । तच्छश्वत्संवर्त्तते तꣳ होवाचात्र वाव किल तत्सोम्य ! न निभालयसेऽत्रैव किलेति ॥ २ ॥**

यथा । विलीनम् । एव । अङ्ग । अस्य । अन्तात् । आचाम । इति । कथम् । इति । लवणम् । इति । मध्याद् । आचाम । इति । कथम् । इति । लवणम् । इति । अन्ताद् । आचाम । इति । कथम् । इति । लवणम् । इति । अभिप्राश्य । एनत् । अथ । मा । उपसीदथाः । इति । तत् । ह । तथा । चकार । तत् । शश्वत् । संवर्त्तते । तम् । ह । उवाच । अत्र । वाव । किल । तत् । सोम्य । न । निभालयसे । अत्र । एव । किल । इति ॥ २ ॥

भाष्यम्--अथेति । उपायान्तरेणोदके विलीनं लवणं वेदयितुं प्रकरणमिदमारभते । हे सोम्य ! जले विलीनमेव लवणं यथात्वं ज्ञास्यसि तमुपायं शृणु । अस्य लवणसंयुक्तस्य जलस्य । अन्तादुपरिष्टात्त्वमाचाम आचमनं कुरु । इति । ( श्वेतकेतुः ) आचमीत् । (पिता पृच्छति ) कथमिति । इदं जलं कीदृशं वर्तते ? ( पुत्रः कथयति ) लवणमिति । लवणसंयुक्तमस्ति ( पिता पृ० ) तथा अस्योदकस्य मध्यादुदकं गृहीत्वाऽऽचाम ( श्वे० ) आचमीत् ( पिता पृ० ) कथमिति ( पुत्रः क० ) लवणमिति ( पिता० ) अस्योदकस्यान्तादधोभागाज्जलं गृहीत्वा हे सोम्य ! पुनरप्याचाम । पित्रोक्तः स आचमीत् । ( पिता ) कथमिति ( पुत्रः ) लवणमिति अनन्तरमारुणिः पुनरुवाच । हे सोम्य ! एनल्लवणमभिप्राश्याचम्य अवशिष्टं परित्यज्य च । अथानन्तरं मा मामुपसीदथा उपगच्छेः । इति । श्वेतकेतुरपि तद्ध पितुस्तद्वचनं तथैव चकार । उवाच च हे भगवन् ! तल्लवणं तस्मिन्नुदके शश्वत् सर्वदैव संवर्तते सम्यग्विद्यते । इत्येवमुक्तवन्तं श्वेतकेतुं पिता होवाच । यथेदं लवणं दर्शनस्पर्शनाभ्यां पूर्वमगृहीतं पुनरुदके विलीनं ताभ्यामगृह्यमाणमपि विद्यत एव । उपायान्तरेण जिह्वयोपलभ्यमाणत्वात् एवमेवात्रैवास्मिन्नेव तेजोबन्नादिकार्य्ये शुङ्गे देहे । वावकिलेत्याचार्य्योपदेश स्मरणप्रदर्शनार्थौ । तेजोबन्नादि शुङ्गकारणं सत् वटबीजाणिमवत् विद्यमानमेवेन्द्रियैर्न निभालयसे न पश्यसि हे सोम्य ! यथात्रैवोदके दर्शनस्पर्शनाभ्यामनुपलभ्यमाणं लवणं विद्यमानमेव जिह्वयोपलब्धवानसि एवमेवात्रैवकिल विद्यमानं सज्जगन्मूलमुपायान्तरेण लवणमिव तदुपलप्स्यसे । इति वाक्यशेषः ॥ २ ॥

अनुवाद--इस जल में विलीन लवण को जैसे जानोगे सो सुनो ( पिता ) इस जल के ऊपर से आचमन करो । श्वेतकेतु ने वैसा ही किया ( पिता ) यह कैसा है ?

( पुत्र ) लवणयुक्त है ( पिता ) इस जल के मध्यसे जल लेकर आचमन करो । उसने वैसा ही किया ( पिता ) यह कैसा है ? ( पुत्र ) लवणयुक्त है ( पिता ) इस जलके नीचे से आचमनकरो। उसने वैसा ही किया। (पिता) यह कैसा है ? ( पुत्र ) लवणयुक्त है ( पिता ) इसे आचमनकर अनन्तर मेरे पास आओ । पिता के वचन को सुन वैसा ही किया और पिता से निवेदन किया कि हे भगवन् ! यह लवण इस जल में सर्वदा सब प्रकार से वर्तमान है इस वचन को सुन पुत्र से पिता बोला कि हे सोम्य! जैसे इस जल में रहते हुए ही लवण को ( दर्शन स्पर्शन से ) जैसे तुमने नहीं जाना ( परन्तु उपायान्तर से जिह्वा के द्वारा वह जानागया ) वैसे ही हे सोम्य ! यहां ही विद्यमान उस सद्वाच्य ब्रह्मको तुम नहीं देखते हो । उपायान्तर से उसको तुम साक्षात् कर सकते हो ॥ २ ॥

पदार्थः--(अङ्ग) हे पुत्र ! (विलीनम्+एव) जल में विलीन ही लवण को (यथा) जिस प्रकार जान सकोगे वह उपाय दिखलाते हैं । पिता-( अस्य+अन्तात्+आचाम+इति ) लवणयुक्त इस जल के ऊपर से आचमन करो। श्वेतकेतुने वैसाही किया । पिता- ( कथमिति ) हे सौम्य ! यह जल कैसा है ? पुत्र- ( लवणमिति ) लवण युक्त है। पिता- ( मध्यात्+आचाम+इति ) जलके मध्य से आचमन करो। श्वेतकेतु ने वैसाही किया। पिता-( कथमिति ) हे पुत्र ! यह जल कैसा ? पुत्र-( लवणमिति ) लवण युक्त है। पिता-( अन्तात्+आचाम+इति ) इसके नीचे से आचमन करो। उसने वैसा ही किया पिता-( कथमिति ) हे पुत्र ! यह जल कैसा है ? पुत्र-( लवणमिति ) लवण युक्त है। पिता-( एनत् ) इस लवण को ( अभिप्राश्य) आचमन करके ( अथ ) पश्चात् ( मा+उपसीदथाः ) मेरे निकट आओ ( इति ) ( तत्+ह+तथा+चकार ) श्वेतकेतुने वैसाही किया और पिताके निकट आकर बोला हेभगवन् ! ( तत्+ह ) वह लवण ( शश्वत् ) सर्वदा ( संवर्तते ) जल में विद्यमान है । यह वचन कहते हुए ( तम्+ह+उवाच ) उससे उसका पिता कहने लगा ( सोम्य+तत्+अत्र+वाव+किल ) वह लवण इसी जल में विद्यामान ही है परन्तु (न+निभालयसे) नहीं देखते हो कि (अत्रैव+किल+इति) यहां ही है। हे सोम्य! जिस लवण को तुमने प्रथम दर्शनस्पर्शन से ग्रहण किया था परन्तु जल में डाल देने से उसी लवण का दर्शन स्पर्शन से तुमने ग्रहण नहीं किया परन्तु अन्य उपाय से अर्थात् उसी जल के पान करने से और जिह्वा के संयोग से उसका बोध हुआ कि यह लवण इसी जलमें हैं इसी प्रकार वह सद्वाच्य सर्वत्र विद्यामान ही है परन्तु इन्द्रियों के द्वारा उसका ग्रहण नहीं होता है । किन्तु श्रवण, मनन, निदिध्यासनादि उपायों से उसका बोध होता है ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा "तत्त्वमसि" श्वेतकेतो ? इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥३॥**

यह प्रवाक ६ । ८ । ७ । के समान जानना ॥ ३ ॥

इति त्रयोदश खण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १३ ॥

## अथ चतुर्दशः खण्डः

**यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥**

यथा । सोम्य । पुरुषम् । गन्धारेभ्यः । अभिनद्धाक्षम् । आनीय । तम् । ततः । अतिजने । विसृजेत् । सः । यथा । तत्र । प्राङ् । वा । उदङ् । वा । अधराङ् । वा । प्रत्यङ् । वा । प्रध्मायीत । अभिनद्धाक्षः । आनीतः । अभिनद्धाक्षः । विसृष्टः ॥१॥

भाष्यम्—यथेति । हे सोम्य ! यथा कश्चित् तस्करः । कमपि पुरुषं गन्धारेभ्यो गन्धार नामकेभ्यो जनपदेभ्यः । अभिनद्धाक्षम् । अभिनद्धं बद्धमक्षिनयनं यस्य सोऽभिनद्धाक्षस्तम् अभिनद्धाक्षम् । बद्धनेत्रमित्यर्थः । आनीय । आहृत्य तमानीतं पुरुषम् ततः । अतिजने अत्यन्तविगतजने निर्जनइत्यर्थः । विसृजेत् परित्यजेत् । ततः सोतिसृष्टः पुरुष तत्र तस्मिन्निर्जनेवने । प्राङ्वा प्रागञ्चनः पूर्वाभिमुखो भूत्वा वा तथोदङ् वा उदङ्मुखो वा अधराङ्वा अधोमुखो वा प्रत्यङ् वा पश्चिमाभिमुखो वा भूत्वा । प्रध्मायीत । उच्चैराक्रोशं कुर्य्यात् । किं प्रध्मायीतेत्याह । हे समीपोपस्थिताजना ! अहं केनापि चौरेण अभिनद्धाक्षएवात्रानीतोस्मि अभिनद्धाक्ष एव विसृष्टस्त्यक्तोस्मि । अतो यूयं मां विमोचयत रक्षत ॥ १ ॥

अनुवाद—हे सौम्य ! जैसे गन्धार देश से किसी पुरुष को कोई नेत्र बांध, ले आकर उसको तब निर्जन बन में छोड़ दे । तब वह जैसे वहां पूर्वमुख वा उत्तरमुख वा अधोमुख वा पश्चिममुख हो ज़ोर से चिल्लाय कि मैं बद्धनेत्र यहां लायागया हूं और बद्धनेत्र ही छोड़ा गया हूं ॥ १ ॥

पदार्थः-(सोम्य) हे सोम्य ! ( यथा ) जैसे ( गन्धारेभ्यः ) गन्धारदेश से ( पुरुषम् ) किसी पुरुष को कोई चोर ( अभिनद्धाक्षम् ) आंखें बांध ( आनीय ) लाकर ( तम् ) उसको ( ततः ) तब (अतिजने) अतिनिर्जन बन में ( विसृजेत् ) छोड़दे तब ( सः ) वह ( यथा ) जैसे ( तत्र ) उस निर्जन बनमें ( प्राङ् वा ) पूर्वाभिमुख अथवा ( उदङ् वा ) उत्तराभिमुख अथवा ( अधराङ् वा ) नीचे को मुखकर ( प्रत्यङ् वा ) अथवा पश्चिम मुख होकर ( प्रध्मायीत ) जोर से चिल्ला उठे कि मैं ( अभिनद्धाक्षः ) बद्धनेत्र ( आनीतः ) लायागयाहूं ( अभिनद्धाक्षः विसृष्टः ) और बद्ध नेत्र ही छोड़ा गया हूं इसलिये हे समीपस्थ जनो ! मेरी रक्षा करो मेरी आंखें खोलदो ॥ १ ॥

**तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति। सग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाचार्यवान्पुरुषो वेद। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति ॥ २ ॥**

तस्य । यथा । अभिनहनम् । प्रमुच्य । प्रब्रूयात् । एताम् । दिशम् । गन्धाराः । एताम् । दिशम् । व्रज । इति । सः । ग्रामात् । ग्रामम् । पृच्छन् । पण्डितः । मेधावी । गन्धारान् एव । उपसम्पद्येत । एवम् । एव । इह । आचार्यवान् । पुरुषः । वेद । तस्य । तावत् । एव । चिरम् । यावत् । न । विमोक्ष्ये । अथ । सम्पत्स्ये । इति ॥२॥

भाष्यम्-तस्येति । एवं विक्रोशतस्तस्य । यथाभिनहनं यथा बनधनं प्रमुच्य मुक्त्वा कारुणिकः कश्चिदेतां दिशमुत्तरतो गन्धारा एतां दिशं व्रजेति प्रब्रूयात् । स एवं कारुणिकेन बन्धनान्मोक्षितो ग्रामाद्ग्रामान्तरं पृच्छन्पण्डित उपदेशवान्मेधावी परोपदिष्टग्रामप्रवेशमार्गावधारणसमर्थः सन् गन्धारानेवोपसम्पद्येत नेतरो मूढमतिर्देशान्तरदर्शनतृड्वा । यथाऽयं दृष्टान्तो वर्णितःस्वविषयेभ्यो गन्धारेभ्यः पुरुषस्तस्करैरभिनद्धाक्षोऽविवेको दिङ्मुढोऽशनायापिपासादिमान् व्याघ्रतस्कराद्यनेकभयानर्थव्रातयुतमरण्यं प्रवेशितो दुःखार्त्तो विक्रोशन् बन्धनेभ्यो मुमुक्षुस्तिष्ठति स कथञ्चिदिव कारुणिकेन केनचिन्मोक्षितःस्वदेशान् गन्धारानेवापन्नो निर्वतःसुख्यभूत्तथा । एवमेवसतो जगदात्म स्वरूपात्तेजोवन्नादिमयं देहारण्यं वातपित्तकफरुधिरमेदोमांसास्थिमज्जाशुक्र कृमिमूत्रपुरीषवच्छीतोष्णाद्यनेकद्वन्द्वदुःखवच्चेदं मोहपटाभिनद्धाक्षो भार्यापुत्र पशुबन्ध्वादि दृष्टादृष्टानेक विषये तृष्णापाशितः पुण्यापुण्या-

दि कर्म तस्करैः प्रवेशितोऽहममुष्य पुत्रोममैते बान्धवाः सुख्यहं दुःखी मूढःपण्डितो धार्मिको बन्धुमान् जातो मृतो जीर्णः पापी पुत्रो मे मृतो धनं मे नष्टं हा हतोस्मि कथं जीविष्यामि का मे गतिः किं मेत्राणमित्येवमनेकशत सहस्रानर्थजालवानिव क्रोशन् कथञ्चिदिव पुण्यातिशयात्परमकारुणिकं कञ्चित्सद्ब्रह्मात्मविदं विमुक्तबन्धनं ब्रह्मिष्ठं यदाऽसादयति तेन च ब्रह्मविदा कारुण्याद्दर्शितसंसारविषय दोषदर्शनमार्गो विरक्तः संसारविषयेभ्यः नासि त्वं संसार्य्यमुष्य पुत्रत्वादिधर्म्मवान् किन्तर्हि सद्यत्तत्त्वमसीत्याविद्यामोहपटाभिनहनान्मोक्षितो गन्धारपुरुषवच्च स्वंसदात्मानमुपसम्पद्य सुखी निर्वृतः स्यादित्येतमेवार्थमहाचार्य्यवान् पुरुषो वेदेति तस्यास्यैवमाचार्य्यवतो मुक्ताविद्याभिनहनस्य तावदेव तावानेव कालश्चिरं क्षेपः सदात्मस्वरूपसम्पत्तेरिति वाक्यशेषः। कियान् कालश्चिरमित्युच्यते यावन्नविमोक्ष्ये न विमोक्ष्यते इत्येतत्पुरुषव्यत्ययेन। समार्थ्यात्। येन कर्मणा शरीरमारब्धं तस्योपभोगेन क्षयाद्देहपातो यावदित्यर्थः। अथ तदैव सत्सम्पत्स्ये सम्पत्स्यते। इति शङ्कराचार्यः ॥२॥

अनुवाद—जैसे ( कोई कारुणिक ) पुरुष उसके बन्धन को खोल उससे कहे कि इस दिशा की ओर गंधार देश है इस दिशा को जाओ। यदि वह पण्डित मेधावी है तो गांव गांव पूछता हुआ गन्धार को ही प्राप्त होगा वैसे ही यहां आचार्य्यवान् पुरुष जानता है उसका तब ही तक कालक्षेप होता है जबतक उसने देह को नहीं त्यागा है अनन्तर सद्वाच्य परमेश्वर को प्राप्त होता है ॥ २ ॥

पदार्थः—( यथा ) जैसे ( तस्य ) उस पुरुष के ( अभिनहनम् ) बन्धन को ( प्रमुच्य ) खोलकर ( प्रब्रूयात् ) कहे कि (एताम्+दिशम्) इस दिशा की ओर (गन्धाराः ) गन्धार देश है ( एतांदिशम्) इस दिशा को (व्रज) जाओ ( इति ) ( सः ) वह (पण्डितः+मेधावी ) वह यदि पण्डित और मेधावी है तो (ग्रामात्+ग्रामम्+पृच्छन्) लोगों से एक गांव से दूसरे गांव को पूछता हुआ ( गन्धारान्+एव ) गन्धार देश को ही ( उपसम्पद्येत ) प्राप्त होय ( एवमेव ) वैसे ही ( इह ) इस लोक में ( आचार्य्यवान् ) आचार्य्यवान् ( पुरुषो वेद ) पुरुष जानता है ( तस्य ) उस आचार्य्यवान् पुरुष का ( तावदेव ) तबहीतक ( चिरम् ) देर है अर्थात् तबहीतक कालक्षेप होता है ( यावत्+न+विमोक्ष्ये ) जब तक इस शरीर से छुटकारा नहीं पाता ( अथ ) शरीर त्यागानन्तर ( सम्पत्स्ये ) ब्रह्म को प्राप्त होता है ( इति ) ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो ! इति भूय एव मा**

**भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥**

यह प्रवाक ६ । ८ । ७ । के समान जानना ।

इति चतुर्दश खण्डस्य संस्कृत भाषाभाष्ये समाप्ते ॥ १४ ॥

अथपञ्चदशः खण्डः

**पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्य्युपासते–जानासि मां जानासि मामिति। तस्य यावन्न वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥**

पुरुषम् । सोम्य । उत । उपतापिनम् । ज्ञातयः । पर्य्युपासते । जानासि । माम् । जानासि । माम् । इति । तस्य । यावत् । न । वाक् । मनसि । सम्पद्यते । मनः । प्राणे । प्राणः । तेजसि । तेजः । परस्याम् । देवतायाम् । तावत् । जानाति ॥ १ ॥

भाष्यम्–पुरुषमिति । हे सोम्य! उत अन्यं दृष्टान्तं शृणु । ज्ञातयः परिवाराः । उपतापिनं ज्वरादिव्याधिसंतप्तं मुमूर्षुं पुरुषं पर्य्युपासते परितो वेष्टयित्वा तदन्तिके उपविशन्ति । उपविश्यच तेषां मध्ये कोपि तं मुमूर्षुं ब्रूते हे मित्र ! त्वं मां जानासि। हे पुत्र ! त्वं मां जानासि । हे पुत्र ! इयं ते माता अयं पिता इदं मित्रम्। एते तव सर्वे ज्ञातयस्त्वां परित आसीनाः सन्ति कमपि त्वं जानासि इति ते पुनः पुनस्तं पृच्छन्ति। तस्य मुमूर्षोरुपतापिनोः पुरुषस्य वाक् वाणी यावत्कालपर्य्यन्तं मनसि न सम्पद्यते न विलीयते तथा मनश्च प्राणे मुख्ये प्राणे न सम्पद्यते । प्राणश्च तेजसि आत्माख्ये तेजसि न सम्पद्यते । आत्माख्यं तेजश्च परस्यां देवतायां परमेब्रह्मणि न सम्पद्यते । तावत्कालपर्य्यन्तं सर्वं जानाति ॥ १ ॥

अनुवाद-हे सोम्य ! बान्धव लोग रोग सन्तप्त पुरुष के चारों तरफ बैठते हैं ( और बैठकर उससे पूछते हैं ) मुझको जानते हो ! मुझको जानते हो जबतक उसकी वाणी मन में, मन प्राण में प्राण तेजमें और तेज परा देवता में लीन नहीं होता तबतक वह जानता है ॥ १ ॥

पदार्थः–( सोम्य ) हे सोम्य ! ( उत ) और अन्य दृष्टान्त कहा जाता है ( ज्ञातयः ) बन्धु, बान्धव, इष्ट, मित्र, पिता, मातादि ( उपतापिनम् ) ज्वरादि व्याधिसे पी-

ड़ित ( पुरुषम् ) मुमूर्षु पुरुष के (पर्युपासते) समीप चारों तरफ घेर के बैठते हैं । उनमें से लोग पूछना आरम्भ करते हैं (माम्+जानासि) हे मित्र ! तू मुझको जानता है (माम्+जानासि ) हे पुत्र ! तू मुझको जानता है । हे पुत्र ! यह तेरे पिता माता भ्राता ज्ञाति सब कोई यहां तेरे चारों तरफ बैठे हुए हैं इन में से किसी को जानता है इस प्रकार सब कोई उस मुमूर्षु पुरुष से अपना २ अभीष्ट प्रश्न पूछते हैं (तस्य) उस मुमूर्षु पुरुष की ( वाक् ) वाणी ( मनसि ) मन में और (मनः प्राणे) मन प्राण में, (प्राणः तेजसि) प्राण आत्माख्य तेज में ( तेजः ) और आत्माख्य तेज ( परस्याम्+देवतायाम् ) परादेवता अर्थात् परब्रह्म में ( न सम्पद्यते ) नहीं लीन होता है ( तावत्+जानाति ) ततबतक वह जानता है ॥ १ ॥

**अथ यदास्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥२॥**

अथ । यदा । अस्य । वाक् । मनसि । सम्पद्यते । मनः । प्राणे । प्राणः । तेजसि । तेजः । परस्याम् । देवतायाम् । अथ । न । जानाति ॥ २ ॥

भाष्यम् — अथेति । अथ यदा यस्मिन् काले अस्य मुमूर्षोः पुरुषस्य वाक् मनसि, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायां सम्पद्यते विलीयते । अथ तदा न जानाति ॥ २ ॥

अनुवाद—जब उसकी वाणी मन में, मन प्राण में, प्राण आत्माख्य तेज में और तेज परादेवता में लीन हो जाता है तब वह नहीं जानता ॥ २ ॥

पदार्थः–( अथ ) अनन्तर ( यदा ) जब ( अस्य ) इस मुमूर्षु पुरुष की (वाग्) वाणी ( मनसि ) मन में ( मनः+प्राणे ) मन प्राण में ( प्राणः+तेजसि ) प्राण आत्माख्य तेज में ( तेजः ) आत्माख्य तेज ( परस्यांदेवतायाम् ) परब्रह्म में ( सम्पद्यते ) सम्पन्न अर्थात् लीन होता है ( अथ ) तब ( न+जानाति ) नहीं जानता ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा "तत्त्वमसि" श्वेतकेतो ! इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥३॥**

यह प्रवाक ६ । ८ । ७ । के समान है ॥ ३ ॥

इति पञ्चदश खण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १५ ॥

अथ षोडशः खण्डः

**पुरुषꣳ सोम्योतहस्तगृहीत मानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति। स यदि तस्यकर्ता भवति तत एवानृतमात्मानं कुरुते। सोऽनृताभिसन्धोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति। स दह्यतेऽथ हन्यते ॥ १ ॥**

पुरुषम् । सोम्य । उत । हस्तगृहीतम् । आनयन्ति । अपहार्षीत् । स्तेयम् । अकार्षीत् । परशुम् । अस्मै । तपत । इति । सः । यदि । तस्य । कर्ता । भवति । ततः । एव । अनृतम् । आत्मानम् । कुरुते । सः । अनृताभिसंधः । अनृतेन । आत्मानम् । अन्तर्धाय । परशुम् । तप्तम् । प्रतिगृह्णाति । सः । दह्यते । अथ । हन्यते ॥ १ ॥

भाष्यम्–पुरुषमिति । सोम्य प्रियं पुत्र! दृष्टान्तान्तरं शृणु चौर्यकर्मणि संदिह्यमानं उतापि परीक्षणायच पुरुषं चौरं राजदूता हस्तगृहीतं बद्धहस्तं आनयन्ति । प्राड् विवाक समक्षे प्रापयन्ति किं कृतवानयमिति पृष्टास्ते ब्रुवन्ति । अयमानीतः पुरुषः अपहार्षीत् अस्य पुरुषस्य धनमपाहार्षीत् । अपहृतवानित्यर्थः । ते धर्माधिकारिणः कथयन्ति किमपहरणमात्रेण बन्धनमर्हत्यसौ । अन्यथा दत्तेपिधने बन्धन प्रसंगात् । इत्युक्त्वा पुनस्तेदूतास्तेयमकार्षीत् चौर्येण धनमपाहार्षीत् । इत्येतेषु राजपुरुषेषु वदत्सु स चौरः स्वकर्मापह्नुते नाहंतत्कर्तेति । तदा धर्माधिकारिणः कथयन्ति अस्मै चौराय चौर निमित्ताय परशुं परशुनामकं यन्त्र विशेषं तपत अग्नौ प्रतप्तं कुरुत यूयम् । स यदि तस्य चौर्यस्य कर्ता कारको भवति परन्तु वाह्यतया अपह्नुते तर्हि तत एव तेनैन अपह्नवेन मिथ्याभाषणेन वा आत्मानमनृतं कुरुते । मिथ्यात्वयुक्तं करोति सः अनृताभिसंधः अनृत प्रातिज्ञः अनृतेन असत्येन आत्मानमन्तर्धाय आत्मानमाच्छाद्य तप्तं परशुं प्रतिगृह्णाति तदा स दह्यते अथानन्तरं राजपुरुषैः स्वकृतेनानृताभिसंधिदोषेण हन्यते ॥ १ ॥

अनुवाद–हे सोम्य! ( राजपुरुष ) ( चोर ) पुरुष को हाथ बांधकर ले आते हैं। इस ने अपहरण किया है। इस ने चोरी की है। इसके लिये परशु तप्त करो । वह यदि उस चोरी का कर्ता होता है ( परन्तु ) वाह्यरीति से अस्वीकार करता है तो उसके द्वारा वह अपने आत्मा को असत्य युक्त करता है। वह मिथ्या प्रतिज्ञ पुरुष मि-

थ्यात्व से अपने को छिपा तप्त परशु को ग्रहण करता है । वह दग्ध हो जाता है । तत्पश्चात् मारदिया जाता है ( १ ) ॥ १ ॥

पदार्थः–( सोम्य ) हे प्रिय पुत्र! ( पुरुषम् ) संदिग्ध चोर पुरुष को ( हस्तगृहीतम् ) बद्धहस्त अर्थात् हाथ बांधकर ( आनयन्ति ) राजपुरुष लोग धर्माधिकारियों के निकट ले आते हैं और आनकर कहते हैं कि ( अपहार्षीत् ) इसने इसके धनका अपहरण किया है । केवल अपहरण ही नहीं किया किन्तु ( स्तेयम्+अकार्षीत् ) चोरी करके लेगया राजपुरुष के इतने कहने पर वह चोर पुरुष अपनी चोरी को छिपाता है कि मैंने चोरी नहीं की है तदनन्तर धर्माध्यक्ष लोग उसकी परीक्षा के लिये यह उपाय करते हैं (अस्मै) इसके लिये ( परशुम् ) परशुनाम यन्त्र को ( तपत ) तपाओ ( इति ) इसके अनन्तर उस तप्त परशु को पकड़ने के लिये उस चोर से कहते हैं ( सः+यदि+तस्य+कर्ता+भवति) वह पुरुष यदि चोरी करने वाला रहता है और बाहर से छिपाता है तो ( तत एव ) उस छिपाने से ( आत्मानम् ) अपने को ( अनृतम् ) मिथ्या युक्त (कुरुते) करता है ( सः+अनृताभिसंधः ) वह अनृतभाषी पुरुष ( अनृतेन ) असत्यता से ( आत्मानम्+अन्तर्धाय ) आत्मा को छिपा (तप्तम्+परशुम्+प्रतिगृह्णाति) तप्त परशु यन्त्र को पकड़ता है (सः+दह्यते) तब उससे वह जल जाता है (अथ) अनन्तर (हन्यते) राजपुरुषलोग उसे मार देते हैं ॥ १ ॥

**अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते । स सत्याऽभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥२॥**

अथ । यदि । तस्य । अकर्ता । भवति । ततः । एव । सत्यम् । आत्मानम् । कुरुते । सः । सत्याभिसंधः । सत्येन । आत्मानम् । अन्तर्धाय । परशुम् । तप्तम् । प्रतिगृह्णाति । सः । न । दह्यते । अथ । मुच्यते ॥ २ ॥

भाष्यम्–अथेति । यदि च स संदिह्यमानः पुरुषः तस्यस्तेयस्याकर्ताऽनपहर्ता भवति तर्हि तत एव तेनैव सत्यभाषणेन आत्मानं सत्यं सत्ययुक्तं कुरुते । स सत्याभिसंधः । सत्यमभिसन्दधाति वदतीति सत्याभिसंधः सत्यवादीत्यर्थः । सत्येनात्मानमन्तर्धाय तप्तं परशुं प्रतिगृह्णाति स न दह्यते । अथ धर्माध्यक्षैर्मुच्यते त्यज्यतेऽयं पुरुषः ॥ २ ॥

अनुवाद–और यदि वह संदिग्ध पुरुष चोरी का अकर्ता रहता है तो उसीसे अपने आत्मा को सत्य युक्त करता है । वह सत्यवादी पुरुष उस सत्य से अपने आत्मा

( १ ) भूमिका में इस का वर्णन देखो ।

को ढांक तप्त परशु को ग्रहण करता है वह नहीं दग्ध होता अनन्तर वह छोड़ दिया जाता है ( १ ) ॥ २ ॥

पदार्थः-(अथ) और (यदि) यदि वह संदिग्ध चोर पुरुष जिसको राजपुरुष लोग पकड़कर ले आये हैं ( तस्य+अकर्ता+भवति ) उस चौर्य वृत्ति का नहीं करने वाला रहता है तो (ततः+एव) उस अपनी सत्यता से ही (आत्मानम्+सत्यम्+कुरुते) अपने को सत्य युक्त करता है ( सः+सत्याभिसंधः ) वह सत्यप्रतिज्ञ (सत्येन+आत्मानम्+अन्तर्धाय) सत्यता से अपने को ढांक (तप्तम्+परशुम्+प्रतिगृह्णाति) तप्त परशु को पकड़ता है (सः+न+दह्यते) वह नहीं दग्ध होता है ( अथ+मुच्यते) तत्पश्चात् धर्माध्यक्ष लोग उसे छोड़देते हैं ॥ २ ॥

**स यथा तत्र नादाह्यतैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा "तत्त्वमसि" श्वेतकेतो ! इति । तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ३ ॥**

भाष्यम्-हे सोम्य ! स सत्याभिसन्धः पुरुषः । तत्र परीक्षायां तप्तेन परशुना यथा न अदाह्यत न दग्धोऽभूत् । एवमेव सत्याभिसंधः पुरुषः परलोकेऽपि दुःखैर्न दह्यत ऐतदात्म्यमित्यादि समानम् । इत्थम् अस्य स्वपितुस्तज्विज्ञानं स श्वेतकेतुर्विजिज्ञौ विज्ञातवान् । विजिज्ञाविति द्विरभ्यासोऽध्यायसमाप्त्यर्थः ॥ ३ ॥

इति षोडशखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ १६ ॥

अनुवाद-सो जैसे वहां वह दग्ध नहीं हुआ । हे श्वेतकेतु यह सम्पूर्ण जगत् इसी आत्मा से परिपूर्ण है । इत्यादि । इस प्रकार इस पिता के विज्ञान को उसने जाना । और सब पद ६ । ८ । ७ । के समान हैं ॥ ३ ॥

पदार्थः—( यथा ) जैसे ( सः ) वह सत्याभिसन्ध पुरुष ( तत्र ) उस परीक्षा में ( न+अदाह्येत ) वह दग्ध नहीं हुआ । इत्यादि । ( अस्य ) श्वेतकेतु ने इस अपने पिता के ( तत्+ह ) उस प्रसिद्ध विज्ञान को ( विजिज्ञौ+इति ) जाना ( विजिज्ञौ+इति ) जाना । प्रपाठक समाप्ति के लिये "विजिज्ञौ" इसका दोवार पाठ है और सब पूर्ववत् जानना ॥ ३ ॥ इति षोडश खण्डस्य भाषाभाष्यं समाप्तम् ॥ १६ ॥

इति श्री शिवशङ्कर शर्म कृते छान्दोग्योपनिषद्भाष्ये षष्ठ प्रपाठकस्य संस्कृत भाषाभाष्ये समाप्ते । ६ ॥

( १ ) भूमिका में इसका वर्णन देखो ।

# अथ सप्तमः प्रपाठकः प्रारभ्यते ।

अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति ॥ १ ॥

अधीहि । भगवः । इति । ह । उपससाद । सनत्कुमारम् । नारदः । तम् । ह । उवाच । यत् । वेत्थ । तेन । मा । उपसीद । ततः । ते । ऊर्ध्वम् । वक्ष्यामि । इति ॥ १ ॥

भाष्यम्—अधीहीति । उपसन्नेनान्तेवासिना आचार्यसामीप्ये स्वविद्या नोद्धाटनीया । गुरवो हि स्वयं तदीयां विद्यायोग्यतां विदित्वा तदनुरूपां कल्याणीं शिक्षां ददति चेत्यनुद्धतो नारदो न किञ्चिदप्यात्मगतं विज्ञानं व्यवृणोत् । अतोधीहीत्यनेनारभते । भगवः । हे भगवन् । पूजनीय प्रभो ! अधीहि । अधीष्व अध्यापय । स्मारय वा । अधिगमय वा । मां तत्त्वं शाधीत्यर्थः । अधीहि भगव इति प्राचीनौ प्रयोगौ । सम्प्रति न प्रयुज्येते । "अधीहि-अधिपूर्वकाद् इङ् अध्ययने इत्यस्माद्धातो र्लोटो मध्यम पुरुषस्यैक वचनान्तम् । व्यत्ययेन परस्मैपदम् । तत्रापि अन्तर्भावितण्यर्थो मन्तव्यः । अन्यथा अर्थ कदर्थनापत्तिः । अध्येतुमागतो नारद अध्यापय इत्यस्मिन् स्थाने अधीहीति कथं प्रयुञ्जीत् । अतोयमार्षः प्रयोगः । यद्वा इङ् अध्ययने अध्यापने च धातुः पुरासीदित्यनुमीयते । तैत्तिरीयोपनिषद्यपि । अधीहि भगवो ब्रह्मेति । बहुशः प्रयुक्ताः । यद्वा । इक् स्मरणे । इत्यस्मात् साध्यम् । यद्वा । इण् गतौ इत्यस्मात् प्रक्रिया ज्ञेया । उभयत्रापि अन्तर्भावितण्यर्थः । भगवः । मतुवसोरुसम्बुद्धौ छन्दसि । इत्यनेन रुः । क्वचिच्छान्दसान् प्रयोगान् प्रयुञ्जानस्य लोकस्यापि न दोषः" । इति पूर्वोक्तं वचनमभिधाय । नारदः । प्रसिद्धो देवर्षिः । सनत्कुमारं योगीश्वरं ब्रह्मनिष्ठम् । उपससाद उपविवेश । तत्त्वज्ञानोपलब्धये अधीतनिखिलविद्योऽपि कृतकृत्योऽपि नारदः सर्वतोभावेन सनत्कुमारशरणमाबव्राज । हेति । इतिहाससूचकः । इदमियच्चवेद्मि । इदमधिजिगांसे इति नारदेनानुक्तत्वात् किं कियच्च जानासि । किमधिजिगांससेवेत्याकांक्षायांसमुत्थितायां भगवान् सनत्कुमारो यद्वेत्थेत्यादिना अधीताधिगतवस्तु पृच्छति । तम् । विधिना शरणागतं नारदं प्रति । ह ।

किल । उवाच । यत् हे नारद ! यत् किञ्चित् तत्त्वं । वेत्थ जानासि । त्वं वेत्सि । तेन । आत्मविज्ञानेन माम् । उपसीद । इदमहं जाने इति मां प्रथमं श्रावयित्वा । मत् समीप-मुपविश मच्छरणं व्रजेतियावत् । ततोऽहम् । त्वदीयविज्ञानादूर्द्ध्वम् । अग्रे । ते । तुभ्य-म् । वक्ष्यामि । उपदेक्ष्यामि । इति । यद्वेत्थेत्यादि प्रश्नेनायमपि ध्वनिरायाति यत् परचि-त्तविषयी-भूत-वस्तु-विज्ञान-समर्थो न कोऽपि भवति । कतिपयाधुनिक प्रबन्धेषु चिरन्तना-नृषीन् परचित्तविदः प्रकाश्य तत्तन्नामधेयैस्तदनर्हान् बहून् प्रबन्धान्विरचय्य जगन्मोहय-न्त्यतत्त्वविदः । ते च कपोल कल्पिता जगदहिता इत्यनादर्त्तव्याः । योगि वरिष्ठो ब्रह्मिष्ठः सनत्कुमारो यन्नाऽज्ञानात् तत् कथमपरो विजानीयात् ॥ १ ॥

अनुवाद– हे भगवन् ! ( कृपया मुझे ) सिखलावें । यह ( कहकर ) नारद सन-त्कुमार की शरण में प्राप्त हुए । यह बात प्रसिद्ध है । उस प्रसिद्ध नारद से वे बोले कि जो कुछ तुम जानते हो उससे मुझे प्राप्त होवो ( अर्थात् उसको प्रथम मुझे सुनाओ ) तब उसके आगे मैं तुमसे कहूंगा इति ॥ १ ॥

पदार्थः–( भगवः ) हे भगवन्! ( अधीहि ) मुझे शिक्षा दीजिये पढ़ावें ( इति ) यह कहकर ( नारदः ) नारद ऋषि ( सनत्कुमारम् ) योगिराज सनत्कुमार के ( उप-ससाद ) निकट बैठ गये ( ह ) यह शब्द इतिहास सूचक है । अर्थात् यह ऐतिहा-सिक बात है कि नारद शिक्षा के लिये सनत्कुमार के निकट गये थे ( ह ) प्रसिद्ध ( तम् ) उस नारद से ( उवाच ) सनत्कुमार बोले ( यत् ) जो कुछ ( वेत्थ ) आप जानते हैं ( तेन ) उससे ( माम् ) मुझको ( उपसीद ) प्राप्त होवो । जो कुछ आप जानते हैं उसको प्रथम मुझे सुना देवें ( ततः ) तब उससे ( ऊर्द्ध्वम् ) आगे ( ते ) आपको ( वक्ष्यामि+इति ) उपदेश दूंगा इति ॥ १ ॥

भाष्याशयः—जिस जिज्ञासु ने सम्पूर्ण भाव से अपने को आचार्य में समर्पित क-रदिया है उसे अपनी अधीत विद्या का उद्घाटन करने की आवश्यकता नहीं । क्योंकि गुरु स्वयं उसकी विद्या योग्यता जान तत्सदृश कल्याणी शिक्षा दिया करते हैं इसहेतु नारद ने निज बोध के विषय में कुछ भी निवेदन नहीं किया । अतः "मुझे शिक्षा देवें" इतना ही कह कर चुप हो गये । परन्तु योग्यता, मुख कान्ति से विदित हो जा-ती है । अतः नारद को अधीतविद्य और सुयोग्य जान भगवान् सनत्कुमार को पूछ-ना पड़ा कि हे नारद ! आप क्या और कितना जानते हैं सो मुझे प्रथम सुनावें । स-नत्कुमार के प्रश्न से यहभी स्पष्ट होता है कि हृदय गत वस्तु को कोई भी अन्य पुरुष नहीं जान सकता है क्योंकि परमयोगी सनत्कुमार जब नारद के हृदयगत बोध को

बिन पूछे न जान सके तो अन्य की चर्चा ही क्या। आधुनिक कतिपय ग्रन्थों में प्राचीन ऋषियों को परचित्त विषय विज्ञानी कह उनके नाम पर तुच्छ २ विषय दिखलाये गये हैं। वे सब कपोल कल्पित मानने चाहिये ॥

अधीहि (अधि+इङ्=अध्ययन करना) इस शब्द का अर्थ (पढ़ो) होता है परन्तु यहां इसका अर्थ "पढ़ाओ" ऐसा किया जाता है। यदि यह अर्थ न किया जाय तो अर्थ की संगति नहीं होगी। क्योंकि नारद पढ़ने के लिये आये हैं न कि पढ़ाने के लिये। इस हेतु "अधीहि" को अन्तर्भावितण्यन्तमानकर "अध्यापय" अर्थ करना ही ठीक है। (अधीहि) प्रयोग बहुत प्राचीन है। आजकल इस के स्थल में "अधीष्व" होता है। अतः शङ्कराचार्य "अधीष्व" अर्थ किया है। परन्तु "अधीष्व" को भी "अध्यापय" समझना चाहिये। क्योंकि "अधीष्व" का भी अर्थ (पढ़ो) होगा। यद्वा (अधि+इक्=स्मरण करना) इस धातु का रूप समझना चाहिये। तब इस का अर्थ "स्मरण करवावें" होगा। यद्वा (अधि+इण्=गमन करना) इस का रूप मानना चाहिये। तब "अधीहि" अधि गच्छ "अधिगमय" अर्थात् बोध करवावें यह अर्थ होता इन दोनों धातुओं से यदि "अधीहि" सिद्ध मानें तो प्राचीन प्रयोग मानने की आवश्यकता न होगी। क्योंकि इन दो धातुओं से आज कल भी "अधीहि" ऐसा ही रूप होता है परन्तु अन्तर्भावितण्यर्थ सर्वत्र ही मानना होगा। भगवः—यह भी प्राचीन प्रयोग है आजकल भगवन् होता है ॥ १ ॥

**स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदꣳसामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥**

सः। ह। उवाच। ऋग्वेदम्। भगवः। अध्येमि। यजुर्वेदम्। सामवेदम्। आथर्वणम्। चतुर्थम्। इतिहासपुराणम्। पञ्चमम्। वेदानाम्। वेदम्। पित्र्यम्। राशिम्। दैवम्। निधिम्। वाकोवाक्यम्। एकायनम्। देवविद्याम्। ब्रह्मविद्याम्। भूतविद्याम्। क्षत्रविद्याम्। नक्षत्रविद्याम्। सर्पदेवजनविद्याम्। एतत्। भगवः। अध्येमि ॥ २ ॥

भाष्यम्—स इति। भगवता सनत्कुमारेणाभिहितोह प्रसिद्धो नारद उवाच । भगवः । हे भगवन् ! ऋग्वेदम् । यजुर्वेदम् । सामवेदम् । चतुर्थमाथर्वणम् । अथर्ववेदञ्च अध्येमि स्मरामि "अदन्त आथर्वण शब्दोऽपि अथर्ववेदवाची वसन्तादि गणे पठितः यद्वाऽस्मादेव प्रमाणादकारान्त आदादिश्च आथर्वण शब्दश्चतुर्थवेदे मन्तव्यः । यद्वा अथर्वणा ऋषिणा दृष्टः । आथर्वणः। यद्वा । थर्वा हिंसा विनाशः । न विद्यते थर्वा विनाशो यस्य सः । अथर्वा अविनश्वरः परमात्मा । तमधिकृत्य प्रधानतया प्रवृत्तो वेद आथर्वणः" । सर्वेषां वेदानां स्मरणमात्रमेव वर्त्तते नतु तत्त्वतोऽहं तान् जानामीत्यर्थः । "अधीगर्थदयेशां कर्म्मणि इतितु शेषत्वाविवक्षितत्त्वान्न प्रवर्त्तते" एवमेव पञ्चममितिहासपुराणम् । वेदानां वेदम् । विद्यन्ते ज्ञायन्ते पदार्था एभिरिति वेदाः विद्या पुरा वेद शब्दो विद्यायामपि प्रयुक्तः । विद्यन्ते ज्ञायन्ते विद्या लघूपायेन प्रयोगाश्च अनेन इति वेदो व्याकरण शास्त्रञ्च । व्याकरणं खलु प्रकीर्णान् सुदुर्ज्ञेयान् शब्दान् लघूपायेन स्वल्पसमयेन न ज्ञापयित्वा निखिल शब्दोदधीन् अवगाहयितुं क्षमान् जनान् विदधाति । इतराणि सर्वाणि शास्त्राणि अधीतव्याकरणस्य सुबोधानि जायन्ते च । अतो द्वितीयवेदपदेन व्याकरणमभिधीयते । प्रथम वेद शब्दो विद्यावाची । अतो वेदानां विद्यानां वेदम् । व्याकरणशास्त्रमित्यर्थः समायाति । यद्वा समुदायार्थो व्याकरणम् । वेदानां वेद इति व्याकरणे रूढिरेषा मन्तव्या । पित्र्यम् । पितृशुश्रूषापरकं शास्त्रम् । पितृभिः प्रोक्तं पित्र्यं वा। राशिम् । गणित विद्याम् । दैवम् । उत्पातविद्याम् । निधिम् । महाकालादि निधिशास्त्रम् । वाकोवाक्यम् । तर्क शास्त्रम् । एकायनम् । नीति शास्त्रम् । देवविद्याम् । निरुक्त शास्त्रम् । ब्रह्मविद्याम् वेदव्याख्यापरां शिक्षाकल्पादि विद्याम् । भूतविद्याम् । सर्वप्राणिविद्याम् । क्षत्रविद्याम् । धनुर्विद्याम् । नक्षत्रविद्याम् । ज्यौतिषशास्त्रम् । सर्पदेवजनविद्याम् । सर्पविद्याम् । देवजनविद्याञ्च नृत्यगीतवाद्यशिल्पादि विज्ञान शास्त्रं देवजनविद्यानिगद्यते । भगवः । हे भगवन् । एतत् पूर्वोक्तम् । सर्वं विज्ञानमध्येमि स्मरामि ॥ २ ॥

अनुवाद–वह प्रसिद्ध नारद बोले कि हे भगवन् ! मैं ऋग्वेद, यजुर्वेद, सामवेद और चतुर्थ अथर्ववेद को स्मरण किया करता हूं । और पञ्चम इतिहास पुराण वेदानांवेद ( व्याकरण ) पित्र्य ( पितृ शुश्रूषाविज्ञान ) राशि ( गणित ) दैवविद्या, निधि विद्या वाकोवाक्य (तर्कशास्त्र) एकायन विद्या ( नीतिशास्त्र ) देवविद्या, ब्रह्मविद्या, भूतविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पदेवजनविद्या । इन सब विद्याओं को हे भगवान् ! मैं स्मरण किया करता हूं ॥ २ ॥

पदार्थः—( सः ह ) वे प्रसिद्ध नारद ( उवाच ) बोले कि ( भगवः ) हे भगवन् ! ( ऋग्वेदम् ) ऋग्वेदको ( यजुर्वेदम् ) यजुर्वेद को ( सामवेदम् ) सामवेद को ( चतुर्थम् ) चौथे ( आथर्वणम् ) अथर्ववेद को (अध्येमि) जानता हूं। (पञ्चमम्) पांचवें (इतिहास पुराणम्) इतिहास पुराण (प्राचीन ब्राह्मण ग्रन्थ) को ( वेदानाम्+वेदम् ) वेदों का वेद अर्थात् व्याकरण को ( पित्र्यम्) पितृ शुश्रूषा विज्ञान को ( राशिम् ) गणित को (दैवम् ) उत्पात-विद्याको (निधिम्) निधि विद्याको ( वाकोवाक्यम् ) तर्कशास्त्र को ( एकायनम् ) नीतिविद्या को ( देवविद्याम् ) निरुक्त को ( ब्रह्मविद्याम् ) शिक्षा, कल्प, छन्द आदिक वैदिक विद्याको ( भूतविद्याम् ) पशु, पक्षी, सरीसृप आदिक प्राणि विद्याको ( क्षत्रविद्याम् ) क्षत्रियों की विद्या अर्थात् धनुर्विद्याको ( नक्षत्रविद्याम् ) अश्विनी भरणी आदि नक्षत्र सम्बन्धिनी विद्या को ( सर्पदेवजनविद्याम् ) सर्पविद्या और नृत्यगीतवाद्य शिल्प आदि विद्याको (एतत्) इन सब विद्याओं को ( भगवः ) हे भगवन् ! ( अध्येमि ) जानता हूं*॥ २ ॥

भाष्याशयः —अथर्वन् शब्द—कहीं २ आथर्वण शब्द भी अथर्ववेद वाचक आता है । पाणिनीय सू० ४ । २ । ६६ । वसन्तादि गणमें अथर्वन् और आथर्वण इन दोनों का पाठ है । यद्वा इसी उपनिषद् के प्रमाण से समझना चाहिये कि आथर्वण शब्द पूर्व काल में भी प्रयुक्त होता था । यद्वा । अ+थर्वा । अ=नहीं । थर्वा=विनाश । जिसका कदापि विनाश न हो वह अथर्वा परमात्मा । विशेषतया परमात्मा के अधिकार में जो प्रवृत्त हुआ हो उसे आथर्वण कहना चाहिये । यद्वा । अथर्वा ऋषि से दृष्ट जो वेद वह आथर्वण । इसको अथर्वाङ्गिरस वा आथर्वाङ्गिरस भी कहते हैं । वेदान.वेद—पूर्व समय में विद्या का भी नाम वेद था । पदार्थों का ज्ञान हो जिससे उसे वेद कहते हैं । विद्या के द्वारा झटिति पदार्थों का बोध होता है । अतः वेद नाम विद्या का है। और अनन्त शब्दों का सुगम उपाय से और थोड़े समय में व्याकरण के द्वारा बोध हो जाता है । तथा अधीत व्याकरण मनुष्य का अन्य शास्त्रों में शीघ्र प्रवेश होता है । अतः वेद नाम केवल व्याकरण

---

* ( १ ) इसके अतिरिक्त उपनिषदों में इन विद्याओं की चर्चा पाई जाती है । शिक्षा ( १ ) कल्प ( २ ) व्याकरण ( ३ ) निरुक्त ( ४ ) छन्दः ( ५ ) ज्यौतिष ( ६ ) मुण्डकोपनिषद् १ । १ । ५॥ विद्या (१) उपनिषद् (२) श्लोक (३) सूत्र ( ४ ) अनुव्याख्यान ( ५ ) व्याख्यान ( ६ ) बृ० उ० २ । ४ । १० । और ४ । ५ । ११ ॥ इस उपनिषद् में अथर्ववेद का नाम "अथर्वाङ्गिरस" आया है । और "इतिहास पुराण" शब्द यहां पृथक् है अर्थात् समास किया हुआ नहीं है ।

का भी है । क्योंकि विद्याओं का भी शीघ्र बोध करने वाला व्याकरण है इस कारण "वेदानां वेद" व्याकरण को कहते हैं । यह शब्द रूढिवत् व्याकरण अर्थ में प्रयुक्त होता है। अध्येमि—स्मरण करता हूं "अधि इक्" धातु का अर्थ स्मरण करना होता है। इतना कहने से नारद का अभिप्राय यह है कि सब वेद और ये शास्त्र मुझे केवल स्मरण मात्र हैं । उनके तत्त्व क्या हैं इनके द्वारा परमात्मा कैसे जाना जाता है कैसे उसे जान कर आनन्दी हो जाता है । शोक रहित योगी कैसे होते हैं इत्यादि विषय मुझे मालुम नहीं । मुझे केवल ये सब विद्यायें पढाई गई हैं और मुझे सब स्मरण भी हैं । इसी अभिप्राय से "अध्येमि यह" दो वार पठित है ॥ २ ॥

**सोऽहं भगवो मन्त्रविदेवास्मि नाऽत्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति । तꣳ होवाच—यद्वै किञ्चैतदध्यगीष्ठा नामैवैतत् ॥ ३ ॥**

सः । अहम् । भगवः । मन्त्रविद् । एव । अस्मि । न । आत्मविद् । श्रुतम् । हि । एव । मे । भगवद्दृशेभ्यः । तरति । शोकम् । आत्मविद् । इति । सः । अहम् । भगवः । शोचामि । तम् । मा । भगवान् । शोकस्य । पारम् । तारयतु । इति । तम् । ह । उवाच । यद् । वै । किञ्च । एतत् । अध्यगीष्ठाः । नाम । एव । एतत् ॥ ३ ॥

भाष्यम्—स इति । भगवः हे भगवन् ! सोऽहम् । एतद्विद्यानां पाठकोऽप्यहम् । मन्त्रविदेवास्मि नात्मवित् । कथं त्वं जानासि नाहमात्मविदित्याह । हि यतः । भगवद्दृशेभ्यः । भगवत्सदृशेभ्यो ब्रह्मनिष्ठेभ्य आत्मविद्भ्यो जनेभ्यो मे मम श्रुतमेव श्रुतमस्ति । यदात्मवित् पुरुषः शोकं तरति इति । शोकस्य पारं गच्छति न शोचतीत्यर्थः । हे भगवन् ! सोऽहंशोचामि । सर्वदा शोकापहतस्तिष्ठामीतिहेतोर्नाहमात्मविदिति ब्रवीमि । तं शोकसंतप्तमानसं मा मां शोकस्य पारं भगवान् तारयतु । शोकस्यान्तं मा स्वकीयोपदेशेन प्रापयतु इति । इति ब्रुवन्तं तं नारदंप्रति भगवान् सनत्कुमारोहोवाच । नारद ! यत्किञ्चवै यत्किञ्चिदेव। एतत्। पूर्वोक्तविज्ञानम्। अध्यगीष्ठाः । अधीतवानसि । एतत् पूर्वोक्तं सर्वं नामैव । नाममात्रमेव । नहि शब्दा अविचारिता अमताश्च सन्तस्तत्त्वं प्रकाशयितुं समर्थाः भवन्ति ॥ ३ ॥

अनुवाद–हे भगवन् ! सो मैं केवल मन्त्रवित् हूं आत्मवित् नहीं । क्योंकि आप सदृशों (योगीश्वरों) से मुझ को सुना हुआ है कि आत्मवित् शोक को तर जाते हैं । किन्तु हे भगवन्! मैं तो शोक कर रहाहूं । इसलिये शोक ग्रस्त मुझ को भगवान् शोक के पार उतारें ( इसे सुन वे सनत्कुमार ) उस प्रसिद्ध नारद से बोले कि हे नारद ! जो कुछ यह आपने अध्ययन किया है यह नाम ही है ॥ ३ ॥

पदार्थः–( भगवः ) हे भगवन् ! (सः+अहम् ) वह मैं अर्थात् वेदादि शास्त्रों को जानने वाला भी मैं ( मन्त्रवित्+एव ) मन्त्रवेत्ता ही ( अस्मि ) हूं अर्थात् पाठकमात्र हूं ( आत्मवित्+न ) ब्रह्मवित् नहीं ( हि ) क्योंकि ( भगवद्दृशेभ्यः ) आपके समान तत्त्ववेत्ताओं से (मे) मुझे (श्रुतमेव) सुना ही हुआ है कि (आत्मवित्) ब्रह्मवित् ( शोकम् +तरति ) शोक को तरजाते हैं । अर्थात् शोक नहीं करते (इति) परन्तु ( भगवः ) हे भगवन् ! ( सोऽहम् ) सो मैं (शोचामि) शोक कररहा हूं इस हेतु मैं आत्मवित् नहीं ( तम् ) शोक ग्रस्त उस ( मा) मुझको (भगवान्) आप (शोकस्य+पारम्) शोक के पार (तारयतु) उतारें ( इति ) यह मेरी प्रार्थना है । (तम्+ह+उवाच ) वे प्रसिद्ध सनत्कुमार उस नारद से बोले कि ( यत्किञ्च ) जो कुछ ( एतत् ) पूर्वोक्त विज्ञान का ( वै) निश्चय (अध्यगीष्ठाः) आपने अध्ययन किया है (एतत्+नामैव) यह सब नाम ही है ॥३॥

भाष्याशयः—नाम-सनत्कुमार नारद से कहते हैं कि ऋग्वेदादि ये सब नाम ही हैं । यहां शङ्का हो सकती है कि यदि नाम है तो क्या इनसे कुछ लाभ नहीं है ? । उ० यहां नाम शब्द से अभिप्राय यह है कि वेदादि के अध्ययन से प्रथम वस्तु मात्र के नाम अर्थात् संज्ञा का बोध होता है और उसके साथ २ तद्वाच्य पदार्थ का भी बोध होता जाता है । परन्तु वेदादि शास्त्र पढ़े हुए भी जब नारद को आत्मविद्या रहित; सनत्कुमार ने देखा तो उनको कहना पड़ा कि अभी तक तुम ने नाम ही का अध्ययन किया है ॥ ३ ॥

**नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानांवेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या । नामैवैतन्नामोपास्स्वेति ॥ ४ ॥**

नाम । वै । ऋग्वेदः । यजुर्वेदः । सामवेदः । आथर्वणः । चतुर्थः । इतिहास पुराणः । पञ्चमः । वेदानाम् । वेदः । पित्र्यः । राशिः । दैवः । निधिः । वाको-वाक्यम् । एकायनम् । देवविद्या । ब्रह्मविद्या । भूतविद्या । क्षत्रविद्या । नक्षत्रविद्या । सर्पदेवजनविद्या । नाम । एव । एतत् । नाम । उपास्स्व । इति ॥ ४ ॥

भाष्यम्—ऋग्वेदादि सर्वं नामैव । हे नारद ! एतन्नाम उपास्स्व विचारयेति । शेषं पूर्ववत् ॥ ४ ॥

अनुवाद–( हे नारद ! ) ऋग्वेद, यजुर्वेद, सामवेद और चतुर्थ अथर्ववेद नाम ही हैं । और पञ्चम इतिहासपुराण, व्याकरण, पित्र्य, राशि ( गणित ) दैव ( उत्पातविद्या ) निधिविद्या, वाकोवाक्य ( तर्कविद्या ) एकायन ( नीतिविद्या ) देवविद्या, ब्रह्म-विद्या, भूतविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पदेवजनविद्या॥ ये सब नाम ही हैं । हे नारद ! नाम की भावना करो । इति ॥ ४ ॥

पदार्थः–इसके पदार्थ बहुत सहज हैं द्वितीय प्रवाकवत् जानना। द्वितीय प्रवाक की ही यहां आवृत्ति की गई है ॥ ४ ॥

**स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारोभवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भ-गवो नाम्नो भूय इति ?। नाम्नो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ ५ ॥**

सः । यः । नाम । ब्रह्म । इति । उपास्ते । यावत् । नाम्नः । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । नाम । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । नाम्नः । भूयः । इति । नाम्नः । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ ५ ॥

भाष्यम्–स य इति । स यो ब्रह्मवित् । नाम ब्रह्मेत्युपास्ते । ब्रह्मज्ञानार्थमृग्वे-दादिरूपम् नाम उपास्ते भावयति । तस्य यत् फलं भवति तच्छृणु । यावन्नाम्नोगतं यावत्पर्य्यन्तं नाम्नो गतं गतिरास्ति । तत्र । अस्य नामोपासकस्य यथाकामचारो भवति स्वेच्छाचारो भवतीत्यर्थः । यः पुरुषो नाम ब्रह्मेत्युपास्ते । पुनरपि नारदः पृच्छति । भगवो भगवन् ! नाम्नो नामधेयाद्भूयोऽधिकतरं किमस्ति ? इति प्रश्नः । सनत्कुमार उच-रति । नाम्नो वाव नामधेयाद्वै भूयोस्ति अधिकतरमस्ति इति। पुनरपि नारदः पृच्छति यदि

नामधेयादधिकतरं किमपि वर्त्तते तर्हि तत् मे मह्यं कृपया भगवान् पूज्यतमः खलु भवान् ब्रवीतु । उपदिशतु शास्त्विरत्यर्थः । इति प्रार्थये ॥ ५॥

इति प्रथमखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ १ ॥

अनुवाद—जो ब्रह्मवित् ब्रह्मप्राप्त्यर्थ नाम की भावना करता है ( उसका फल आगे कहा जाता है सो हे नारद! सुनो) जहां तक नाम की गति है वहां तक इसका यथा कामचार ( स्वेच्छागमन ) होता है । जो नामकी ब्रह्मप्राप्त्यर्थ उपासना करता है (फिर नारद पूछते हैं कि ) हे भगवन्! नाम से अधिकतर क्या है ? (सनत्कुमार कहते हैं) नाम से भी तो अधिकतर है ( फिर नारद पूछते हैं कि नाम से जो अधिकतर है ) उसको मेरे लिये भगवान् कहें। इति ॥ ५ ॥

पदार्थः—(सः+यः ) सो जो नामोपासक ( नाम+ब्रह्म+इति+उपास्ते ) ऋग्वेदादि स्वरूप नाम का ब्रह्मप्राप्त्यर्थ अथवा बृहत् मानकर अध्ययन करता है उसको यह फल प्राप्त होता है सो आगे कहते हैं ( नाम्नः ) नामकी ( गतम् ) गति ( यावत् ) जहां तक है ( तत्र ) वहांतक ( अस्य ) इस नामाध्यायी पुरुष का ( यथाकामचारः ) स्वेच्छागमन ( भवति ) होता है । किसको होता है सो पुनः उपसंहार रूप से वर्णन करते हैं (यः+नाम+ब्रह्म+इति+उपास्ते) जो नामका ब्रह्मप्राप्त्यर्थ अध्ययन करता है ( नारद पू० ) (भगवः) हे भगवन्! (नाम्नः) नाम से (भूयः+अस्ति+इति) बड़ा भी कोई पदार्थ है ( सनत्कुमार ) ( नाम्नः+वाव+भूयः+अस्ति+इति ) नाम से तो बड़ा अन्य वस्तु है । ( नारद पू० ) ( तत् ) उसको ( मे ) मेरे लिये ( भगवान्+ब्रवीतु+इति ) आप कृपा कर कहें । हे भगवन्! नाम से भी जो बड़ा है उस विज्ञान की शिक्षा मुझे दीजिये ॥५॥

इति प्रथमखण्डस्य भाषाभाष्यं समाप्तम् ॥ १ ॥

## अथ द्वितीयः खण्डः

**वाग्वाव नाम्नो भूयसी। वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्र-**

( १ ) ब्रह्म शब्द के अर्थ ईश्वर और बड़ा दोनों घट सकते हैं ब्रह्म शब्द की समीक्षा देखो ।

विद्यां नक्षत्रविद्याᳯ सर्पदेवजनविद्याम् । दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवाᳯंश्च मनुष्याᳯंश्च पशूᳯंश्च वयाᳯंसि च । तृणवनस्पतींश्वापदान्याकीटपतङ्गपिपीलकम् । धर्मञ्चाऽधर्मञ्च सत्यञ्चाऽनृतञ्च साधुचासाधु च हृदयज्ञञ्चाहृदयज्ञञ्च यद्वै वाङ्नाभविष्यन्न धर्मो नाऽधर्मो व्यज्ञापयिष्यन्न सत्यं नाऽनृतं न साधु नाऽसाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति । वाचमुपास्स्वेति ॥ १ ॥

वाक् । वाव । नाम्नः । भूयसी । वाक् । वै । ऋग्वेदम् । विज्ञापयति । यजुर्वेदम् । सामवेदम् । आथर्वणम् । चतुर्थम् । इतिहासपुराणम् । पञ्चमम् । वेदानाम् । वेदम् । पित्र्यम् । राशिम् । दैवम् । निधिम् । वाकोवाक्यम् । एकायनम् । देवविद्याम् । ब्रह्मविद्याम् । भूतविद्याम् । क्षत्रविद्याम् । नक्षत्रविद्याम् । सर्पदेवजनविद्याम् । दिवम् । च । पृथिवीम् । च । वायुम् । च । आकाशम् । च । आपः । च । तेजः । च । देवान् । च । मनुष्यान् । च । पशून् । च । वयांसि । च । तृणवनस्पतीन् । श्वापदानि । आकीटपतङ्गपिपीलकम् । धर्मम् । च । अधर्मम् । च । सत्यम् । च । अनृतम् । च । साधु । च । असाधु । च । हृदयज्ञम् । च । अहृदयज्ञम् । च । यद् । वै । वाक् । न । अभविष्यत् । न । धर्मः । न । अधर्म्मः । व्यज्ञापयिष्यत् । न । सत्यम् । न । अनृतम् । न । साधु । न । असाधु । न । हृदयज्ञः । न । अहृदयज्ञः । वाक् । एव । एतत् । सर्वम् । विज्ञापयति । वाचम् । उपास्स्व । इति ॥ १ ॥

भाष्यम्—हे नारद ! नाम्नः सकाशात् । वाग्वाव वागेव । भूयसी अधिकतरा । यतो वाग्वै । ऋग्वेदं विज्ञापयति बोधयति । यजुर्वेदमारभ्य सर्पदेवजनविद्या—पर्य्यन्तं पूर्वं व्याख्यातम् । एवमेव दिवञ्च, पृथिवीञ्च, वायुञ्च, आकाशञ्च, आपश्च, तेजश्च, देवांश्च, मनुष्यांश्च, पशूंश्च, वयांसि च, तृणवनस्पतींश्च, श्वापदानि हिंस्रपशून्, आकीट पतंगपिपीलकं, धर्मञ्च, अधर्मञ्च, सत्यञ्च, अनृतञ्च, साधु च, असाधु च, हृदयज्ञञ्च हृदयप्रियञ्च, अहृदयज्ञञ्च, हृदयस्याप्रियञ्च, एतत्सर्वं वाग्वै विज्ञापयति । हे नारद !

यदि वाङ् नाभविष्यत्तर्हि वचनाभावे अध्यापनं न स्यात् । तदभावे श्रवणं न स्यात् । श्रवणाभावे धर्मादीनामनुष्ठानाभावः । अतएवं नारद । वाचमुपास्स्वेति ॥ १ ॥

अनुवाद—हे नारद ! नाम से वाणी ही अधिकतर है। वाणी ही ऋग्वेद को बोधित करती है । यजुर्वेद, सामवेद, चतुर्थ अथर्ववेद, पञ्चम इतिहास पुराण, वेदानां वेद, पित्र्य, राशि, दैव, निधि, वाकोवाक्य, एकायन, देवविद्या, ब्रह्मविद्या, भूतविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पदेवजनविद्या, द्युलोक और पृथिवी और वायु और आकाश और जल और तेज और देव और मनुष्य और पशु और पक्षी, तृणवनस्पति, श्वापद= हिंस्रजन्तु, कीटपतङ्गपिपीलिका पर्य्यन्तक्षुद्रजन्तु, धर्म और अधर्म, सत्य और अनृत्य, साधु और असाधु, हृदयप्रिय और हृदय का अप्रिय इन सब वस्तुओं को वाणी ही समझाती है । यदि वाणी न होती तो न धर्म न अधर्म न सत्य न असत्य न साधु न असाधु न प्रिय न अप्रिय ज्ञात होता । हे नारद ! इस हेतु ब्रह्मज्ञान के लिये वाणी की उपासना करो ॥ १ ॥

पदार्थः-सनत्कुमार कहते हैं हे नारद ! ( वाग् ) वाणी ( वाव ) ही ( नाम्नः+ भूयसी ) नाम से बड़ी है क्योंकि (वाग्+वै) वाणी ही (ऋग्वेदम्+विज्ञापयति) ऋग्वेद को जतलाती है इसी प्रकार ( यजुर्वेदम्० ) यजुर्वेद, सामवेद, चतुर्थआथर्वण, पञ्चम इतिहास पुराण, व्याकरण, पित्र्य, राशि, दैव, निधि, वाकोवाक्य, एकायन, देवविद्या, ब्रह्मविद्या, भूतविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पविद्या, देवजन (नृतवाद्यादि)विद्या (दिवञ्च) द्युलोक ( पृथिवीञ्च ) पृथिवी ( वायुञ्च ) वायु ( आकाशञ्च ) आकाश ( आपश्च ) जल ( तेजश्च ) तेज ( देवांश्च ) देव ( मनुष्यांश्च ) मनुष्य ( पशूंश्च ) पशु ( वयांसिच ) पक्षी ( तृणवनस्पतीन् ) तृणवनस्पति ( श्वापदानि ) हिंस्रजन्तु ( आकीटपतङ्गपिपीलिकम् ) कीटपतङ्गपिपीलिकापर्य्यन्त सब क्षुद्रजन्तु ( धर्मञ्चाधर्मञ्च ) धर्म और अधर्म ( सत्यञ्चानृतञ्च ) सत्य और मिथ्या (साधु च असाधु च) अच्छा और बुरा ( हृदयज्ञञ्च+अहृदयज्ञञ्च ) हृदय के प्रिय और अप्रिय इन सब को वाणी ही जतलाती है ( यद्वै ) यदि ( वाग् ) वाणी ( न+अभविष्यत् ) नहीं होती तो ( न धर्मः न अधर्मः ) न धर्म न अधर्म ( व्यज्ञापयिष्यत् ) विज्ञात होता क्योंकि वाणी के न रहने से अध्यापन का अभाव , अध्यापन के अभाव से श्रवण का अभाव, श्रवण के अभाव से धर्मादियों का अभाव हो जाता । इसी प्रकार (न सत्यम्+ न अनृतम्) न सत्य न मिथ्या ( न साधु न असाधु ) न मङ्गल न अमङ्गल ( न हृजयज्ञः न अहृदयज्ञः ) न हृदयप्रिय न हृदय के अप्रिय ज्ञात होसकता । हे नारद ! ( वाग्+एव )

वाणी ही (एतत्+सर्वम्) इन सबों को (विज्ञापयति) विस्तार रूप से विज्ञापित करती है इसहेतु ( वाचम्+उपास्स्व इति ) वाणी सम्बन्धी विद्या का अध्ययन करो ॥ १ ॥

**स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथा कामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो ! वाचो भूय इति? वाचो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥**

सः । यः । वाचम् । ब्रह्म । इति । उपास्ते । यावत् । वाचः । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । वाचम् । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । वाचः । भूयः । इति । वाचः । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्—स इति । हे नारद ! यः कश्चिदुपासको ब्रह्मप्राप्त्यर्थं वाग्विद्यामुपास्ते । अस्य पुरुषस्य यावद् वाचो गतं गोचरोऽस्ति तत्र कामचारोभवति । शेषं पूर्ववत् ॥ २ ॥

इति द्वितीयखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ २ ॥

अनुवाद—सो जो कोई ब्रह्म प्राप्त्यर्थ वाग्विद्या का अध्ययन करता है उसकी वहां तक स्वच्छन्द गति होती है जहां तक वाणी का गोचर है जो ब्रह्म प्राप्त्यर्थ वाणी का अध्ययन करता है । नारद—हे भगवन् वाणी से अधिकतर क्या है । सनत्कुमार—वाणी से अधिकतर तो है । नारद—उसको मुझ से भगवान् कहें । इति ॥ २ ॥

पदार्थः—( सः+यः ) सो जो कोई साधक (वाचम्+ब्रह्म+इति+उपास्ते) वाणी को ब्रह्म प्राप्ति के लिये अथवा वाणी को श्रेष्ठमान कर ( उपास्ते ) उपसता अर्थात् अध्ययन करता है उस का आगे फल कहते हैं । ( वाचः+यावत्+गतम् ) वाग्विद्या का जहां तक गोचर है अर्थात् वाग्विद्या में जहां तक पहुंचाने की शक्ति है ( अस्य+तत्र+यथाकामचारः+ भवति ) इस साधक का वहां तक स्वच्छन्दगमन होता है अर्थात् वहां तक पहुंच सकता है उससे आगे नहीं ( यः+वाचम्+ब्रह्म+इति+उपास्ते ) सो जो कई ब्रह्म प्राप्त्यर्थ वाणी का अध्ययन करता है । यह पुनरुक्ति उपासक के विश्वासार्थ है । नारद—( भगवः+वाचः+भूयः+अस्ति+इति ) हे भगवन् ! वचन से अधिकतर क्या कोई वस्तु है ? सनत्कुमार—( वाचः+वाव+भूयः+अस्ति+इति ) वचन से अधिक-

तर पदार्थ तो है ! नारद-( तत्+मे+भगवान्+ब्रवीतु+इति ) हे भगवन्! वचन से जो अधिकतर वस्तु है उस के विषय में मुझ को आप कृपाकर के शिक्षा देवें यह प्रार्थना है ॥ २ ॥ इति द्वितीयखण्डस्य भाषाभाष्यं समाप्तम् ॥ २ ॥

अथ तृतीयः खण्डः

**मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचञ्च नाम च मनोऽनुभवति । स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते । कर्माणि कुर्वीयेत्यथ कुरुते । पुत्रांश्च पशूंश्चेच्छेयेत्यथेच्छत इमञ्च लोकममुञ्चेच्छेयेत्यथेच्छते । मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ॥ १ ॥**

मनः । वाव । वाचः । भूयः । यथा । वै । द्वे । वा । आमलके । द्वे । वा । कोले । द्वौ । वा । अक्षौ । मुष्टिः । अनुभवति । एवम् । वाचम् । च । नाम । च । मनः । अनुभवति । सः । यदा । मनसा । मनस्यति । मन्त्रान् । अधीयीय । इति । अथ । अधीते । कर्माणि । कुर्वीय । इति । अथ । कुरुते । पुत्रान् । च । पशून् । च । इच्छेय । इति । अथ । इच्छते । इमम् । च । लोकम् । अमुम् । च । इच्छेय । इति । अथ । इच्छते । मनः । हि । आत्मा । मनः । हि । लोकः । मनः । हि । ब्रह्म । मनः । उपास्स्व । इति ॥ १ ॥

भाष्यम्—मन इति । मनो मननवृत्तिरन्तःकरणस्य धर्मविशेषः । वाव एव निश्चितम् । वाचो वाण्याः सकाशात् । भूयोऽधिकतरम् । एतदेवाग्रेदर्शयति दृष्टान्तैः । यथा लोके मुष्टिः संहतकरः । द्वे वा आमलके फले । द्वे वा कोले बदरफले । द्वौ वा अक्षौ विभीतकफले । अनुभवति विजानाति । अर्थात् हस्तगते द्वे वा फले यथा मुष्टिः स्वकीयव्याप्त्या सम्यग् विजानाति । एवमनेन प्रकारेण । वाचञ्च वाणीञ्च । नाम च नामधेयञ्च । मनो मननवृत्तिरनुभवति । पुनरपि तदेवोदाहरणैर्विस्पष्टयति । स पुरुषो यदा । मंत्रान् वेदान् । अधीयीय पठेयमिति मनसा मनस्यति मननं करोति । अथ तदा अधीते पठति । कर्माणि कुर्वीयम् । कुर्य्याम् ॥ इति मनसा मनस्यति । अथ कुरुते क्रियायां प्रवर्त्तते । पुत्रांश्चापत्यानि । पशूंश्च गोहिरण्यादीनि वित्तानि । इच्छेय इच्छेयम् । आ-

त्मनेपदमार्षम् । इति मनसा मनस्यति । अथ तदा इच्छते । इच्छति । इमञ्च दृश्यमानं मर्त्यसंज्ञकं लोकं भुवनम् । अमुञ्च ऊद्ध्र्वं दृश्यमानं द्युलोकाख्यञ्च लोकमिच्छेय इच्छेयमिति मनस्यति । अथ इच्छते इच्छति । एतेन मनसो वाचो भूयस्त्वं सूच्यते । प्रथमं मनोव्यापारेणान्तःकरणं क्षुभ्यते । क्षोभेण नामाश्रिता वाग् व्याप्रियते । तदा सर्वतो निश्चिता इच्छानुकूलायां कृतौ मनुष्य प्रवृत्तिः । एतेन मनसो व्याप्तिर्नाम्निवचसि च विज्ञायते । यद्वस्तु यस्य व्याप्यं भवति । तद्धि तस्यान्तर्गतम् । अन्तर्गतत्वा-न्न्यूनता प्रसिद्धा । नामवाचोर्मनो व्याप्यत्वात् मनसो न्यूनता । मनसोधिकतेतिसिद्धम् । मनो हि आत्मा । सति मनसि ! आत्मनः कर्तृत्वं भोक्तृत्वञ्च सिध्यति । अतो मनस्या-त्मत्वारोपः । सत्येव हि मनसि लोको भवति । तत्प्राप्त्युपायानुष्ठानञ्च । अतो मनो हि लो-कः । सत्येव मनसि ब्रह्म विज्ञायते । तल्लाभोपायप्रवृत्तिश्च । अतो हि मनो ब्रह्म इत्युप-दिश्यते । अत एव मन उपास्स्व । मनसो धर्म्मं विद्धीत्यर्थः । ब्रह्म बृहत् । मनोबृहत्त्वेनो-पास्स्वेत्यर्थः यद्वा । ब्रह्म प्राप्त्यर्थं मन उपास्स्व ॥ १ ॥

अनुवाद—मन ही वाणी से अधिकतर है । जैसे दो आमलक फलों का वा दो बदरी फलों का अथवा दो बहेड़े के फलों का मुष्टि अनुभव करती है वैसे ही वाणी का और नाम का अनुभव मन करता है । सो जो कोई जब "मैं मन्त्रों का अध्ययन करूं" ऐसा मनके द्वारा मनन करता है । तब वह मन्त्रों को पढ़ता है "कर्मों को करूं" ऐसे मनन के अनन्तर कर्मों को करता है "पुत्रों और पशुओं की इच्छाकरूं" ऐसे मनन के अनन्तर उनकी इच्छा करता है । "इस लोक और उस लोक की इच्छा करूं" ऐसा मनन करने पर उसके लिये इच्छा करता है । इस कारण मन ही आत्मा है । अतः मन ही लोक है । अतः मन ही बड़ा है । हे नारद ! इस हेतु मानसिक शास्त्रका अध्ययन करो ॥ १ ॥

पदार्थः—(मनः+वाव) हे नारद ! मन ही तो (वाचः+भूयः) वाणी से श्रेष्ठ है । मनकी श्रेष्ठ-ताको अनेक दृष्टान्तों से दिखलाते हैं (यथा+वै मुष्टिः) जैसे ही मुट्ठी (द्वे+वा+आमलके) दो आंम लों (द्वे+वा+कोले) अथवा दो बेर फलों (द्वौ+वा+अक्षौ) अथवा दो बहेड़े के फलों को ( अनुभवति ) अनुभव करती है ( एवम् ) वैसे ही ( मनः ) मनन वृत्ति ( वाच-ञ्च+नामच ) वाग् और नाम इन दोनों का (अनुभवति ) अनुभव करती है पुनः आगे अन्यप्रकार के दृष्टान्त देते हैं ( सः ) सो जो कोई पुरुष ( यदा+मनसा+मनस्यति ) जब मन से मनन करता है कि (मंत्रान्+अधीयीय ) मन्त्रों को पढ़ूं ( अथ+अधीते ) तत्पश्चात् पढ़ता है ( कर्माणि+कुर्वीय ) कर्मों को करूं ( अथ+कुरुते ) तब करता है

( पुत्रान् च पशून् च) पुत्रों और पशुओं की ( इच्छेय ) इच्छा करूं ( अथ इच्छते ) तत्पश्चात् इच्छा करता है ( इमञ्च+लोकम्+अमुञ्च ) इस लोक और परलोक की ( इच्छेय ) इच्छा करूं (अथ+इच्छते) पश्चात् इच्छा करता है इस लिये हे नारद ! मन वाणी से श्रेष्ठ है । इस हेतु (मनः+हि+आत्मा) मन ही आत्मा है क्योंकि मनके रहने पर ही आत्मा का कर्तृत्व भोक्तृत्व सिद्ध होता है इस हेतु मन आत्मा कहागया है ( मनः+हि+लोकः ) मन ही लोक है क्योंकि मन की स्थिति से ही लोक होता है और तत्प्राप्त्युपाय का अनुष्ठान भी होता है ( मनः+हि+ब्रह्म) और मन ही ब्रह्म है । ब्रह्म प्राप्ति का साधन मन ही है अथवा मन बड़ा है इसहेतु हे नारद ! (मनः+उपास्स्व+इति ) मानसिक विद्या का अध्ययन करो ॥ १ ॥

**स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति। मनसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥**

सः । यः । मनः । ब्रह्म । इति । उपास्ते । यावत् । मनसः । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । मनः । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । मनसः । भूय । इति । मनसः । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्—स इति। स य उपासको ब्रह्मेति ब्रह्मप्राप्ति साधनमिति मन उपास्ते। मनोवृत्ति धर्मानखिलान् विज्ञातुं प्रयतते । तस्योपासकस्य यत्फलं तच्छृणु नारद ! यावन्मनसो गतमित्यादि समानम् ॥ १ ॥ इति तृतीयखण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद—जो कोई उपासक मन को ब्रह्मप्राप्ति साधन मान मन की उपासना करता है (उसका यह फल है) जहां तक मन की गति है वहां तक इस उपासक का यथाकामचार ( स्वेच्छागमन) होता है । जो मन की ब्रह्मप्राप्ति साधन समझ उपासना करता है ( नारद पूछते हैं ) हे भगवन् ! मन से अधिकतर भी "कोई वस्तु" है ? (सनत्कुमार कहते हैं ) निश्चय मन से भी अधिकतर वस्तु है ( नारद पू० ) भगवान् मुझ से उसका उपदेश करें । इति ॥ २ ॥

पदार्थः—( सः ) वह ( यः ) जो ( मनः ) मनको ( ब्रह्मेति ) ब्रह्म की प्राप्ति का साधन समझ ( उपास्ते ) मन की उपासना करता है अर्थात् मन के धर्मों को वि-

चारता है उसका फल आगे कहा जाता है ( यावत् ) जितना ( मनसः ) मनका ( गतम् ) गमन अर्थात् मनोगोचर है ( तत्र ) वहां ( अस्य ) इस मन के उपासक का ( यथाकामचारः ) स्वेच्छागमन ( भवति ) होता है ( मनः+ब्रह्म+इति+उपास्ते ) जो मन की ब्रह्म प्राप्ति का साधन समझ उपासना करता है । नारद पूछते हैं ( भगवः ) हे भगवन् ( मनसः ) मन से ( भूयः ) अधिकतर ( अस्ति ) क्या कोई वस्तु है ? ( इति ) इति शब्द प्रश्न समाप्ति का सूचक है । सनत्कुमार कहते हैं कि ( मनसः ) मन से ( वाव ) निश्चय ( भूयः ) अधिकतर ( अस्ति ) है ( इति ) फिर नारद पूछते हैं कि ( भगवान् ) आप कृपाकर ( मे ) मुझ को ( तत् ) उसका ( ब्रवीतु ) उपदेश करें । इति ॥ २ ॥ इति तृतीय खण्डस्य भाषाभाष्यं समाप्तम् ॥३॥

## अथ चतुर्थः खण्डः

**सङ्कल्पो वाव मनसो भूयान्यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

सङ्कल्पः । वाव । मनसः । भूयान् । यदा । वै । सङ्कल्पयते । अथ । मनस्यति । अथ । वाचम् । ईरयति । ताम् । उ । नाम्नि । ईरयति । नाम्नि । मन्त्राः । एकम् । भवन्ति । मन्त्रेषु । कर्माणि ॥ १ ॥

भाष्यम्—सङ्कल्प इति । हे नारद! सङ्कल्प एव मनसः सकाशात् भूयानधिकतरः । सङ्कल्पो हि मनोवदन्तःकरणवृत्तिविशेषः । कर्त्तव्याकर्त्तव्यविषयविभागेन समर्थनमितियावत् । विभागेन हि समर्थिते विषये चिकीर्षा बुद्धिर्मननानन्तरं भवति । कथम् । यदा वै सङ्कल्पयते कर्त्तव्यादिविषयान् विभजयते । इदं कर्त्तुं युक्तमिदन्नेति । अथ मनस्यति मन्त्रानधीयीयेत्यादि । अथानन्तरम् । वाचं वाणीमीरयति प्रेरयति मन्त्रादीनामुच्चारणविषये । ताञ्च वाचमु हि नाम्नि नामोच्चारणनिमित्तां विवक्षां कृत्वा । ईरयति प्रेरयति । नाम्नि नामसामान्ये मन्त्राः शब्दविशेषाः सन्त एकं भवन्ति । अन्तर्भवन्तीत्यर्थः । सामान्ये हि विशेषोऽन्तर्भवति । मन्त्रेषु कर्माण्येकं भवन्ति । मन्त्रप्रकाशितानि कर्माणि क्रियन्ते । नामन्त्रकमस्ति कर्म्म । यद्धि मन्त्र प्रकाशनेन लब्धसत्ताकं सत्कर्म ब्राह्मणेनेदं कर्तव्यमस्मै फलायेति विधीयते । याप्युत्पत्तिर्ब्राह्मणेषु कर्मणो दृश्यते सापि मन्त्रेषु लब्धसत्ताकानामेव कर्मणां स्पष्टीकरणम् । न हि मन्त्राप्रकाशितं कर्म किञ्चिद्ब्राह्मणोत्पन्नं

दृश्यते । त्रयीविहितं कर्मेति प्रसिद्धं लोके । त्रयीशब्दश्चर्ग्यजुः सामसमाख्याः । मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि चाथर्व्वणे १ । २ । १ ॥ तस्माद्युक्तं मन्त्रेषु कर्माण्येकं भवन्तीति ॥ १ ॥

अनुवाद—सङ्कल्प ही मन से अधिकतर है जब सङ्कल्प करता है तदनन्तर मनन करता है तदनन्तर वाणी की प्रेरणा करता है और उस वाणी को नाम में प्रेरित करता है । तब नाम में मन्त्र एक होते हैं और मन्त्र में कर्म एक होते हैं ॥ १ ॥

पदार्थः — हे नारद ! ( सङ्कल्पः+वाव ) सङ्कल्प ही ( मनसः ) मन से ( भूयान् ) बड़ा है (यदा वै) जब ही मनुष्य (सङ्कल्पयते) संकल्प करता है (सङ्कल्प अन्तःकरण की एक वृत्ति विशेष है अर्थात् कर्तव्य अकर्तव्य विषयों को पृथक् पृथक् कर समर्थन करने का नाम सङ्कल्प है विभाग पूर्वक जब विषय विचारित होते हैं तबही बुद्धिमानों को करने की इच्छा होती है इसहेतु सङ्कल्प और मन में बहुत भेद है ) (अथ+मनस्यति) तदनन्तर मनन करता है कि इन मन्त्रों को पढ़ूं या न पढ़ूं कर्म करूं या न करूं इत्यादि । इस प्रकार मन के द्वारा स्थिर कर ( वाचम्+ईरयति ) मन्त्रोच्चारण में वचन को प्रेरणा करता है ( ताम्+उ ) तब उसी वचन को ( नाम्नि ) नाम के द्वारा उच्चारण निमित्त इच्छा करके ( ईरयति ) प्रेरणा करता है ( नाम्नि ) नाम में ( मन्त्राः+एकम्+भवन्ति ) मन्त्र एक होते हैं ( मन्त्रेषु+कर्माणि ) मन्त्रों में कर्म एक होते हैं ॥ १ ॥

भाष्याशयः—मन्त्र अर्थात् वेद । वेदविहित ही कर्म किये जाते हैं अवेदविहित नहीं । ब्राह्मण ग्रन्थ में यह कर्म करना चाहिये यह नहीं करना चाहिये इसका यह फल है इत्यादि विषयों को जो प्रकाशित करते हैं वे सब वेद में विद्यमान ही हैं वैदिक कर्म का ही स्पष्टी करण ब्राह्मण ग्रन्थ करते हैं । ब्राह्मण में कोई ऐसा कर्म नहीं जो वेदों में अप्रकाशित हो । लोक में भी यह प्रसिद्ध है कि वेद विहित को ही कर्म कहते हैं इसीहेतु मुण्डकोपनिषद् में कहा गया है कि मन्त्रों में जिन कर्मों को ऋषियों ने देखा उनका ही विस्तार पीछे करते गये इसीहेतु मंत्र में सब कर्म एक होते हैं ऐसा कहा गया है ॥ १ ॥

**तानि ह वैतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि । समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशञ्च समकल्पन्ताऽऽपश्च**

तेजश्च। तेषाᳬ संक्लृप्त्यै वर्षᳬ सङ्कल्पते वर्षस्य संक्लृप्त्या अन्नᳬ सङ्कल्पतेऽन्नस्य संक्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणानाᳬ संक्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणाᳬ संक्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणाᳬ संक्लृप्त्यै लोकः सङ्कल्पते लोकस्य संक्लृप्त्यै सर्वᳬ सङ्कल्पते । स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ॥ २ ॥

तानि । ह । वा । एतानि । सङ्कल्पैकायनानि । सङ्कल्पात्मकानि । सङ्कल्पे । प्रतिष्ठितानि । समक्लपताम् । द्यावापृथिवी । समकल्पेताम् । वायुः । च । आकाशम् । च । समकल्पन्त । आपः । च । तेजः । च । तेषाम् । संक्लृप्त्यै । वर्षम् । सङ्कल्पते । वर्षस्य । संक्लृप्त्यै । अन्नम् । सङ्कल्पते । अन्नस्य । संक्लृप्त्यै । प्राणाः । सङ्कल्पन्ते । प्राणानाम् । संक्लृप्त्यै । मन्त्राः । सङ्कल्पन्ते । मन्त्राणाम् । संक्लृप्त्यै । कर्माणि । सङ्कल्पन्ते । कर्मणाम् । संक्लृप्त्यै । लोकः । सङ्कल्पते । लोकस्य । संक्लृप्त्यै । सर्वम् । सङ्कल्पते । सः । एषः । सङ्कल्पः । सङ्कल्पम् । उपास्स्व । इति ॥ २ ॥

भाष्यम्—तानीति । तानि पूर्वोक्तानि । ह वा निपातावलङ्कारार्थौ । एतानि इमानि मन आदीनि सङ्कल्पैकायनानि । सङ्कल्प एकोऽयनं गमनं येषां तानि सङ्कल्पैकायनानि । सङ्कल्प लयस्वभावानीत्यर्थः । सङ्कल्पात्मकानि । उत्पत्ति समये सङ्कल्प स्वरूपाणि इव तिष्ठन्ति । स्थितौ सङ्कल्पे प्रतिष्ठितानि भवन्ति । द्यावापृथिवी । द्यौश्चपृथिवी च इति द्यावापृथिवी द्यावापृथिव्यावित्यर्थः । समक्लपताम् । कृत सङ्कल्पे इव तिष्ठतः । तथा वायुश्चाकाशश्च एतावपि समकल्पेतां सङ्कल्पं कृतवन्ताविवेत्यर्थः । आपश्च जलं च तेजश्चाग्निश्च एतान्यपि समकल्पन्त कृत सङ्कल्पानीव तिष्ठन्ति तेषां द्यावापृथिव्यादीनां संक्लृप्त्यै सङ्कल्पाय सङ्कल्पार्थं वर्षं वृष्टिः संकल्पते समर्थं भवति । तथा वर्षस्य संक्लृप्त्यै संकल्प निमित्तमन्नं सङ्कल्पते सङ्कल्पं करोति भवतीत्यर्थः । अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते । अन्नमयाहि प्राणा अन्नोपष्टम्भकाः । प्राणानां संक्लृप्त्यै मन्त्राः शब्दाः सङ्कल्पन्ते समर्थाभवन्ति । प्राणवन्तोहि मन्त्रानध्येतुं समर्थाभवन्ति । मन्त्राणां संक्लृप्त्यै संकल्पनिमित्तं कर्माणि अग्निहोत्रादीनि सङ्कल्पन्ते । अनुष्ठीयमानानि भवन्ति । मन्त्रप्रकाशितानि कर्माणि फलाय समर्थानि भवन्तीत्यर्थः । कर्मणां संक्लृप्त्यै सङ्कल्पनिमित्तं लोकः अनुष्ठाता सङ्कल्पते । कर्मकर्तृ समवा-

यितया समर्थो भवतीत्यर्थः। लोकस्य संक्लृप्त्यै सर्वं सङ्कल्पते सर्वं जगत् समर्थं भवतीत्यर्थः। स एष संकल्पः। सर्वं संकल्प मूलमित्यर्थः। हे नारद! संकल्पमुपास्स्व विजानीहीत्यर्थः। इति ॥ २ ॥

अनुवाद--वे प्रसिद्ध ये ( मन आदिक ) सङ्कल्परूप एक आयतन=आश्रय वाले हैं। सङ्कल्प स्वरूप हैं सङ्कल्प में प्रतिष्ठित हैं। द्युलोक और पृथिवी सङ्कल्प को करती हुई सी हैं। वायु और आकाश सङ्कल्प करते हुए के समान विद्यमान हैं। जल और तेज मानो सङ्कल्प कर रहे हैं। उन पृथिवी आदिकों के सङ्कल्प निमित्त वर्षा समर्थ होता है। वर्षा के सङ्कल्प के निमित्त अन्न समर्थ होता है। अन्न के सङ्कल्प से प्राण समर्थ होते हैं। प्राणों के सङ्कल्प के निमित्त मन्त्र समर्थ होते हैं। मन्त्र के सङ्कल्प निमित्त कर्म समर्थ होते हैं। और कर्म के सङ्कल्प निमित्त लोक समर्थ होते हैं। और लोक के सङ्कल्प निमित्त सब समर्थ होता है। सो यह सङ्कल्प है। हे नारद! इस सङ्कल्प का अध्ययन करो ॥ २ ॥

पदार्थः-( ह+वै ) निश्चय (तानि+एतानि) वे ये मन नाम आदिक ( सङ्कल्पैकायनानि ) संकल्पाश्रय हैं संकल्प ही एक=मुख्य, अयन=आश्रय है जिनके ( सङ्कल्पात्मकानि ) यथार्थ में संकल्प स्वरूप ही हैं ( संकल्पे+प्रतिष्ठितानि ) संकल्प में प्रतिष्ठित हैं। ईश्वर की सृष्टि में प्रायः सब पदार्थ कृत संकल्प हैं क्योंकि संकल्प विना कोई कार्य नहीं होता। यद्यपि संकल्प चेतन का धर्म है। तथापि अचेतन में भी अध्यारोप होता है। संकल्प के समान चेतन भी सर्वथा मौन और गंभीर भाव को धारण करता है। तद्वत् यह पृथिवी प्रभृति पदार्थ भी प्रतीत होता। अतः (द्यावापृथिवी) द्युलोक और पृथिवी ( समक्लृपताम्) मानो संकल्पवती लक्षित होती हैं (वायुः+च+आकाशम्+च) वायु और आकाश (समकल्पेताम्) मानो कृत संकल्प से प्रतीत होते हैं (आपः+च+तेजः+च) जल और अग्नि भी (समकल्पन्त) कृत संकल्प ही लक्षित होते हैं ( तेषाम् ) द्यावापृथिवी आदिकों के ( संक्लृप्त्यै ) सङ्कल्प निमित्त ( वर्षम् ) वृष्टि ( सङ्कल्पते ) सङ्कल्प करता है और ( वर्षस्य+सङ्क्लृप्त्यै ) वृष्टि के सङ्कल्प निमित्त ( अन्नम्+सङ्कल्पते ) अन्न सङ्कल्प करता है ( अन्नस्य+सङ्क्लृप्त्यै ) अन्न के सङ्कल्प निमित्त ( प्राणाः+सङ्कल्पन्ते ) प्राण सङ्कल्प करते हैं ( प्राणानाम्+सङ्क्लृप्त्यै ) प्राण के सङ्कल्प निमित्त ( मन्त्राः+सङ्कल्पन्ते ) मन्त्र सङ्कल्पित होते हैं। सङ्कल्प के साथ पढ़े जाते हैं ( मन्त्राणाम्+सङ्क्लृप्त्यै ) मन्त्र के सङ्कल्प निमित्त ( कर्म्माणि सङ्कल्पन्ते ) सङ्कल्प पूर्वक कर्म किये जाते हैं (कर्मणाम्+सङ्क्लृप्त्यै) कर्मों के अनुष्ठान

निमित्त ( लोकः+सङ्कल्पते ) लौकिक सुख प्राप्त होता है ( लोकस्य+सङ्क्लृप्त्यै ) लोक प्राप्ति निमित्त ( सर्वम्+सङ्कल्पते सब ही कुछ प्राप्त होता है (सः+एषः+संकल्पः) ऐसा यह सङ्कल्प है ( सङ्कल्पमुपास्स्व इति ) सङ्कल्प का मनन करो ॥ २ ॥

**स यः संकल्पं ब्रह्मेत्युपास्ते क्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति । यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः संकल्पाद्भूय इति ? संकल्पाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥**

सः । यः । सङ्कल्पम् । ब्रह्म । इति । उपास्ते । क्लृप्तान् । वै । सः । लोकान् । ध्रुवान् । ध्रुवः । प्रतिष्ठितान् । प्रतिष्ठितः । अव्यथमानान् । अव्यथमानः । अभिसिद्ध्यति । यावत् । सङ्कल्पस्य । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । सङ्कल्पम् । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । सङ्कल्पात् । भूयः । इति । सङ्कल्पाद् । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ ३ ॥

भाष्यम्—स इति । स यः सङ्कल्पोपासकः । संकल्पं ब्रह्मेति ब्रह्मप्राप्तिसाधनम्मत्वा । उपास्ते सङ्कल्पधर्मान् विभावयति सः पुरुषः स्वयमपि सङ्कल्प विषये ध्रुवो दृढः। प्रतिष्ठितो ज्ञातसंकल्पमूलः अव्यथमानः पुनः पुनः सङ्कल्पकरणे निश्चयः सन्। क्लृप्तान्, ध्रुवान्, प्रतिष्ठितान्, अव्यथमानान्, लोकान्, अभिसिध्यति प्राप्नोति तथा च यावत्संकल्पस्यगतमित्यादि पूर्ववत् ॥ ३ ॥

अनुवाद—सो जो कोई ब्रह्म प्राप्त्यर्थ संकल्प तत्त्वों का अध्ययन करता है वह स्वयं ध्रुव प्रतिष्ठित और अव्यथमान होकर क्लृप्त ( संकल्प निपुण ) ध्रुव, प्रतिष्ठित, अव्यथमान लोकों को प्राप्त होता है । हे नारद ! संकल्प की जहां तक गति है वहां तक उसका यथाकामचार होता है । जो कोई ब्रह्म प्राप्त्यर्थ संकल्प विज्ञान का अध्ययन करता है । नारद पू० । हे भगवन् ! संकल्प से भी बड़ी कोई वस्तु है ? सनत्कुमार—निश्चय संकल्प से भी बड़ी वस्तु है । नारद—उसका उपदेश कृपया आप मुझसे करें यही प्रार्थना है ॥ ३ ॥

पदार्थः-( सः+यः+सङ्कल्पम् ) जो कोई उपासक सङ्कल्प को ( ब्रह्म+इति) बड़ा समझ वा ब्रह्मप्राप्ति निमित्त ( उपास्ते ) अध्ययन करता है उसके गुणों को तत्त्वतः जानने को प्रयत्न करता है ( सः+वै ) वह कृतसङ्कल्प ज्यों ज्यों सङ्कल्प में निपुण होता जाता है त्यों त्यों उसे अधिक फल प्राप्त होता है सो आगे कहते हैं ( क्लृप्तान् ) अच्छे समर्थ सङ्कल्प में निपुण ( लोकान् ) पुत्र पौत्रादि लोकों को ( अभिसिद्ध्यति)प्राप्तकरता है (ध्रुवः) अपने यदि सङ्कल्प में दृढ़ होता है तो ( ध्रुवान् ) दृढ़ पुत्रादिकों को पाता है तब (प्रतिष्ठितः) वह जगत् में प्रतिष्ठित होता है और तब (प्रतिष्ठितान् ) प्रतिष्ठित पुत्रादि संतानों को प्राप्त करता है । और ( अव्यथमानः ) अक्लेशित होकर ( अव्यथमानान् ) अक्लेशित पुरुषों को ( अभिसिद्ध्यति ) पाता है । इस प्रकार सङ्कल्प शास्त्र के अध्येता ( यावत्+सङ्कल्पस्य+गतम् ) जहां तक सङ्कल्प का पहुंच है ( तत्रास्य+यथाकामचारः+भवति ) वहां तक इसका स्वेच्छागमन होता है । इत्यादिपूर्ववत् ॥ ३ ॥ इति चतुर्थखण्डस्य संस्कृत भाषाभाष्ये समाप्ते ॥ ४ ॥

अथ पञ्चमः खण्डः

**चित्तं वाव सङ्कल्पाद्भूयो यदा वै चेतयतेऽथ संकल्पयतेथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

चित्तम् । वाव । सङ्कल्पाद् । भूयः । यदा । वै । चेतयते । अथ । सङ्कल्पयते । अथ । मनस्यति । अथ । वाचम् । ईरयति । ताम् । उ । नाम्नि । ईरयति । नाम्नि । मन्त्राः । एकम् । भवन्ति । मन्त्रेषु । कर्म्माणि ॥ १ ॥

भाष्यम्-चित्तमिति । चित्तं वाव चित्तमेव । सङ्कल्पाद्भूयोधिकतरं वर्त्तते । चित्तं चेतयितृत्वं प्राप्तकालानुरूपबोधवत्वं अतीतानागत-विषय-प्रयोजन-निरूपण-सामर्थ्यं च तत् संकल्पादपिभूयः । तदेवाग्रे प्रदर्शयति यदा वै पुरुषः चेतयते प्राप्तस्य वस्तुनः आदानाय त्यागाय वा चिन्तयति । अथानन्तरं सङ्कल्पयते अथ तदनन्तरं मनस्यति मननं करोति । अथ तदनन्तरं वाचं वाणीमीरयति मन्त्रानामुच्चारणे प्रेरयति । तामु तामेव वाणीम् । नाम्नि ईरयतीत्यादि पूर्ववद्विज्ञेयम् ॥ १ ॥

पदार्थः-( चित्तम्+वाव+संकल्पाद्+भूयः ) चित्त ही संकल्प से बड़ा है । (यदा वै ) जब किसी पदार्थ का (चेतयते ) चिन्तन करता है कि इसे ग्रहण करें वा त्याग ( अथ ) तत्पश्चात् ( संकल्पयते ) संकल्प करता है (अथ) तत्पश्चात् (मनस्यति) मनन

करता है ( अथ ) तब ( वाचम् ) वाणी को उच्चारणार्थ ( ईरयति ) प्रेरित करता है और ( ताम्+उ ) उसी वाणी को ( नाम्नि ) नाम निमित्त ( ईरयति ) प्रेरित करता है ( नाम्नि+मन्त्राः+एकम्+भवति ) नाम में मन्त्र एक होते हैं । ( मन्त्रेषु+कर्माणि ) मन्त्रों में कर्म एक होते हैं ॥ १ ॥

**तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि । तस्माद्यद्यपि बहुविदचित्तो भवति । नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वाऽयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥ २ ॥**

तानि । ह । वै । एतानि । चित्तैकायनानि । चित्तात्मानि । चित्ते । प्रतिष्ठितानि । तस्मात् । यद्यपि । बहुविद् । अचित्तः । भवति । न । अयम् । अस्ति । इति । एव । एनम् । आहुः । यत् । अयम् । वेद । यद् । वै । । अयम् । विद्वान् । न । इत्थम् । अचित्तः । स्यात् । इति । अथ । यदि । अल्पवित् । चित्तवान् । भवति । तस्मै । एव । उत । शुश्रूषन्ते । चित्तम् । हि । एव । एषाम् । एकायनम् । चित्तम् । आत्मा । चित्तम् । प्रतिष्ठा । चित्तम् । उपास्स्व । इति ॥ २ ॥

भाष्यम्—तानीति । तानि पूर्वोक्तानि । ह वा इति निपातौ वाक्यालङ्कारार्थौ । एतानि सङ्कल्पादीनि कर्मफलान्तानि । चित्तैकायनानि चित्तमेकं प्रधानमयनं गमनं स्थानं येषां तानि चित्तैकायनानि चित्तप्रलयस्वाभात्रानीत्यर्थः । चित्तात्मानि उत्पत्तिसमये चित्तरूपाणि । चित्ते प्रतिष्ठितानि चित्ते लब्धस्थानानि सन्ति । तस्मात् । यस्मात्कारणात्संकल्पादीनि वस्तूनि चित्तमूलानि वर्त्तन्ते । तस्माद्धेतोः । यद्यपि कोपि पुरुषो बहुविदनेक वेदादिशास्त्र परिज्ञानवान् भवेत् । यदि । परन्तु । अचित्तोभवति नविद्यते चित्तमस्येऽस्त्यचित्तोऽस्थिरचित्त इत्यर्थः तदा निपुणा लौकिकाः कथयन्ति । नायमस्ति । विद्यमानोऽप्यसत्सम एवास्तीत्येनमचित्तवन्तं पुरुषं प्रत्याहुः कथयन्ति । यत् किञ्चिदयमचित्तः पुरुषः वेद जानाति । तदपि अस्य वृथा एव इति जनाः कथयन्ति । कस्मात् । यद्वै यदि अयं विद्वान् भवेत् इत्थमचित्तो न स्यात् मा भूदिति जनाः कथयन्ति । अथ यदि । अल्पविदल्पज्ञोपि किञ्चितज्ज्ञोपि । चित्तवान् प्रशस्तं चित्तमस्येति चित्तवान् भवति ।

तर्हि । तस्मै एव तदुक्तार्थ ग्रहणायैवोत शुश्रूषन्ते तदीयं वचनं श्रोतुमिच्छन्ति । तस्मा।चित्तं हि एव एषां संकल्पादीनामेकायनं प्रधानमूलम् । चित्तमात्मा । सति प्रशस्ते चित्ते आत्मा विज्ञायते तल्लब्ध्युपायानुष्ठानंच संभवति । अत आह चित्तमात्मेति । चितं प्रतिष्ठा सति चित्ते सङ्कल्पादौ प्रतिष्ठा स्थिरता जायते अत आह चितं प्रतिष्ठेति । तस्मान्नारद ! चित्तमुपास्स्व चित्तधर्मान् विजानीहीति ॥ २ ॥

अनुवाद—वे ये । निश्चय । चित्त रूप एक अयन वाले हैं । चित्तस्वरूप हैं । चित्त में प्रतिष्ठित हैं । इसहेतु यद्यपि कोई बहुवित् हो परन्तु अचित्त हो तो इस के विषय में कहते हैं कि "यह नहीं है" यह जो कुछ जानता है । वह भी वृथा ही है "यदि यह विद्वान् होता तो ऐसा अचित्त नहीं होता । और जो अल्पवित् है परन्तु चित्तवान् है तब उसी के निकट सुनने के लिये जाते हैं वा उसी की शुश्रूषा करते हैं। चित्त ही इनका एकायन है । चित्त आत्मा, चित्त प्रतिष्ठा है । चित्त का अध्ययन करो ॥ २ ॥

पदार्थः-( ह+वै ) निश्चय ( तानि+एतानि ) वे ये पूर्वोक्त सङ्कल्पादिक ( चित्तैकायनानि ) चित्ताश्रय है ( चित्तात्मकानि ) चित्तस्वरूप है । और (चित्ते+प्रतिष्ठितानि) चित्त में ही प्रतिष्ठित हैं ( तस्मात् ) उसहेतु ( यद्यपि ) यद्यपि कोई पुरुष ( बहुविद् ) बहु वेद शास्त्रादिकों को जानने वाला हो परन्तु ( अचित्तः भवति ) यह अचित्त हो अर्थात् चित्त की स्थिरता न हो तो ( एनम्+आहुः) इस अचित्त पुरुष के प्रति लोग कहते हैं कि ( न+अयम्+अस्ति ) यह नहीं है । अर्थात् अचित्त पुरुष रहता हुआ नहीं के बराबर है (यत्) यदि (अयम्+वेद) यह पुरुष कुछ जानता है तो वह व्यर्थ ही है क्योंकि ( यद्वै ) यदि ( अयम् ) यह ( विद्वान् ) शास्त्रों का ज्ञाता होता तो ( न+इत्थम्+अचित्तः+स्यात् ) ऐसा अचित्त न होता । ऐसा अस्थिर चित्त वाला नहीं होता । आगे इस के विपरीत उदाहरण देते हैं ( अथ ) और ( अल्पवित् ) यदि कोई अल्पज्ञ ( चित्तवान् ) अच्छा चित्तवाला ( भवति ) है तो (तस्मै+एव) उसी पुरुषकी ( शुश्रूषन्ते) शास्त्रादि श्रवण के लिये सब कोई सेवा करते हैं। इसहेतु हे नारद !(चित्तम्+हि+एषाम्) चित्त ही इन सबों का (एकायनम्) प्रधान आश्रय है (चित्तम्+आत्मा ) चित्तही आत्मा है । चित्तकी स्थिरता से ही आत्म प्राप्ति भी होसकती है। अतः चित्त आत्मा कहा गया है (चित्तम्+प्रतिष्ठा) चित्त ही प्रतिष्ठा है (चित्तम्+उपास्स्व+इति ) चित्त शास्त्र का अध्ययन करो ॥ २ ॥

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति। यावच्चित्तस्यगतं तत्राऽस्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति? चित्ताद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति॥ ३ ॥

सः । यः । चित्तम् । ब्रह्म । इति । उपास्ते । चित्तान् । वै । सः । लोकान् । ध्रुवान् । ध्रुवः ।प्रतिष्ठितान् । प्रतिष्ठितः । अव्यथमानान् । अव्यथमानः । अभिसिद्ध्यति । यावत् । चित्तस्य । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । चित्तम् । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । चित्ताद् । भूयः । इति । चित्ताद् । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥३॥

भाष्यम्—अस्य सर्वाणि पदानि प्रायः व्याख्यातानेव सन्ति ॥ ३ ॥

अनुवाद–सो जो कोई, ब्रह्म प्राप्त्यर्थ चित्त विज्ञान का अध्ययन करता है वह प्रशस्त चित्त वाले सन्तानों और पुत्र पौत्रादिकों को प्राप्त करता है। और सब ७ । ४ । ३ के समान जानना ॥ ३ ॥

पदार्थः—( सः+यः ) सो जो कोई ( चित्तम्+ब्रह्म+इति+उपास्ते ) ब्रह्मप्राप्त्यर्थ चित्तशास्त्र का अध्ययन करता है वह ( ध्रुवः ) ध्रुव=कार्य्य में सदा स्थिर ( प्रतिष्ठितः ) प्रतिष्ठित ( अव्यथमानः ) व्यथा रहित होता है । और ( सः ) वह अपने समान ही ( चित्तान्+वै ) निश्चय चित्त=पूजित ( ध्रुवान्+प्रतिष्ठितान्+अव्यथमानान् ) ध्रुव, प्रतिष्ठित और अव्यथमान ( लोकान् ) जनों को ( अभिसिद्ध्यति ) प्राप्त होता है (चित्तस्य+यावत्+गतम् ) चित्तकी जहां तक गति है इत्यादि पूर्ववत् जानना ॥ ३ ॥

इति पञ्चमखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ ५ ॥

## अथ षष्ठः खण्डः

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवाऽऽपोध्यायन्तीव पर्व्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य इह

मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादांशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥

ध्यानम् । वाव । चित्ताद् । भूयः । ध्यायति । इव । पृथिवी । ध्यायति । इव । अन्तरिक्षम् । ध्यायति । इव । द्यौः । ध्यायन्ति । इव । आपः । ध्यायन्ति । इव । पर्व्वताः । ध्यायन्ति । इव । देवमनुष्याः । तस्मात् । ये । इह । मनुष्याणाम् । महत्ताम् । प्राप्नुवन्ति । ध्यानापादांशाः । इव । एव । ते । भवन्ति । अथ । ये । अल्पाः । कलहिनः । पिशुनाः । उपवादिनः । ते । अथ । ये । प्रभवः । ध्यानापदांशाः । इव । एव । ते । भवन्ति । ध्यानम् । उपास्स्व । इति ॥ १ ॥

भाष्यम्—ध्यानमिति । तत्र प्रत्ययैकतानताध्यानमिति । ध्येयालम्बनस्य प्रत्ययस्यैकतानतासदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम् । वाव शब्दोऽवधारणार्थः । ध्यानमेव चित्ताद्भूयोऽधिकतरं विद्यत इत्यन्वयः । ध्यानस्य माहात्म्यमुपवर्णयितुं प्रवर्त्तत उत्तरोग्रन्थः । यथा योगी ध्यायन्निश्चलो भवति । तथैव पृथिवी भूमिर्ध्यायतीव निश्चलेव लक्ष्यते । अन्तरिक्षमाकाशः द्यौः । द्युलोकः । आपो जलानि । पर्वता गिरयः । देवमनुष्या देव विद्वांसो मनुष्या इति देवमनुष्याः । एतत्सर्वं निश्चलत्वात् ध्यायतीव ध्यायदिव निश्चलमितिदृश्यते । अयमर्थः । एतत्सर्वं स्वस्मिन् स्वस्मिन् नियोगे अश्रान्तमिव वर्त्तमानं प्रत्यहं तदेव साधयद् लक्ष्यते । अतएव एतेषां महत्त्वमपि विद्यते । तस्मात्कारणात् । ये मनुष्याः । इह मनुष्यलोके मनुष्याणां मध्ये । महत्तां महत्त्वम् । प्राप्नुवन्ति लभन्ते । ते ध्यानापादांशा इवैव भवन्ति । ध्यानस्य आपादानमापादः फललाभ । इतिध्यानापादः । तस्यांशोऽवयवः काचित् कलेत्यर्थः । ध्यानफललाभकलावन्त एव भवन्ति निश्चला इव लक्ष्यन्ते न क्षुद्रा इवेत्यर्थः । अथ ये पुनरल्पा धनधान्यादिरहितास्ते कलहिनः कलहशीलाः पिशुनाः परदोषोद्भासका । उपवादिनः परदोषं सामीप्ये युक्तमेव वदितुं शीलं येषां ते उपवादिनश्च भवन्ति । अथ ये महत्त्वं प्राप्ता धनादिनिमित्तं तेऽन्यान् प्रति भवन्तीति प्रभवो विद्याचार्य्य राजेश्वरादयो ध्यानापादांशा इवेत्याद्युक्तार्थम् । अतो दृश्यते ध्यानस्य महत्त्वं फलतो भूयश्चित्तादतस्तदुपास्स्वेति ॥ १ ॥

अनुवाद—अनुवाद पदार्थ के समान ही है ॥ १ ॥

पदार्थः–( ध्यानम्+वाव+चित्ताद्+भूयः ) ध्यान ही चित्त से बड़ा है आगे ध्यान

का माहात्म्य कहा जाता है ( पृथिवी+ध्यायतीव ) मानो पृथिवी ध्यानावस्थित निश्चल प्रतीत होती है ( अन्तरिक्षम् ) अन्तरिक्ष भी ( ध्यायतीव ) मानो ध्यान के कारण निश्चल है ( द्यौः+ध्यायतीव ) मानो ध्यान निमित्त ही द्युलोक स्थिर है ( आपः ध्यायन्तीव ) जल भी ध्यानावस्थित है ( पर्वताः+ध्यायन्तीव ) मानो पर्वत ध्यान से ही निश्चल हैं ( देवमनुष्याः ध्यायन्तीव ) ध्यान कारण ही विद्वान् मनुष्य सब कार्य्य में स्थिर हैं। अर्थात् ध्यान से ही मनुष्य देवत्व और विद्वत्ता को प्राप्त होता है (तस्मात् ) इस हेतु ( मनुष्याणाम् ) मनुष्यों के मध्य ( ये+इह ) जो पुरुष इस लोक में (महत्ताम्+प्राप्नुवन्ति) विद्या, धन, पुत्र, पौत्रादिक के कारण महत्त्व को प्राप्त करते हैं वे ( ध्यानापादांशा इव एव ) मानो ध्यानकी प्राप्ति की एक कला ( ते+भवन्ति ) वे हैं अर्थात् ध्यान के ही माहात्म्य से वे सब प्राप्त होते हैं। अब इस के विपरीत उदाहरण दिखलाते हैं ( अथ ) और ( ये+अल्पाः ) जो ध्यान के एक अंश को भी प्राप्त नहीं हैं ऐसे क्षुद्र पुरुष ( कलहिनः ) कलह=उपद्रव करनेवाले होते हैं ( पिशुनाः ) दूसरे के दोषों को ही देखने वाले होते हैं ( उपवादिनः ) समीप में तो दोष को भी गुण दिखलाने वाले परोक्ष में निन्दा करने वाले होते हैं अर्थात् जिनको ध्यान का अंश भी प्राप्त नहीं है वे बहुत ही क्षुद्र होते हैं । कर्तव्याकर्तव्य विचार शून्यता के कारण उनकी बुद्धि स्थिर नहीं होती । हे नारद ! ( ये+प्रभवः ) जो मनुष्यों के प्रभु ( शासन करने वाले ) होते हैं ( ध्यानापादांशा इव+एव ते भवन्ति ) वे ध्यान की प्राप्ति की एक कला के ही प्रताप हैं । इस हेतु ( ध्यानम्+उपास्स्व ) ध्यान शास्त्र का मनन करो । इति ॥ १ ॥

**स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ? ध्यानाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥**

सः । यः । ध्यानम् । ब्रह्म । इति । उपास्ते । यावत् । ध्यानस्य । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । ध्यानम् । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । ध्यानाद् । भूयः । इति । ध्यानात् । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्-भाष्यादि सर्वं पूर्ववद्विज्ञेयम् ॥ २ ॥

इति षष्ठखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ ६ ॥

अथ सप्तमः खण्डः

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानांवेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्या कीटपतङ्गपिपीलकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधुचासाधु च हृदयज्ञञ्चाहृदयज्ञञ्चान्नञ्च रसञ्चेमञ्च लोकममुञ्च विज्ञानेनैव विजानाति । विज्ञानमुपास्स्वेति ॥ १ ॥

विज्ञानम् । वाव । ध्यानात् । भूयः । विज्ञानेन । वै । ऋग्वेदम् । विजानाति । यजुर्वेदम् । सामवेदम् । आथर्वणम् । चतुर्थम् । इतिहासपुराणम् । पञ्चमम् । वेदानां वेदम् । पित्र्यम् । राशिम् । दैवम् । निधिम् । वाकोवाक्यम् । एकायनम् । देवविद्याम् । ब्रह्मविद्याम् । भूतविद्याम् । क्षत्रविद्याम् । नक्षत्रविद्याम् । सर्पदेवजनविद्याम् । दिवम् । च । पृथिवीम् । च । वायुम् । च । आकाशम् । च । आपः । च । तेजः । च । देवान् । च । मनुष्यान् । च । पशून् । च । वयांसि । च । तृणवनस्पतीन् । श्वापदानि । आकीटपतङ्गपिपीलकम् । धर्म्मम् । च । अधर्म्मम् । च । सत्यम् । च । अनृतम् । च । साधु । च । असाधु । च । हृदयज्ञम् । च । अहृदयज्ञम् । च । अन्नम् । च । रसम् । च । इमम् । च । लोकम् । अमुम् । च । विज्ञानेन । एव । विजानाति । विज्ञानम् । उपास्स्व । इति ॥ १ ॥

भाष्यम्—विज्ञानमिति । हे नारद ! ध्यानाद्विज्ञानं वाव भूयोऽधिकतरं विद्यते । विशेषं ज्ञानं विज्ञानम् । सर्वपदार्थविषयकं ज्ञानमिहविज्ञानमुच्यते । उपासकोविज्ञाने-

नैव । ऋग्वेदं विजानाति । ऋग्वेदादिषु विज्ञानशास्त्रप्रचुरत्वात् विज्ञानंविना तानि सर्वाणि शास्त्राणि सम्यग् न विज्ञायन्ते । प्रवाकस्थपदानि व्याख्यातान्येवसन्ति ॥ १ ॥

पदार्थः—हे नारद ! ( विज्ञानम्+वाव ) विज्ञान ही ( ध्यानाद्भूयः ) ध्यान से अधिक तर है । पदार्थों के विशेष ज्ञान का नाम विज्ञान है ( विज्ञानेन+वै ) विज्ञान के द्वारा ही ( ऋग्वेदम्+विजानति ) ऋग्वेद के तत्त्वों को जानता है इसी प्रकार ( यजुर्वेदम् ० ) यजुर्वेद, सामवेद, चतुर्थ आथर्वण, पञ्चम इतिहासपुराण, वेदानांवेद, पित्र्य, राशि, दैव, निधि, वाकोवाक्य, एकायन, देवविद्या, ब्रह्मविद्या भूतविद्या, नक्षत्रविद्या सर्वदेवजनविद्या इन सब विद्याओं को तत्त्व विज्ञान के विना नहीं जान सकता और ( दिवञ्च० ) द्युलोक, पृथिवी, वायु, आकाश, जल, तेज, देव, मनुष्य, पशु, पक्षी, तृण, वनस्पति, ( श्वापदानि ) हिंस्रजन्तु ( आकीटपतङ्गपिपीलकम् ) कीट पतंग पिपील पर्य्यन्त क्षुद्र जन्तुओं को भी तत्त्व विज्ञान के द्वारा ही जाना जाता है ( धर्मञ्च+अधर्मञ्च० ) धर्म, अधर्म, सत्य, असत्य, साधु, असाधु, ( हृदयज्ञम् ) हृदय प्रिय ( अहृदयज्ञम् ) हृदय के अप्रिय ( अन्नञ्च+रसञ्च ) अन्न और रस ( इमञ्च+लोकम्+अमुञ्च ) लोक और परलोक इन सब को भी ( विज्ञानेनैव+विज्ञानाति ) विज्ञान शास्त्र के द्वारा ही जानता है इस हेतु हे नारद ! ( विज्ञानम्+उपास्स्व+इति ) विज्ञान सम्बन्धी शास्त्र का अध्ययन करो ॥ १ ॥

**स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकान् ज्ञानवतोऽभिसिद्ध्यति । यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो ! विज्ञानाद्भूय इति? विज्ञानाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥**

सः । यः । विज्ञानम् । ब्रह्म । इति । उपास्ते । विज्ञानवतः । वै । सः । लोकान् । ज्ञानवतः । अभिसिद्ध्यति । यावत् । विज्ञानस्य । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । विज्ञानम् । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । विज्ञानाद् । भूयः । इति । विज्ञानाद् । वाव । भूयः । अस्ति । इति । तम् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्—स य इति । स य उपासकः । ब्रह्मप्राप्त्यर्थम् । विज्ञानं नाम शास्त्रार्थम् ।

उपास्ते । सहोपासकः । विज्ञानवतो ज्ञानवतश्चलोकान् । अभिसिद्ध्यति प्राप्नोति । शेषं पूर्ववत् ॥ २ ॥ इति सप्तमखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ७ ॥

अनुवाद—सो जो उपासक ब्रह्मप्राप्त्यर्थ विज्ञाननाम शास्त्रका अध्ययन करता है वह विज्ञानवान् और ज्ञानवान् लोकों को प्राप्त करता है । हे नारद ! जो उपासक विज्ञान को बड़ामान उपासता है । उसका स्वच्छन्द गमन वहां तक होता है जहां तक विज्ञान की गति है । इत्यादि २ पूर्ववत् अनुसन्धान करना ॥ २ ॥

इति सप्तमखण्डस्य भाषाभाष्यं समाप्तम् ॥ ७ ॥

अथाष्टमः खण्डः

**बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते । स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति । परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति । श्रोता भवति । मन्ता भवति । बोद्धा भवति । कर्त्ता भवति । विज्ञाता भवति । बलेन वै पृथिवी तिष्ठति । बलेनान्तरिक्षम् । बलेन द्यौर्बलेन पर्व्वता बलेन देवमनुष्या बलेन पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकम् । बलेन लोकस्तिष्ठति । बलमुपास्स्वेति ॥ १ ॥**

बलम् । वाव । विज्ञानाद् । भूयः । अपि । ह । शतम् । विज्ञानवताम् । एकः । बलवान् । आकम्पयते । सः । यदा । बली । भवति । अथ । उत्थाता । भवति । उत्तिष्ठन् । परिचरिता । भवति । परिचरन् । उपसत्ता । भवति । उपसीदन् । द्रष्टा । भवति । श्रोता । भवति । मन्ता । भवति । बोद्धा । भवति । कर्त्ता । भवति । विज्ञाता । भवति । बलेन । वै । पृथिवी । तिष्ठति । बलेन । अन्तरिक्षम् । बलेन । द्यौः । बलेन । पर्व्वताः । बलेन । देवमनुष्याः । बलेन । पशवः । च । वयांसि । च । तृणवनस्पतयः । श्वापदानि । आकीटपतङ्गपिपीलकम् । बलेन । लोकः । तिष्ठति । बलम् । उपास्स्व । इति ॥ १ ॥

भाष्यम्—बलमिति । बलं नामान्नोपसेवनजनितं शारीरं मानसिकञ्च सामर्थ्यम् । तद् । वाव एव । विज्ञानाद् भूयोऽधिकतरं विद्यते । यतो बलं विना न किञ्चिदपि प्रतिभाति । अनशनाद्दगादीनि न वै मा प्रतिभांति भोः । इति श्वेतकेतुवचनमपि प्रमाणम् । अनशनाद्देहस्यहानिः । ततः । कार्य्ये असामर्थ्यम् । बलस्यमाहात्म्य मुदाहरणेन दर्शयति । विज्ञानवतां विज्ञानिनां पुरुषाणाम् । शतं शतपरिमितां संख्याम् । एको बलवान् प्राणी । आकम्पयते । बलिष्ठो हस्तीवासमन्तात् कम्पयते विचालयति । अतो बलस्य विज्ञानादपि भूयस्त्वमिति सिद्धम् । पुनस्तदेव स्पष्टयति । सः पुरुषो यदा बली भवति । अन्नोपयोगेन समुद्भूतेन बलेन युक्तो भवति । अथ तदा । उत्थाता । उत्थानस्य कर्त्ता । शारीरिकमानसिक व्यापरयो र्विधाता भवति । उत्तिष्ठन् सन् परिचरिता भवति गुरूणामाचार्य्यस्य मातुः पितुः शुश्रूषणीयस्यान्यस्य वा परिचरणस्य सेवायाः कर्त्ता भवति । परिचरन् सेवमानः पुनः । उपसत्ता भवति उप समीपे सत्ता उपवेष्टा शुश्रूषया प्रसादितानां गुरूणामाचार्य्यप्रभृत्तीनाञ्चा समीपोपवेशको भवति तेषामन्तरङ्गः प्रियो भवतीत्यर्थः । उपसीदन् । समीपउपविशन् द्रष्टा उपदेशशिक्षादिकाले गुरूणां मुखस्य द्रष्टा भवति । उपदेष्टृमुखस्य दर्शनेनोपदेशकाले श्रोतुः सन्तोष उपजायते । अतः द्रष्टा भवितव्यम् । बहूनां समूहे समीपग एव द्रष्टा भवितु मर्हति । श्रोता भवति । सामीप्यात् गुरुमुखविनिःसृतोपदेशवचनस्य सम्यक् श्रावको भवति । मन्ता भवति । वचन सम्यक् श्रवणानन्तरं गुरूणां वचनस्य इदं तात्पर्य्यमिदन्नोपपद्यते इत्याद्युपसत्ता मनन कर्त्ता भवति । बोद्धा भवति । मननानन्तरं तदुपदेशस्य बोद्धा । यद्गुरुभिरुक्तं तस्येदमेव तत्त्वमित्यवधारको जायते । ततः कर्त्ता भवति । निश्चित्य गुरूक्तार्थस्य कर्त्ताऽनुष्ठाता भवति । ततो विज्ञाता भवति । एतत्सर्वं सत्येव बले संभवतीति बलस्याधिकतरत्वम् । पुनरपि आसमाप्तेः बलस्यैव माहात्म्यं स्तुत्यर्थं प्ररोचनार्थञ्च निर्दिशति । तस्मान्नारद ! बलमुपास्स्वेति । बलधर्म्मान् विजानीहि । शेषमृज्वर्थम् ॥ १ ॥

अनुवाद—( सनत्कुमार कहते हैं कि ) बलही विज्ञान से अधिकतर है । क्योंकि शत विज्ञानी पुरुषों को एक बलवान् कम्पित करदेता है । वह जब बली होता है-तदन्तर उत्थाता होता है । और उत्थाता होता हुआ परिचरिता ( सेवक ) होता है । सेवक होता हुआ उपसत्ता (गुरुके समीप बैठने के योग्य) होता है । उपसदन करता हुआ द्रष्टा होता है । श्रोता होता है । मन्ता होता है । बोद्धा होता है । कर्त्ता होता है । विज्ञाता होता है । बल से ही पृथिवी स्थित है । बल से अन्तरिक्ष, बल से द्युलोक, बल से पर्वत, बल से उत्तम मनुष्य, बल से पशु और पक्षी तृण वनस्पति । श्वापद ।

( दुष्टजन्तु ) और कीट पतङ्ग पिपीलिका आदि सकल जन्तु बल से स्थित हैं । बल से पृथिव्यादिलोक स्थित हैं । हे नारद ! बल की उपासना करो इति ॥ १ ॥

पदार्थः—( बलम् ) बल ( वाव ) ही ( विज्ञानात् ) विज्ञान से ( अपि ) भी (भूयः ) अधिकतर है ( ह ) यह बात प्रसिद्ध है कि ( विज्ञानवताम् ) विज्ञान जानने वाले मनुष्यों की ( शतम् ) शत संख्या को अर्थात् शतशः विज्ञानी पुरुषों को ( एकः ) एक ( बलवान् ) बलवान् ( आकम्पयते ) सब प्रकार से कँपा डालता है । ( सः+यदा+बली+भवति ) वह साधक जब बली होता है ( अथ ) तब ( उत्थाता भवति ) साध्यकार्य में उत्थान का कर्त्ता अर्थात् कार्य करने का क्षम होता है ( उत्तिष्ठन् ) कार्य में उत्थान अर्थात् उत्साह करता हुआ ( परिचरिता+भवति ) सेवा करने के योग्य होता है ( परिचरन् ) सेवा करता हुआ (उपसत्ता+भवति) समीप बैठने योग्य होता है अर्थात् शुश्रूषा के द्वारा गुरु के समीप बैठने वाला अर्थात् गुरु का परमप्रिय होता है ( उपसीदन् ) समीप बैठता हुआ ( द्रष्टा+भवति ) आचार्य वा अन्य उपदेष्टा गुरु को एकाग्रतया देखने वाला होता है ( श्रोता+भवति ) द्रष्टा होने से गुरु की सब बातों को सुनने वाला होता है ( मन्ता+भवति ) मनन करने वाला होता है ( बोद्धा+भवति ) बोद्धा होता है ( कर्त्ता भवति ) अनुष्ठान करने वाला होता है ( विज्ञाता+भवति ) विशेष रूप से जानने वाला होता है ( बलेन ) बल से ( वै ) ही ( पृथिवी तिष्ठति ) भूलोक स्थित है ( बलेन ) बल से ( अन्तरिक्षम् ) अन्तरिक्ष लोक ( बलेन ) बल से ( द्यौः ) द्युलोक ( बलेन ) बल से ( पर्वताः ) पर्वत ( बलेन ) बल से ( देव मनुष्याः ) विद्वान् मनुष्य ( बलेन ) बल से ( पशवः ) पशु ( च ) और ( वयांसि ) पक्षी (च) और ( तृणवनस्पतयः ) तृण और वनस्पति ( श्वापदानि) हिंसक पशु ( आकीटपतङ्गपिपीलकम् ) कीट पतङ्ग पिपीलिका पर्य्यन्त बल ही से स्थित हैं ( बलेन ) बल से ( लोकः ) अवशिष्ट सब पदार्थ ( तिष्ठति ) स्थित हैं ( बलम् ) बल की ( उपास्स्व ) उपासना करो । अर्थात् बल के धर्म्मों को जानो ॥ १ ॥

**स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति । यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति ? बलाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥**

सः। यः। बलम्। ब्रह्म। इति। उपास्ते। यावत्। बलस्य। गतम्। तत्र। अस्य। यथाकामचारः। भवति। यः। बलम्। ब्रह्म। इति। उपास्ते। अस्ति। भगवः। बलाद्। भूयः। इति। बलात्। वाव। भूयः। अस्ति। इति। तत्। मे। भगवान्। ब्रवीतु। इति ॥ २ ॥

भाष्यम्—स इति। स यः साधको ब्रह्मप्राप्तिसाधनभूतं बलमुपास्ते तस्येदं फलं तच्छृणु। बलस्य गतमित्यादि। शेषं पूर्ववत् ॥ २ ॥

अनुवाद—सो जो कोई ब्रह्म प्राप्ति के साधनरूप बल की उपासना करता है। उसका फल यह है। जितनी बलकी गति है वहां तक इस साधक का यथाकामचार होता है। जो ब्रह्मप्राप्ति साधनभूत बलकी उपासना करता है। (नारद) हे भगवन्! बल से भी अधिकतर कुछ है? (सनत्कुमार) हां बल से तो अधिकतर है। (नारद) कृपया आप उसका मुझे उपदेश करें ॥ २ ॥

पदार्थः—(सः+यः) सो जो साधक (बलम्) बलकी (ब्रह्म+इति) ब्रह्म प्राप्तिसाधन समझ (उपास्ते) उपासना करता है। उसका फल आगे निरूपण होता है (यावत्) जितना (बलस्य) बल का (गतम्) गमन है (तत्र) वहां (अस्य) इस साधक का (यथाकामचारः+भवति) स्वेच्छा गमन होता है। अर्थात् बल की जहां तक गति है वहां तक वह साधक पहुंच सकता है (यः+ बलम्+ब्रह्म+ इति+ उपास्ते) जो ब्रह्म प्राप्ति के साधनरूप बल की उपासना करता है। नारद पूछ० (भगवः) हे भगवन्! (बलाद्भूयः) बल से अधिकतर (अस्ति) कोई वस्तु है? (इति) सनत्कुमार—(बलाद्+वाव+भूयः+अस्ति+इति) हां बल से भी अधिकतर है। नारद—(तत्+मे+भगवान्+ब्रवीतु+इति) आप मुझ को उस का उपदेश करें। इति ॥ २ ॥ इत्यष्टमखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ ८ ॥

## अथ नवमःखण्डः

**अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्त्ताऽविज्ञाता भवत्यथाऽन्नस्याऽऽये द्रष्टा भवति। श्रोता भवति। मन्ता भवति। बोद्धा भवति। कर्त्ता भवति। विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥**

अन्नम् । वाव । बलात् । भूयः । तस्मात् । यद्यपि । दशरात्रीः । न । अश्नीयात् । यदि । उ । ह । जीवेत् । अथवा । अद्रष्टा । अश्रोता । अमन्ता । अबोद्धा । अकर्त्ता । अविज्ञाता । भवति । अथ । अन्नस्य । आये । द्रष्टा । भवति । श्रोता । भवति मन्ता । भवति । बोद्धा । भवति । कर्त्ता । भवति । विज्ञाता । भवति । अन्नम् । उपास्स्व । इति ॥ १ ॥

भाष्यम्—अन्नमिति । अद्यते भूतैरित्यन्नं खाद्यवस्तु । तदेव बलाद्भूयः । कथम् । अन्नाशनेनैव बललाभः । अतो बलस्य कारणमन्नमेव । कार्याद्धि कारणस्याधिकतरत्वं लोकेऽपि दृश्यते । एतदेवात्र उदाहरणैः प्रमाणयति । तस्माद् । यस्माद् । बलकारणमन्नमस्ति । तस्माद्धेतोः । यद्यपि कश्चित् प्राणी । दशरात्रीर्दशाहोरात्रं नाश्नीयाद् नाद्यात् । किञ्चिज्जलादिकमपि प्राणान् धारयितुं न पिबेत् । तर्हि स म्रियते । बलिष्ठत्वात् कश्चिद्यदि न म्रियेत । अथवा यदि ह उ प्रसिद्धः कोपि प्राणी जीवेत् दशरात्रोपवासेनापि प्राणान् धारयेत् । तर्हि अकिञ्चित् कर एव स भविष्यति । कथम् । यतः । स अद्रष्टा, अश्रोता, अमन्ता, अबोद्धा, अकर्त्ता, अविज्ञाता भवति । तस्यऽनश्नता जीवतः पुरुषस्य सर्वं पूर्वं विपरीतमेव सम्पद्यते । अथ यदि बहून्यहानि । अनश्नन् जीवन् दर्शनादि क्रियास्वसमर्थः सन् पुरुषस्तिष्ठेत् । ततः । अन्नस्याऽऽये । आगमने सति । अन्नं यदि स लभेत तर्हि । तदा द्रष्टा भवति, श्रोता भवति, मन्ता भवति, बोद्धा भवति, कर्ताभवति, विज्ञाता भवति । नारद तस्मादन्नमुपास्स्व । इति । अन्न धर्मान् विजानीहि ॥ १ ॥

अनुवाद—अन्न ही बल से अधिक है । उस हेतु यद्यपि ( कोई ) दशरात्रि न भोजन करे ( तो वह मर जायगा ) अथवा कदाचित् न मरे । यदि वह कष्ट से जीवित रहे तथापि ( मृतवत् ही वह रहेगा क्योंकि ) जीवित रहने परभी वह अद्रष्टा, अश्रोता, अमन्ता, अबोद्धा, अकर्त्ता, अविज्ञाता होता है । फिर यदि अन्न की प्राप्ति होतो द्रष्टा होता है । श्रोता होता है । मन्ता होता है । बोद्धा होता है । कर्त्ता होता है । विज्ञाता होता है ( इस कारण नारद ) अन्न की उपासना करो ॥ १ ॥

पदार्थः—( अन्नम् ) अन्न ( वाव ) ही ( बलाद् ) बल से ( भूयः ) अधिकतर है ( तस्मात् ) इस हेतु ( यद्यपि ) यद्यपि कोई पुरुष ( दशरात्रीः ) दश दिन रात ( न ) नहीं ( अश्नीयात् ) भोजन करे ( अथवा ) अथवा न भोजन करने पर भी ( यदि+उ+ह ) यदि कोई बलिष्ट प्रसिद्ध आदमी ( जीवेत् ) जीवे तथापि वह मृत समान ही है क्योंकि ( अद्रष्टा आदि० ) अद्रष्टा, अश्रोता, अमन्ता, अबोद्धा, अकर्त्ता और अविज्ञाता होता है ( अथ ) अनन्तर ( अन्नस्य ) अन्न का ( आये ) आय

अर्थात् प्राप्ति होवे तो ( द्रष्टा इत्यादि० ) द्रष्टा, श्रोता, मन्ता, बोद्धा, कर्त्ता, विज्ञाता होता है । इस कारण हे नारद ! ( अन्नम्+उपास्स्व+इति ) अन्न की उपासना करो। इति ॥ १ ॥

**स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतोऽभिसिद्धयति । यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥**

सः । यः । अन्नम् । ब्रह्म । इति । उपास्ते । अन्नवतः । वै । सः । लोकान् । पानवतः । अभिसिद्धति । यावत् । अन्नस्य । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । अन्नम् । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । अन्नाद् । भूयः । इति । अन्नाद् । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्—स य इति । स य उपासकः । ब्रह्मेति ब्रह्म प्राप्तिसाधनमन्नमुपास्ते । सोन्नोपासकः । अन्नवतः । प्रभूतान्यन्नानि विद्यन्त एषामित्यन्नवन्तस्तान् । पानवतः प्रभूतोदकांश्च । लोकान् जनान् । अभिसिद्धयति आप्नोति । यावदन्नस्येत्यादि पूर्ववदनुसन्धेयं व्याख्येयञ्च ॥ २ ॥

अनुवाद—सो जो कोई साधक अन्न को ब्रह्मप्राप्ति का साधन मानकर उसके धर्म को विचारता है । वह अन्नवान् और पानवान् मनुष्यों को पाता है। जितनी अन्न की गति है । वहां तक इसका ( साधक का ) यथाकामचार होता है । जो ब्रह्म प्राप्ति का साधन मान अन्न के गुणों को विचारता है ( नारद पू० ) हे भगवन् ! अन्न से भी अधिकतर कोई वस्तु है ? ( सनत्कुमार उ० ) हां अन्न से भी अधिकतर वस्तु है ( नारद पू० ) कृपाकर मुझ को उसका उपदेश करें ॥ २ ॥

पदार्थः—( सः+यः ) सो जो कोई साधक ( अन्नम् ) खाद्य पदार्थ मात्र का (ब्रह्म+इति ) ब्रह्म प्राप्त्यर्थ ( उपास्ते ) विचार करता है उसका यह फल होता है । ( अन्नवतः+वै+पानवतः+लोकान् ) अन्नवान् और पानवान् लोकों को ( अभिसिद्धयति ) प्राप्त करता है अर्थात् जो कोई अन्न सम्बन्धी विज्ञान को जानता है वह तो स्वयं

सुखी रहता ही है परन्तु उसके समीपी कुटुम्ब परिवार इष्ट मित्र भी अन्नों से सुखी रहते हैं। क्योंकि अपने विज्ञान से अपने समीपी को भी शिक्षित करता रहता है। पानी की सहायता से ही अन्न की उत्पत्ति होती है। अतः जलीय विज्ञान बिना अन्न विज्ञान नहीं हो सकता अतः कहा गया है कि अन्नवान् और पानवान् लोकों को वह प्राप्त करता है। आगे पूर्ववत् ही जानना ॥ २ ॥

इति नवमखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १ ॥

अथ दशमः खण्डः

**आपो वावान्नाद्भूयस्यस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवंत्यन्नं बहुभविष्यतीत्याप एवेमा मूर्त्ता येयं पृथिवी यदन्तरिक्षं यद् द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्ग पिपीलकमाप एवेमा मूर्त्ता अप उपास्स्वेति ॥ १ ॥**

आपः। वा। अन्नाद। भूयस्यः। तस्मात्। यदा। सुवृष्टिः। न। भवति। व्याधीयन्ते। प्राणाः। अन्नम्। कनीयः। भविष्यति। इति। अथ। यदा। सुवृष्टिः। भवति। आनन्दिनः। प्राणाः। भवन्ति। अन्नम्। बहु। भविष्यति। इति। आपः। एव। इमाः। मूर्त्ताः। या। इयम्। पृथिवी। यत्। अन्तरिक्षम्। यद्। द्यौः। यत्। पर्वताः। यत्। देवमनुष्याः। यत्। पशवः। चं। वयांसि। च। तृणवनस्पतयः। श्वापदानि। आकीटपतङ्गपिपीलकम्। आपः। एव। इमाः। मूर्त्ताः। अपः। उपास्स्व। इति ॥ १ ॥

भाष्यम्—आप इति। आपो जलम्। वाव एव। अन्नाद् भूयस्य अधिकतराः सन्ति। जलंविनान्नानामनुत्पत्तिदर्शनाद्। तस्यान्नकारणत्वम्। तस्मात्। यस्माद्। अन्नकारणं वारि। तस्माद् यदा यस्मिन्काले सुवृष्टिर्न भवति। तदा प्राणः। अत्र प्राणशब्देन प्राणिनो लक्ष्यन्ते प्राणिन इत्यर्थः। सर्वाणीन्द्रियाणि वा। व्याधीयन्ते व्याधियुक्ता दुःखिनो भवन्ति। किमर्थं प्राणिनो दुःखायन्त इत्याह। अन्नं प्राणधारणैक साधनं धान्यादिकमन्नमस्माकं कनीयो भविष्यति। इति हेतोः प्रणिनः खलु दुःखायन्ते। अथ यदा

सुवृष्टिर्भवति । तदा प्राणाः प्राणिनः । आनन्दिन आनन्दाः प्रमुदिता भवन्ति । किमर्थम् । अस्माकमस्मिन् वर्षे । बहुप्रचुरमन्नं भविष्यतीति हेतोः । अपां व्याप्तिं विज्ञानार्थी दर्शयति । आप एव इमा मूर्त्ता वक्ष्यमाणाः । अन्नानांकारणत्वाद् । आप एवान्न रूपेण प्रत्यक्षाः परिणताः सर्वाः मूर्तयः प्रतीयन्ते । एवंप्राणिनामपि परम्परया आप एव कारणम् । तस्मात्प्राणिनोपि । अपां परिणामस्वरूपा एव । एवं पृथिव्यादिष्वपि जल बाहुल्यादप्जातत्वमिति प्रतीतिः तस्मान्नारद ! अप उपास्स्व । इति । अपां धर्म्मान् विजानीहि ॥ १ ॥

अनुवाद—जलही अन्नसे अधिकतर है । उस हेतु जब सुवृष्टि नहीं होती है तब प्राणी दुःखी होते हैं । क्योंकि अन्न अल्पतर होगा । और जब सुवृष्टि होती है तब प्राणी आनन्दित होते हैं क्योंकि अन्न बहुत होगा । जल ही ये मूर्त्तिमान् हैं । जो यह पृथिवी, जो अन्तरिक्ष, जो द्युलोक, जो पर्वत, जो देवमनुष्य, जो पशु और पक्षी । तृणवनस्पति । श्वापद ( क्रूरपशु ) कीटपतङ्ग और पिपीलिका पर्य्यन्त सब ही जल स्वरूप हैं ( हे नारद ) जल की उपासना करो । अर्थात् जलके धर्म्मों को जानो ॥ १ ॥

पदार्थः—( आपः+वाव ) जलही ( अन्नात् ) अन्नसे ( भूयस्यः ) अधिकतर है ( तस्मात् ) उस हेतु ( यदा ) जब ( सुवृष्टिः ) शस्यहितकारी अच्छी वृष्टि (न) नहीं ( भवति ) होती है तब (प्राणाः) प्राणी वा सब इन्द्रिय (व्याधीयन्ते) दुःखित होते हैं । दुःखित क्यों होते हैं इसका कारण आगे कहा जाता है (अन्नम्+कनीयः+भविष्यति) अन्न बहुत थोड़ा होगा ( इति ) इसकारण ( अथ ) और ( यदा ) जब ( सुवृष्टिः ) अच्छी वृष्टि ( भवति ) होती है तब ( प्राणाः ) प्राणी (आनन्दिनः) आनन्दित (भवति) होते हैं क्यों कि (अन्नम्+बहु+भविष्यति) अन्न बहुत होगा ( इति ) इस हेतु ( आपः ) जल ( एव ) ही ( इमाः ) ये वक्ष्यमाण पृथिवी आदि ( मूर्त्ताः ) मूर्त्तिमान् हैं ( याः+इयम्+ पृथिवी ) जो यह पृथिवी ( यद्+अन्तरिक्षम् ) जो अन्तरिक्ष ( यद्+द्यौः ) जो यह द्युलोक ( यत्+पर्वताः ) जो पर्वत (यद्देवमनुष्याः) जो देवमनुष्य ( यत्पशवः ) जो पशु ( च ) और ( वयांसि ) पक्षी ( च ) और ( तृणवनस्पतयः ) तृण और वनस्पति ( श्वापदानि ) क्रूरपशु ( आकीटपतङ्गपिपीलकम् ) कीट पतङ्ग और पिपीलिका पर्य्यन्त सकल क्षुद्रजन्तु (आपः+एव+इमाः+मूर्त्ताः) जल ही मूर्त्तिमान् ये सब हैं ( अपः ) हे नारद ! जल की ( उपास्स्व+इति ) उपासना करो ॥ १ ॥

**स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामाꣳस्तृप्तिमान् भवति । यावदपां गतं तत्रास्य यथा-**

कामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

सः । यः । अपः । ब्रह्म । इति । उपास्ते । आप्नोति । सर्वान् । कामान् । तृप्तिमान् । भवति । यावत् । अपाम् । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । अपः । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । अद्भ्यः । भूयः । इति । अद्भ्यः । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्-स इति । स य उपासकः । ब्रह्मेति ब्रह्म प्राप्ति साधनमिति मत्वा । अपो जलमुपास्ते । स सर्वान् कामान् आप्नोतीत्यन्वयः । अन्यत् सर्वं समानम् ॥ २ ॥

अनुवाद-सो जो कोई उपासक ब्रह्म प्राप्ति का साधन समझ जल की उपासना करता है अर्थात् जल के धर्म्म को विचारता है वह सब कामनाओं को पाता है । तृप्तिमान् होता है । जितना जल का गमन है वहां तक उस उपासक का स्वेच्छा गमन होता है जो ब्रह्म साधन भूत जल के धर्म्मों को विचारता है (नारद पू०) हे भगवान् जल से भी अधिकतर कोई वस्तु है ? ( सनत्कुमार ) हां जल से तो अधिकतर वस्तु है ( नारद पू० ) कृपया आप मुझ को उस की शिक्षा देवें ॥ २ ॥

पदार्थः-( सः+यः ) सो जो उपासक ( अपः ) जल की ( ब्रह्म+इति ) ब्रह्म प्राप्ति साधन समझ ( उपास्ते ) उपासना करता है वह ( सर्वान्+कामान् ) सब कामनाओं को ( आप्नोति ) पाता है ( तृप्तिमान् भवति ) तृप्तिमान् होता है ( यावत् ) जितना ( अपाम् ) जलों की ( गतम् ) गमन गति है ( तत्र ) वहां ( अस्य ) इस उपासक का ( यथाकामचारः ) स्वच्छन्द गमन ( भवति ) होता है ( यः+अपः+ब्रह्म+इति+उपास्ते ) जो ब्रह्म प्राप्ति साधन समझ जल के धर्म को विचारता है । नारद-(भगवः ) हे भगवन् सनत्कुमार ! ( अद्भ्यः+भूयः ) जल से अधिकतर कोई वस्तु( अस्ति)है ? सनत्कुमार ( अद्भ्यः+वाव+भूयः+अस्ति) हां जल से तो अधिकतर वस्तु है ( तत्+मे+भगवान्+ब्रवीतु+इति ) हे भगवन् ! कृपया मुझ को आप उस की शिक्षा देवें ॥ २ ॥ इति दशमखण्डस्य संस्कृत भाषाभाष्ये समाप्ते ॥ १० ॥

अथैकादशः खण्डः

**तेजो वावाद्भ्यो भूयस्तद्वाएतद्वायुमुपगृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति । तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति । तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥**

तेजः । वाव । अद्भ्यः । भूयः । तद् । वा । एतद् । वायुम् । उपगृह्य । आकाशम् । अभितपति । तत् । आहुः । निशोचति । नितपति । वार्षिष्यति । वै । इति । तेजः । एव । तत् । पूर्वम् । दर्शयित्वा । अथ । अपः । सृजते । तत् । एतत् । ऊर्द्ध्वाभिः । च । तिरश्चीभिः । च । विद्युद्भिः । आह्रादाः । चरन्ति । तस्मात् । आहुः । विद्योतते । स्तनयति । वर्षिष्यति । वै । इति । तेजः । एव । तत् । पूर्वम् । दर्शयित्वा । अथ । अपः । सृजते । तेज । उपास्स्व । इति ॥ १ ॥

भाष्यम्—तेजोऽग्निः । वाव एव । अद्भ्यो जलाद्भ्योऽधिकतरमस्ति । यतस्तेजोऽप्कारणमस्ति । तस्माद् । तद्वा तदेव एतत्तेजो वायुमुपगृह्य । अवष्टभ्य संगृह्य इति यावत् । आकाशमन्तरिक्षमभितपति । वायुभिःसार्धं तेज आकाशमभिज्वालयति । तदा आकाशस्यापि तापनसमये ग्रीष्मर्तौ । जनाः । आहुः कथयन्ति । यद् । इदं जगत् निशोचति नितपति । अर्थात् सर्वतः सम्प्रति भूमण्डलं संतप्तं भवति । अतो देवो वर्षिष्यति । तपनपूर्वकस्य वर्षणस्यानुमानात्तेज एव वर्षण कारणमिति प्रतीयते । तेज एव तत् पूर्वं जगत्तापनरूपं दृश्यं दर्शयित्वा प्रकटीकृत्य । अथानन्तरम् । अपो जलं सृजते उत्पादयति । यतोऽपामपि स्रष्टृ तेज एव । अतस्तेजसोऽद्भ्यो भूयस्त्वम् । तदेतत् तेज एव स्तनयित्नु रूपादिभिर्जलकारणं भवतीति दर्शयति । तथाहि । ऊर्द्ध्वाभिरूर्ध्वगामिनीभिः तिरश्चीभिस्तिर्य्यग्गताभिः कुटिलगामिनीभिः । विद्युद्भिः सम माह्रादाः स्तनयित्नुशब्दाः । चरन्ति भवन्ति । तस्मात् लौकिका जनाः । आहुर्ब्रुवन्ति । विद्योतते । विद्युत्प्रकाशते । स्तनयति । गर्जति । अतो वर्षिष्यति । वृष्टिर्भविष्यति । वेति । अतोनुमीयते । तेज एव तत् दृश्यं पूर्वं प्रथमं दर्शयित्वा प्रकटी कृत्य अथापो जलं सृजत उत्पादयति । तेज उपास्स्व । इति । तस्मान्नारद ! तेजो धर्म्मान् विभावय ॥ १ ॥

अनुवाद-तेज ही जल से अधिकतर है। सो यह (तेज ही) वायुको संगृहीत-कर आकाश में व्याप्त हो तपाता है। तब (लोक) कहते हैं कि जगत् को तपाता है अतः वर्षा होगी सो तेज ही उस दृश्यको प्रथम दिखाकर पश्चात् जल उत्पन्न करता है। और तेज ही विद्युद्रूपसे वर्षा का भी कारण होता है। इसलिये जो ऊपर जानेवा-ली और तिरछी जाने वाली विद्युत् के साथ घोर गर्जन होता है (उसका भी का-रण तेज ही है) इस हेतु लौकिक जन कहते हैं कि विद्युत् विद्योतित होती है। ग-र्जन होता है। अब वर्षा होगी। इति। अतः तेज ही प्रथम उस दृश्य को दिखला-कर पश्चात् वर्षा उत्पन्न करता है (हे नारद) तेज के धर्म्म को जानो विचारो ॥१॥

पदार्थः—(तेजः+वाव) तेज ही (अद्भ्यः+भूयः) जल से अधिकतर है क्योंकि जलका कारण तेज ही है (तत्+वै+एतत्) सो यह तेज निश्चय (वायुम्) वायुको (उपगृह्य) निग्रह करके अर्थात् वायु को अपने साथ लेकर (आकाशम्) आका-श को (अभितपति) व्याप्त होकर संतप्त करता है। ग्रीष्म ऋतु में तेज वायु को ले-कर आकाश में फैल जगत् को तपाना आरम्भ करता है (तदा+आहुः) तब मनुष्य कहने लगते हैं कि (निशोचति+नितपति) यह तेज जगत् को और प्राणियों को सं-तप्त करता है (वर्षिष्यति+वै+इति) मालूम पड़ता है कि निश्चय वर्षा होगी (तेजः+एव) तेज ही (तत्+पूर्वम्) उस दृश्य को प्रथम (दर्शयित्वा) दिखला कर (अथ) अ-नन्तर (अपः) जल को (सृजते) उत्पन्न करता है (तत्+एतत्) सो यह ते-ज विद्युत् आदि का भी कारण है। जो (उर्द्ध्वाभिः) ऊर्ध्व स्थित ऊपर जाने वाली (च) और (तिरश्चीभिः) तिरश्चीन गतिवाली तिरछी गति वाली (विद्युद्भिः) विद्युत् के साथ (आह्लादाः) मेघ के घोर गर्जन (चरन्ति) चलते हैं अर्थात् होते हैं। इन का भी कारण तेज ही है (तस्मात्) उस हेतु (आहुः) लोक कहते हैं (वि-द्योतते) विद्युत् विद्योतित होती है (स्तनयति) मेघ गरजता है (वर्षिष्यति+वै+इति) अनुमान होता है कि वर्षण होगा (तेजः+एव+तत्+पूर्वम्+दर्शयित्वा) तेज ही उस दृश्य को प्रथम दिखला कर (अथ) अनन्तर (अपः) जल को (सृजते) उत्पन्न करता है। इस कारण हे नारद! (तेजः+उपास्स्व+इति) तेज के धर्म्मों को विचारो ॥१॥

**स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्व-तो लोकान् भास्वतोऽपहततमस्कानभि सिद्ध्यति।**

यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति। यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति ? तेजसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

सः । यः । तेजः । ब्रह्म । इति । उपास्ते । तेजस्वी । वै । सः । तेजस्वतः । लोकान् । भास्वतः । अपहततमस्कान् । अभिसिद्धचति । यावत् । तेजसः । गतम्। तत्र । अस्य । यथाकामचारः । भवति । यः । तेजः । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । तेजसः । भूयः । इति । तेजसः । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्—स इति । स य उपासकः । ब्रह्मेति ब्रह्मलाभसाधनमिति मत्वा तेज उपास्ते तेजो धर्मान् विभावयति । स तेजस्वी भवति । वै इति निश्चयः । पुनः । तेजस्वतः । प्रचुरतेजस्विनः भास्वतः प्रकाशवतः। अपहततमस्कान् अपहतानि विनष्टानि तमांसि येषां ते अपहततमस्काः । तान् लोकान् । अभिसिद्धचति प्राप्नोति । तेजोधर्म्मविज्ञानेन स्वयं तेजस्वी भूत्वा निजोपदेशविधानेन अन्यानपि शिष्यान् तेजस्विनस्तेजोधर्मविदः कुर्वन्ति । यावदित्यादि पूर्ववत् ॥ २ ॥

अनुवाद—सो जो कोई उपासक तेज को ब्रह्मप्राप्ति साधन समझ उसके धर्म्म को विचारता है। वह अवश्य ही तेजस्वी होता है । और वह तेजस्वी भास्वान और तमोरहित जनों को प्राप्त करता है । और जितनी तेज की गति है वहां इस साधक का स्वेच्छाचार गमन होता है। जो ब्रह्म साधन भूत तेज के धर्म्म की भावना करता है (नारदपू० ) हे भगवन् ! तेजसे भी अधिकतर कोई वस्तु है ( सनत्कुमार ) तेज से अधिकतर वस्तु तो है ( नारद ) हे भगवन् ! कृपाकर मुझको आप उसका उपदेश करें ॥२॥

पदार्थः—( स+यः ) सो जो उपासक ( ब्रह्मेति ) ब्रह्म प्राप्ति साधन समझ ( तेज+उपास्ते ) तेज के धर्मों को विचारता है । वह ( तेजस्वी ) तेजस्वी होता है ( वै ) निश्चय अर्थात् इस में सन्देह नहीं। वह अवश्य तेजस्वी होता है। और (सः) वह (तेजस्वतः ) तेजस्वी ( भास्वतः ) देदीप्यमान ( अपहततमस्कान् ) अज्ञानरूप अन्धकार रहित ( लोकान् ) जनों को ( अभिसिद्धचति ) प्राप्त करता है अर्थात् जो तैजस विद्या में निपुण होते हैं वे स्वयं तेजस्वी होकर अपनी शिक्षा से अन्य मनुष्यों को

भी सदृश उत्पन्न करते हैं ( यावत् ) जितना ( तेजसः ) तेज की ( गतम् ) गति है। इत्यादि पूर्ववत् ही जानना ॥ २ ॥

इत्येकादशखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ ११ ॥

अथ द्वादशः खण्ड

**आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभि जायत आकाशमुपास्स्वेति ॥ १ ॥**

आकाशः । वाव । तेजसः । भूयान् । आकाशे । वै । सूर्य्याचन्द्रमसौ । उभौ । विद्युत् । नक्षत्राणि । अग्निः । आकाशेन । आह्वयति । आकाशेन । शृणोति । आकाशेन । प्रतिशृणोति । आकाशे । रमते । आकाशे । न । रमते । आकाशे । जायते । आकाशम् । अभिजायते । आकाशम् । उपास्स्व । इति ॥ १ ॥

भाष्यम्-आकाश इति। तेजस आग्नेयशक्तेः। आकाशः शब्दगुणोऽदृश्यपदार्थविशेषः। अतएव भूयानधिकतरः। कथम्? वायुसहितस्य तेजस आकाशएव कारणमिति शास्त्रेषु प्रसिद्धम्। कारणं कार्य्याद्भूय इति नियमात्। यथा घटादिभ्यो मृत्तिका तथा वायुसहितस्य तेजस आकाशः कारणमिति ततोपि भूयान् भवितु मर्हति। अग्रयिदं विस्पष्टयति आकाशे वै। आकाश एव। सूर्याचन्द्रमसौ। रविचन्द्रौ। उभौ तेजोरूपौ। अन्तर्वर्तिनौ दृश्येते। विद्युच्चपला। नक्षत्राणि। तारकाणि। अग्निरभिहित-सूर्य्य-प्रमुखातिरिक्ता आग्नेयी शक्तिस्तेजोरूपा। तत्सर्वमाकाशेऽन्तर्वर्त्ति। यद् यदन्तर्वर्त्ति। तत्तस्मात् कनीयः। इतरच्च भूय इति लोके दृष्टम्। घटादिर्मृत्तिकान्तर्वर्ती। ततः कनीयान्। तद्वत्। अन्यच्च। आकाशेन। आकाशद्वारेण। आह्वयति। अन्योन्यमाकारयति। आकाशेन शृणोति परस्परभाषणमाकाशद्वारैव जनः शृणोति आकाशेन प्रतिशृणोति च प्रत्युत्तरं ददाति प्रतिशृणोतिः प्रत्युत्तरार्थः। "भगव इति ह प्रतिशुश्राव" इत्यादि प्रयोग दर्शनात्। आकाशे रमते क्रीडति। आकाशे न रमते इष्टजनविप्रयोगे सति सत्यपि आकाशे जनो न रमते। अयमर्थः। क्रीडाकारणमाकाशश्चेत् सर्वः खलु रमेत। नहि सर्वो रममाणो दृश्यते। तर्हि कथमाकाशे रमत इत्यस्य संगतिः। इमां समुत्थितां शङ्का-

मपनेतुकामा आकाशे न रमते इति वर्णयन्ति । मनोवैकल्यादिदोष सद्भावादरमणम् । कर्ण–शष्कुली–वैगुण्याद्यथाऽश्रवणम् । आकाशे जायते । सत्येव आकाशे जन उत्पद्यते । तथा । आकाशमभिलक्ष्य सर्वः पदार्थो जायते वर्धते आत्मानं पोषयतीत्यर्थः । न प्रतिलोमम् । एतैर्हेतुभिराकाशस्य तेजसः सकाशाद् भूयस्त्वम् । तस्मान्नारद ! आकाशमुपास्स्व । इति । आकाशधर्मान् विद्धि ॥ १ ॥

अनुवाद–आकाश ही तेज से अधिकतर है आकाश में ही सूर्य और चन्द्र दोनों, विद्युत् नक्षत्र और आग्नेय शक्ति विद्यमान् है । आकाश के द्वारा एक दूसरे को पुकारता है । आकाश के द्वारा सुनता है । आकाश के द्वारा उत्तर देता है । आकाश में क्रीड़ा करता है । आकाश में क्रीड़ा नहीं करता है । आकाश में उत्पन्न होता है । आकाश को लक्ष्य कर ( सर्व पदार्थ ) अपने को पुष्ट करते हैं ( अतएव हे नारद ) आकाश के धर्म्म को जानो ॥ १ ॥

पदार्थः–( आकाशः ) आकाश ( वाव ) ही ( तेजसः ) तेज से ( भूयान् ) अधिकतर है ( आकाशे ) आकाश में ( वै ) ही ( सूर्य्याचन्द्रमसौ ) सूर्य और चन्द्र ( उभौ ) दोनों ( विद्युत्+नक्षत्राणि ) विद्युत् और नक्षत्र ( अग्निः ) आग्नेय शक्ति विद्यमान है ( आकाशेन ) आकाश के द्वारा ( आह्वयति ) एक दूसरे को पुकारता है ( आकाशेन+शृणोति ) आकाश के द्वारा सुनता है ( आकाशेन ) आकाश के द्वारा ( प्रतिशृणोति ) प्रत्युत्तर देता है ( आकाशे+रमते ) आकाश में क्रीड़ा करता है । (आकाशे+न+रमते ) आकाश में रमित नहीं होता है (आकाशे) आकाश में (जायते) सब पदार्थ उत्पन्न होता है ( आकाशम्+अभिजायते ) उत्पन्न होकर आकाश में ही अपने को पुष्ट करता है अतः हे नारद ! ( आकाशम् ) आकाश सम्बन्धी धर्म्मों को ( उपास्स्व ) विचारो ॥ १ ॥

भाष्याशयः–वायु सहित तेज का कारण आकाश ही है । यह शास्त्र प्रसिद्ध बात है । जो पदार्थ जिस का कारण होता है वह उससे अधिकतर है जैसे घट आदि का कारण मृत्तिका घट आदि से अधिकतर है । तद्वत् । सूर्य्य, चन्द्र, विद्युत, नक्षत्र और अन्य आग्नेय शक्ति सब ही आकाश के अन्तवर्ती हैं अन्तर्वर्ती वस्तु अल्पतर होती है जैसे गृह के अन्तर्वर्त्ती घट अवश्य ही गृह से अल्पतर होगा । वैसे ही आकाश के अन्तर्वर्तिनी आग्नेयी शक्ति है अतः आकाश उससे अधिकतर है । यह सिद्ध होता है ॥ १ ॥

**स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान् प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिद्ध्यति।**

**यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥**

सः । यः । आकशम् । ब्रह्म । इति । उपास्ते । आकाशवतः । वै । सः । लोकान् । प्रकाशवतः । असम्बाधान् । उरुगायवतः । अभिसिद्ध्यति । यावत् । आकाशस्य । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । आकाशम् । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । आकाशाद् । भूयः । इति । आकाशाद् । वाव । भूयः । अस्ति । इतिं । तत् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्—स य इति । स य उपासकः । ब्रह्मेति ब्रह्मप्राप्तिसाधनमिति मत्वा । आकाशमाकाशधर्म्मान् । उपास्ते अधीते । सः । आकाशवतः । प्रशस्ताकाशगुणसहितान् । प्रकाशवतः प्रकाशाकाशयोर्नित्यसंबन्धात् तत्साहचर्य्येण प्रभासमन्वितान् । असम्बाधान् सम्बाधनं सम्बाधः परस्परपीड़ा सम्बाधशब्दवाच्या । न सम्बाधो विद्यते येषामिति ते असम्बाधास्तान् । परस्परसम्बाधरहितान् । अतएव । उरुगायवतः । उरु विस्तीर्णं गायं गमनमित्युरुगायं तत्सहितानुरुगायवतो विस्तीर्णप्रचारान् । लोकान् जनान् । अभिसिद्ध्यति प्राप्नोति । यावदाकाशस्य गतमित्यादि पूर्ववत् ॥ २ ॥

अनुवाद—जो कोई उपासक ब्रह्मप्राप्ति साधन समझ आकाश के धर्म्मों का अध्ययन करता है । वह आकाशवान्, प्रकाशवान्, शारीरिक, मानसिक परस्पर पीड़ा रहित परम उदार जनों को प्राप्त करता है । और आकाश के गुणों की जितनी गति है वहां इस उपासक का यथाकामचार होता है जो ब्रह्म प्राप्ति साधन समझ आकाश के धर्म्मों का अध्ययन करता है । नारद—भगवन् ! आकाश से भी कोई अधिकतर वस्तु है ? सनत्कुमार—हां आकाश से तो अधिकतर वस्तु है । नारद—भगवन् ! कृपया आप मुझको उसका उपदेश करें ॥ २ ॥

पदार्थः—( सः+यः+उपासकः ) जो उपासक ( ब्रह्म इति ) ब्रह्म प्राप्ति साधन मान ( आकाशम् ) आकाश सम्बन्धी गुणों का ( उपास्ते ) अध्ययन करता है ( स वै ) वह प्रसिद्ध उपासक ( आकाशवतः ) आकाश के समस्त गुणों के जानने वाले (प्रकाशवतः )=स्वच्छान्तःकरण अतएव ( असम्बाधान् ) शारीरिक मानसिक पीड़ा रहित (उरुगायवतः ) अतएव विस्तीर्ण गमन वाले अर्थात् परम उदार ( लोकान् ) पुरुषों को

( अभिसिद्धयति ) उत्पन्न करता है ( यावदाकाशस्य ) इत्यादि का अर्थ बहुत सुगम है । पूर्ववत् करलेना ॥ २ ॥

भाष्याशयः—जो जैसा हो शिष्य भी वैसे ही प्रायः होते हैं इस कारण आकाश के गुण जानने वाले के शिष्य भी वैसे ही होवेंगे । जैसे आकाश प्राणी को अवकाश देता है वैसे मैं भी सबों को यथाशक्ति अवकाश दूं । जैसे आकाश के ही अधीन प्रकाश ( ज्योति ) रहता है अतः यह सबों को प्रकाश भी देता है । तद्वत् में भी ज्ञान रूप प्रकाश सबों को दूं । जैसे आकाश में कोटानकोटि लोकलोकान्तर निवास करते हुए परस्पर पीड़ित नहीं होते हैं । वैसे मेरे द्वारा भी परस्पर किसी को पीड़ा नहीं होनी चाहिये । अथवा जैसे आकाश में विद्यमान सब पदार्थ परस्पर टक्कर नहीं खाते हैं । तद्वत् मुझ में वर्तमान कामक्रोधादि परस्पर बाधित न होवें वैसे यत्न करने चाहियें । जैसे आकाश बहुत व्याप्त है । वैसे मेरी गति भी अनेक विद्याओं में होनी चाहिये । इत्यादि गुणों के अध्ययन करने वाले का शिष्य भी तद्वत् ही होगा ॥ २ ॥

इति द्वादशखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १२ ॥

## अथ त्रयोदशः खण्डः

**स्मरो वावाऽऽकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्नस्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् । यदा वाव ते स्मरेयु रथशृणुयु रथ मन्वीरन्नथ विजानीरन् । स्मरेण वै पुत्रान्विजानाति स्मरेण पशून् स्मर मुपास्स्वेति ॥ १ ॥**

स्मरः । वाव । आकाशाद् । भूयः । तस्मात् । यद्यपि । बहवः । आसीरन् । न । स्मरन्तः । न । एव । ते । कञ्चन । शृणुयुः । न । मन्वीरन् । न । विजानीरन् । यदा । वाव । ते । स्मरेयुः । अथ । शृणुयुः । अथ । मन्वीरन् । अथ । विजानीरन् । स्मरेण । वै । पुत्रान् । विजानाति । स्मरेण । पशून् । स्मरम् । उपास्स्व । इति ॥ १ ॥

भाष्यम्—स्मरइति । स्मरणं स्मरः । स्मृतिरित्यर्थः । अन्तःकरणस्य धर्मविशेषः । अनुभूतविषयस्य कारणविशेषेण चेतस्यारोहणं स्मरणम् । स स्मरः । आकाशाद्भूयः भूयान् । अधिकतरः । भूय इत्यत्र नपुंसकमार्षम् । आकाशस्य सकाशात् स्मरणस्य

भूयस्त्वप्रकारंसाधयति । तथा हि । यद्यपि । बहवो जना न स्मरन्तः सन्तः स्मरणशक्तिविरहिताः पूर्वं पूर्वं क्षणे क्षणे विस्मरन्तः सन्तः कस्मिंश्चित्स्थाने । आसीरन् । उपविशेयुर्नाम । ते कञ्चन शब्दं न शृणुयुः । स्मरणाभावात् । कञ्चन शब्दं शृण्वन्तोऽपि अशृण्वन्त इव ते तिष्ठन्ति । तेषां श्रवणमप्यश्रवणमेव । न मन्वीरन् । मन्तव्यान् विषयान् स्मरेयुश्चेत् तदा तेषां मननं सम्भवति । स्मरणाभावात् कथं मन्वीरन् न मन्तुं शक्नुयुः । न विजानीरन् । श्रवणस्मरणमननाभावात् परस्परभावितत्त्वं कथं नाम विजानीरन् विज्ञातुमपि न शक्नुयुरित्यर्थः । विलोमं दर्शयति । यदा वाव ते पुरुषाः स्मरेयुः । श्रोतव्यं मन्तव्यं विज्ञातव्यं वस्तु यदा सम्यक् स्मरेयुः । अथ तदा शृणुयुः । अथ मन्वीरन् । अथ विजानीरन् । स्मरेण वै स्मरणेनैव पुत्रान् पुत्रकलत्र प्रमुखान् विजानाति । स्मरेण स्मरणेन पशून् विजानाति । एतेनेदं सिद्धं शब्दगुणोह्याकाशः । गुणस्वरूप एव पदार्थः । यथा दहनगुणरूप एवाग्निः । न हि गुणाद् भिन्नः कोऽप्यग्निर्नाम पदार्थोऽस्ति तद्वत् शब्दगुणभिन्नो नह्यस्ति कोप्याकाशोनामपदार्थः । शब्दस्तु स्मृत्यधीनः । यद्यदाधीनम् । तत्तस्मात् कनीयः । यथानृपाधीनोऽमात्यो नृपात् कनीयान् तद्वदिहापि । स्मराधीन आकाशः स्मरात् कनीयान् । इतरस्तु भूयानिति सिद्धम् । तस्मान्नारद ! स्मरमुपास्स्व स्मरधर्म्मानधीष्व । इति ॥ १ ॥

अनुवाद—आकाश से स्मरण ही अधिकतर है इस कारण यद्यपि ( किसी एक स्थानमें ) स्मरण न करते हुए बहुत आदमी बैठें तो न तो वे एक शब्द ही सुन सकेंगे न मनन कर सकेंगे और न उनके तत्त्वों को जान सकेंगे। परन्तु यदि वे स्मरण करसकें तब वे सुन सकेंगे तब मनन कर सकेंगे और तब जान सकेंगे। स्मरणसे ही पुत्रों को जानता है । स्मरण से ही पशुओं को जानता ( अतः हे नारद ! ) स्मरण शक्ति का मनन करो ॥ १ ॥

पदार्थः—(स्मरः+वाव) स्मरण ही ( आकाशात् ) आकाश से ( भूयः ) अधिकतर है ( तस्मात् ) उस कारण ( यद्यपि ) यद्यपि ( न+स्मरन्तः ) स्मरण नहीं करते हुए ( बहवः+आसीरन् ) किसी स्थानमें बहुत आदमी बैठ जांय तो ( ते ) वे ( नैव ) न तो ( कञ्चन ) किसी शब्द को ( शृणुयुः ) सुन सकेंगे ( न+मन्वीरन् ) न मनन कर सकेंगे ( न+विजानीरन् ) न जान सकेंगे । परन्तु ( यदा वाव ) जबही ( ते ) वे ( स्मरेयुः ) स्मरण कर सकेंगे ( अथ ) अनन्तर अर्थात् तबही ( शृणुयुः ) सुन सकेंगे ( अथ ) तबही ( मन्वीरन् ) मनन कर सकेंगे ( अथ ) तबही ( विजानीरन् ) विशेष रूप से जान सकेंगे ( स्मरेण+वै ) स्मरण से ही ( पुत्रान्+विजानाति ) पुत्रों को

जानता है ( स्मरेण+पशून् ) स्मरण से पशुओं को जानता है । ( स्मरम् ) स्मरणशक्ति का ( उपास्स्व ) मनन करो । इति ॥ १ ॥

भाष्याशयः—आकाश से स्मर=स्मरण अधिकतर है। क्योंकि आकाश का गुण शब्द है यह प्रसिद्ध है । गुणी से भिन्न कोई गुण पदार्थ नहीं है । अर्थात् गुण स्वरूप ही पदार्थ होता है । गुण से भिन्न नहीं। जैसे अग्नि का गुण दाहकरण है । परन्तु दहन गुण से भिन्न कोई अग्नि पदार्थ नहीं है । किन्तु दहन स्वरूप ही अग्नि है । तद्वत् शब्द गुण जो आकाश सो शब्द से कोई भिन्न पदार्थ नहीं किन्तु शब्द स्वरूप ही है। परन्तु शब्द स्मरण के अधीन है । अतः स्मरण से अल्पतर शब्द है । जब शब्द अल्पतर हुआ तो आकाश भी स्मरण से अल्पतर हुआ । क्यों कि शब्द ही आकाश है जो पदार्थ जिसका अधीन होता है वह उस से अल्पतर होता है । जैसे नृप का अधीन अमात्य वा मन्त्री नृप से अल्पतर ही होता है । तद्वत् स्मरण का अधीन शब्द अवश्य उससे अल्पतर होगा। और स्मरण अधिकतर होगा। न सुनसकेंगे—इसका भाव यह है कि स्मरण शक्ति के न रहने से सुनते हुए भी नहीं सुनते हुए से रहते हैं एवं मन्तव्य विषय जब स्मृत रहते हैं तब ही उनका मनन भी होता है । स्मरण न रहने के कारण मनन नहीं होता और स्मरण मनन जब नहीं हुए तो उनका ज्ञान कैसे हो सकता । अतः स्मरण ही श्रवण मनन विज्ञान का कारण है । स्मरण—अन्तःकरण का एक धर्म विशेष है । योग सूत्र में कहा गया है ( अनुभूत विषयासंप्रमोषः स्मृतिः ) अनुभव किये हुए विषय का चित्त में आरोहण होना ही स्मरण है ॥ १ ॥

**स यः स्मरं ब्रह्मेत्युपास्ते यावत् स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति? स्मराद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥**

सः । यः । स्मरम् । ब्रह्म । इति । उपास्ते । यावत् । स्मरस्य । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । स्मरम् । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । स्मराद् । भूयः। इति । स्मराद् । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्— स इति। स य उपासकः । ब्रह्मेति ब्रह्मोपलब्धिसाधनमिति मत्वा स्मरं स्मरणं स्मरणधर्म्मान् । उपास्ते । अधीते। यावत् स्मरस्य गतमित्यादि व्याख्यात प्रायमेव ॥२॥

अनुवाद—जो ( कोई उपासक ) ब्रह्म प्राप्ति का साधन समझ स्मरण के गुणों वा धर्म्मों का अध्ययन करता है (उस को जो फल प्राप्त होता है सो यह है ) जितना स्मरण का गगन है । वहां तक इस (उपासक) का यथाकामचार होता है । जो ब्रह्म–प्राप्ति–साधन–मूल–स्मरण का अध्ययन करता है । नारद—हे भगवन् ! स्मरण से भी अधिकतर कोई वस्तु है ? । सनत्कुमार–हां स्मरण से तो अधिकतर वस्तु है । नारद–कृपया आप मुझ को उसका उपदेश देवें ॥ २ ॥

पदार्थः—( सः+यः ) जो कोई ( ब्रह्म+इति ) ब्रह्म की प्राप्ति का साधन समझ ( स्मरम् ) स्मरण का अर्थात् स्मरण के धर्म्मों का (उपास्ते) अध्ययन करता है । उस उपासक का यह फल है ( यावत् ) जितना (स्मरस्य) स्मरण का ( गतम् ) गमन है ( तत्र+अस्य ) वहां इसका अर्थात् इस उपासक का ( यथाकामचारः ) स्वच्छन्द गमन ( भवति ) होता है । अन्यपद पूर्ववत् विस्पष्ट हैं ॥ २ ॥

इति त्रयोदशखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १३ ॥

## अथ चतुर्दशः खण्डः

**आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत इमञ्च लोकममुञ्चेच्छत आशामुपास्स्वेति ॥ १ ॥**

आशा । वाव । स्मराद् । भूयसी । आशेद्धः । वै । स्मरः । मन्त्रान् । अधीते । कर्म्माणि । कुरुते । पुत्रान् । च । पशून् । च । इच्छते । इमम् । च । लोकम् । अमुम् । च । इच्छते । आशाम् । उपास्स्व । इति ॥ १ ॥

भाष्यम्—आशेति । अनुपलब्धानां वस्तूनामाकांक्षा आशा । तृष्णा–कामादि–शब्दैर्लोके या व्यवह्रियते । सा चाऽऽशा । स्मरात् स्मरणाद् भूयसी । अधिकतरा । कथम् ? । अन्तःकरण स्थितया आशया युक्तः सन्नेव पुरुषः स्मर्तव्यविषयं स्मरति । निराशो हि नरो न किमपि स्मर्तुमिच्छति । आशेद्धः सन्नेव । आशया मनोरथेन । इद्धः । प्रदीप्तो बर्धित इति यावत् । वै निश्चितम् । स्मरोभवति । स्मरतीति स्मरः । स्मर्ता स्मरणकर्त्ता भवति । यदा स्मर्ता भवति । तदा मन्त्रानधीते पठति । मन्त्रानधीत्य तदनुकूलानि कर्माणि । कुरुतेऽनुतिष्ठति । कर्मफलभूतान् पुत्रांश्च पशूंश्च गोमहिषहिरण्यादीनि वस्तूनि । इच्छते इच्छति । आत्मनेपदमार्षम् । आशाबर्धितःसन्नेव । इमञ्च लोकम् । अमुञ्च लोकम् । इच्छते इच्छति । तस्मान्नारद ! आशामुपास्स्व । आशामधीष्व । इति ॥ १ ॥

अनुवाद—स्मरण से आशा ही अधिकतर है । आशा से ही वर्धित होकर स्मर्ता ( स्मरण करने वाला ) होता है और स्मर्ता होकर मन्त्रों को अध्ययन करता है । तब कर्म्मों का अनुष्ठान करता है । पुत्रों और पशुओं की इच्छा करता है । और इस लोक और उस लोक की इच्छा करता है अतः हे नारद ! आशा का मनन करो ॥ १ ॥

पदार्थः—( आशा+वाव ) आशा ही ( स्मराद् ) स्मरण से ( भूयसी ) अधिकतर है क्योंकि ( आशेद्धः ) आशा से वर्धित पुरुष ( वै ) निश्चय ( स्मरः ) स्मर्ता स्मरण करने वाला होता है । तब ( मन्त्रान् ) मन्त्रों का ( अधीते ) अध्ययन करता है तत् पश्चात् (कर्माणि+कुरुते) कर्म्मों को करता है (पुत्रान्+च) पुत्रों की ( पशून्[2]+च ) गो महिष हिरण्य आदि धनों की (इच्छते) इच्छा करता है ( इमम्+च+लोकम् ) इस लोक और ( अमुम्+च ) उस लोक की ( इच्छते[3] ) इच्छा करता है । हे नारद! इस कारण ( आशाम् ) आशा का ( उपास्स्व ) अध्ययन करो ॥ १ ॥

भाष्याशयः—अप्राप्त वस्तुओं की इच्छा को आशा कहते हैं । संस्कृत में तृष्णा, काम, मनोरथ, वाञ्छा, इच्छा, आकाङ्क्षा आदि शब्दों से भी आशा का व्यवहार होता है । वह आशा सबों के अन्तःकरण में स्थित है । जब मनुष्य आशापाश से निबद्ध होता है तो स्मरण कर्त्ता बनता है यदि उसे आशा न हो तो स्मरण करने की इच्छा भी नहीं करेगा । एवं आशाबद्ध होकर ही वेदादि शास्त्रों का अध्ययन करता है तब कर्म्म करता है । आशा रूप कारण से ही विविध कर्म्मों में मनुष्यों की प्रवृत्ति होती है तत्पश्चात् कर्म्म के फलभूत पुत्रादिपदार्थों की इच्छा करता है । अतः आशा ही स्मरण से श्रेष्ठ है ॥ १ ॥

**स य आशां ब्रह्मेत्युपास्ते आशयाऽस्य सर्वे कामाः समृध्यन्त्यमोघा हास्याशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽ-**

( १ ) आशेद्धः, आशा+इद्ध+ ये दो शब्द हैं । इद्धनाम प्रदीप्त आशा से प्रदीप्त अर्थात् आशा से बार्धित ।

( २ ) पशु शब्द वहां सम्पूर्ण वित्त वाचक है ।

( ३ ) "इच्छते" के स्थान में आजकल "इच्छति" होता है ।

## स्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

सः । यः । आशाम् । ब्रह्म । इति । उपास्ते । आशया । अस्य । सर्वे । कामाः । समृध्यन्ति । अमोघाः । ह । अस्य । आशिषः । भवन्ति । यावत् । आशायाः । गतम् । तत्र । अस्य । यथाकामचारः । भवति । यः । आशाम् । ब्रह्म । इति । उपास्ते । अस्ति । भगवः । आशायाः । भूयः । इति । आशायाः । वाव । भूयः । अस्ति । इति । तत् । मे । भगवान् । ब्रवीतु । इति ॥ २ ॥

भाष्यम्—स य इति । स य उपासकः । ब्रह्मेति ब्रह्मोपलब्धिमुख्यसाधनमिति गत्वा । आशामाशासम्बद्धां विद्याम् । उपास्ते अधीते । अस्योपासकस्याशया हेतुना । सर्वे कामाः । समृद्ध्यन्ति समृद्धिं वृद्धिं प्राप्नुवन्ति । ह प्रसिद्धस्यास्य उपासकस्य । आशिषः प्रार्थनाः । अमोघा अन्यर्थाः पूर्णा भवन्ति । यत् प्रार्थ्यते तदवश्यं भवति । यावदाशाया गतमित्यादिविस्पष्टम् ॥ २ ॥

अनुवाद—सो जो कोई उपासक ब्रह्म प्राप्ति का मुख्य साधन समझ आशा शास्त्र का अध्ययन करता है । आशा के कारण इस ( उपासक ) के सकल काम वृद्धि को प्राप्त होते हैं । इस की सब प्रार्थनाएं अमोघ (पूर्ण) होती हैं । आशा की जितनी गति है वहां तक इस को यथाकामचार होता है जो आशाशास्त्र को आदर बुद्धि से पढ़ता है । नारद—हे भगवन् ! आशा से भी कोई अधिकतर वस्तु है ? सनत्कुमार—आशा से तो अधिकतर वस्तु है । नारद—हे भगवन् ! कृपया मुझको आप उस की शिक्षा देवें । इति ॥ २ ॥

पदार्थः—( सः+यः ) सो जो कोई ( आशाम् ) आशाशास्त्र को ( ब्रह्म+इति ) ब्रह्म प्राप्ति का मुख्य साधन मान ( उपास्ते ) अध्ययन करता है ( अस्य ) इस आशा को अध्ययन करने वाले उपासक के ( आशया ) आशा के कारण (सर्वे+कामाः) सब काम ( समृद्ध्यन्ति ) वृद्धि को प्राप्त होते हैं ( ह ) प्रसिद्ध (अस्य) उस उपासक की ( आशिषः ) प्रार्थनाएं ( अमोघाः ) अन्यर्थ अर्थात् पूर्ण ( भवन्ति ) होती हैं ( यावत् ) जितनी (आशायाः+गतम्) आशा की गति है (तत्र+अस्य) वहां तक इस का ( यथाकामचारः ) स्वेच्छागमन ( भवति ) होता है ( यः+आशाम्+ब्रह्म+इति+उपास्ते) जो आशाशास्त्र को आदर बुद्धि से पढ़ता है ( अस्ति ) इत्यादि पूर्ववत् ॥२॥

इति चतुर्दशखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १४ ॥

## अथ पञ्चदशः खण्डः

**प्राणो वावाऽऽशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वंꣳ समर्पितम् । प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति । प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्य्यः प्राणो ब्राह्मणः ॥ १ ॥**

प्राणः । वाव । आशायाः । भूयान् । यथा । वै । अराः । नाभौ । समर्पिताः । एवम् । अस्मिन् । प्राणे । सर्वम् । समर्पितम् । प्राणः । प्राणेन । याति । प्राणः । प्राणम् । ददाति । प्राणाय । ददाति । प्राणः । ह । पिता । प्राणः । माता । प्राणः । भ्राता । प्राणः । स्वसा । प्राणः । आचार्य्यः । प्राणः । ब्राह्मणः ॥ १ ॥

भाष्यम्—प्राण इति । आशायाः सकाशात् प्राणो वाव भूयानधिकतरः । नाम्न आरभ्याऽऽशापर्य्यन्तं कार्य्यकारणत्वेन निमित्तनैमित्तिकत्वेन च पूर्वपूर्वापेक्षया उत्तरोत्तराधिकतरत्वं प्रदर्शितम् । सम्प्रति वायुविकारस्य शरीरान्तर्वर्त्तिनः प्राणस्य भूयस्त्वं प्रद्योतयितुमुपक्रमते । सर्वेषामनुभवकर्तॄणां परीक्षकाणां लौकिकानाञ्च धूलधूसरितहालिकानामपि चेदमानायासानुभवसिद्धम् । यत् प्राणाधीनमेव जीवनम् । मुमूर्षुमवलोक्य "अस्त्यास्मिन् सम्प्रति प्राणः । शनैः शनैः सरति । व्यात्तमुखात् प्राणो याति । इदानीं व्यपगतः प्राणः । मृतोऽयम्" इति पार्श्वस्था ग्रामीणा अपि वदन्ते । सर्वाश्चक्रियाः सर्वाश्चेन्द्रियवृत्तयश्च सत्येव प्राणे स्फुरन्ति । असति च प्राणे सर्वे व्यापाराः क्व गताः किमभूवन् इत्याद्यध्यवसितुं योगिनोऽपि न समर्थाः । कथमस्यभूयस्त्वमिति लौकिकदृष्टान्तैः साधयति । यथा वै लोके । नाभौ रथनाभिदेशे । अरा लंबुदारुखण्डाः समर्पिताः सम्यगर्पिता भवन्ति । एवं तथैव । सर्वमिन्द्रियचेष्टनम् । प्राणे देहस्थिते मुख्ये प्राणे समर्पितं ग्रथितम् । यत एतस्मिन्प्राणे सर्वं प्रोतं वर्त्तते । अतः प्राण प्राणेन स्वात्मना स्वशक्त्यैव याति व्यवहरति । स्वक्रियासु असहायकइत्यर्थः । प्राणः प्राणं ददाति । प्राणो यत्किमपि वस्तु आत्मने ददाति तत्प्राणमेव ददाति । यथा कोपि पुरुषः आत्मने जलं ददाति अर्थात् जलं पिबति इह जलस्य पातापि प्राणएव तथा जलमपि प्राणएव । पाता तु प्राणं विना अकिञ्चित्करत्वात् प्राणशब्देन अभिधीयते पानीयादिवस्तु विना प्राणस्य अकिञ्चित्करत्वात्तैस्तैः शब्दैः प्रयुज्यते । अतोत्र कर्त्ताच कर्म च उपादानीयं वस्तु च सर्वं प्राणशब्देन निगद्यते । एतद्दृष्ट्यैव प्राणः प्राणं ददाति प्राणाय ददाति इति वाक्ये संगच्छेते । सम्प्रति

पित्रादयोऽपि प्राणवाच्या भवन्तीत्युपदिश्यते प्राणोहेत्यादिना। ननु पित्रादयः शब्दा जनकादिषु रूढाः सन्ति लोके। नहि कोऽपि पितरं वा मातरं वा भ्रातरं वा अन्यं सम्बधिनं वा प्राणनाम्ना आह्वयति। नचेदृक् कुत्राऽपि प्रयोगो विद्यते। तत्कथं पित्रादयः शब्दाः प्राणस्य वाचकाः। मुख्यार्थं त्यक्त्वा नहि गौणोऽर्थः कल्पनीयः। शृणु तात्पर्यमेतस्य सति प्राणे अयं पिता, इयं माता, अयं भ्राता, इयं स्वसा, एष आचार्यः, असौ ब्राह्मणः, असौ क्षत्रियः। इत्यादि प्रयोगाः सम्पन्ना भवन्ति। उत्क्रान्ते च प्राणे न तादृशाः प्रयोगाः प्रयुज्यन्ते। किन्तु शवं दृष्ट्वा मम पितुः शरीरं मातुर्देहोऽयमित्येवं भणति। एतेन पित्रादयः शब्दाः प्राणवाचिन एव प्रतीयन्ते। उत्तरस्मिञ्छ्लोके एतदेव दर्शयिष्यति ॥ १ ॥

अनुवाद—( सनत्कुमार कहते हैं ) प्राण ही आशा से अधिकतर है। क्योंकि जैसे रथ की अर, रथ की नाभि देश में सम्बद्ध रहते हैं। वैसे ही इस प्राण में सब ओतप्रोत हैं। प्राण प्राण के द्वारा व्यवहार करता है, प्राण सबों को प्राण देता है, प्राण प्राण के लिये देता है। प्राण ही पिता, प्राण ही माता, प्राण ही भ्राता, प्राण ही स्वसा, ( भगिनी ) प्राण ही आचार्य्य और प्राण ही ब्राह्मण है ॥ १ ॥

पदार्थः—(प्राणः+वाव ) प्राण ही ( आशायाः ) आशा से ( भूयान् ) अधिकतर है क्योंकि( यथा) जैसे (वै) ही (अराः) अर छोटे छोटे काष्ठ खण्ड जो चक्र में लगाये जाते हैं वे ( नाभौ ) रथ की नाभि देश में (समर्पिताः) लगे हुए रहते हैं (एवम्) वैसे ही ( अस्मिन्+प्राणे ) इस प्राण में ( सर्वम्+समर्पितम् ) सब समर्पित अर्थात् सम्बद्ध हैं ( प्राणः ) प्राण ( प्राणेन ) निज शक्ति ही से ( याति ) व्यवहार करता है (प्राणः+प्राणम्+ददाति) प्राण सब को वा अपने को प्राण देता है। अथवा प्राण जीवन को देता है ( प्राणाय+ददाति ) प्राण के लिये देता है ( प्राणः+ह+पिता ) वह प्रसिद्ध प्राण ही पिता है (प्राणः+माता) प्राण ही माता है ( प्राणः+भ्राता ) प्राण ही भाई है ( प्राणः+स्वसा ) प्राण ही बहिन है ( प्राणः+आचार्य्यः ) प्राण ही आचार्य्य है ( प्राणः+ब्राह्मणः ) प्राण ही ब्राह्मण है ॥ १ ॥

**स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्य्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्य्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥**

सः । यदि । पितरम् । वा । मातरम् । वा । भ्रातरम् । वा । स्वसारम् । वा । आचार्य्यम् । वा । ब्राह्मणम् । वा । किञ्चिद् । भृशम् । इव । प्रति । आह । धिक् । त्वा । अस्तु । इति । एव । एनम् । आहुः । पितृहा । वै । त्वम् । असि । मातृहा । वै । त्वम् । असि । भ्रातृहा । वै । त्वम् । असि । स्वसृहा । वै । त्वम् । असि । आचार्य्यहा । वै । त्वम् । असि । ब्राह्मणहा । वै । त्वम् । असि । इति ॥ २ ॥

भाष्यम्—स यदीति । स यः कश्चित्पुरुषः पितृमातृभ्रातृस्वस्राचार्य्य ब्राह्मणादीनामन्यतमं यदि भृशमिव तदननुरूपमिव किञ्चिद्वचनं प्रत्याह कथयति तदा तत्पार्श्वस्था विवेकिनो जनास्तमनुचितवक्तारमेनमाहुः कथयन्ति यत् त्वा त्वां धिगस्तु इति । त्वं पितृहासि त्वं पितुर्हन्तासि पितरं हन्तीति पितृहा । इत्यादि । अन्यत् सर्वमृज्वर्थम् ॥ १ ॥

अनुवाद—यह यदि पिता, वा माता, वा भ्राता, वा बहिन, वा आचार्य्य, वा ब्राह्मण इनमें से किसी को अनुचित वचन कहता है तो इसको लोक कहते हैं कि तुमको धिक्कार होवे। तू पितृघाती है। तू मातृघाती है। तू भ्रातृघाती है। तू स्वसृघाती है। तू आचार्य्य को हनन कर्त्ता है। तू ब्राह्मण का हनन कर्त्ता है। इति ॥ २ ॥

पदार्थः—( सः ) वह पुरुष ( यदि ) अगर ( पितरं वा ) पिता को अथवा (मातरं वा ) माता को अथवा ( भ्रातरं वा ) भ्राता को अथवा ( स्वसारं वा ) बहिन को अथवा ( आचार्यं वा ) आचार्य को अथवा ( ब्राह्मणं वा ) ब्राह्मण को ( भृशमिव ) अनुचित सा ( किञ्चित् ) कुछ वचन ( प्रत्याह ) कहे तो उसके समीपस्थ लोग (एनम् ) इसको अर्थात् इस अनुचित वक्ता को ( धिक्+त्वा+अस्तु ) तुझ को धिक्कार होवे ( इति+एव ) ऐसा ही ( आहुः ) कहते हैं। और ( वै ) निश्चय ( पितृहा+त्वम्+असि ) पिता के मारने वाला तू है ( मातृहा+वै+त्वमसि ) माता के हनन करने वाला है ( भ्रातृहा+वै+त्वमसि ) भ्रातृघ्न तू है ( स्वसृहा+वै+त्वमसि ) स्वसृघ्न तू है (आचार्यहा+वै+त्वमसि+इति) आचार्य घाती तू है (ब्रह्मणहा+वै+त्वमसि+इति) ब्राह्मणघाती तू है इस प्रकार इस पुरुष से लोग कहा करते हैं अर्थात् जबतक शरीर में प्राण रहता है । तबतक उस प्राणी से तत्तत् सम्बन्ध है । और इसी हेतु उस समय उसके साथ यथायोग्य व्यवहार करने से ही मर्य्यादा का पालन होता है। अन्यथा नहीं। इसके विपरीत उदाहरण आगे कहेंगे ॥ २ ॥

**अथ यद्यप्येनानुत्क्रान्तप्राणान्शूलेन समासं व्यतिषंदहेन्नैवैनं ब्रूयुः पितृहासीति । न मातृहासीति**

**न भ्रातृहासीति। न स्वसृहासीति। नाऽऽचार्य्यहासीति। न ब्राह्मणहासीति ॥ ३ ॥**

अथ। यद्यपि। एनान्। उत्क्रान्तप्राणान्। शूलेन। समासम्। व्यतिसन्दहेत्। न। एव। एनम्। ब्रूयुः। पितृहा। असि। इति। न। मातृहा। असि। इति। न। भ्रातृहा। असि। इति। न। स्वसृहा। असि। इति। न। आचार्य्यहा। असि। इति। न। ब्राह्मणहा। असि। इति ॥ ३ ॥

भाष्यम्—अथेति। पूर्वविपरीतमुदाहरणमाह अथानन्तरं उत्क्रान्तप्राणान् उत्क्रान्तो व्यपगतः प्राणो येषां ते उत्क्रान्तप्राणास्तान्। त्यक्तशरीरान्। एनान् पूर्वोक्तपितृप्रभृतीन्। समासं यथा तथा शूलेन सर्वावयवानेकीकृत्येत्यर्थः। यद्यपि कोऽपि पुत्रः। व्यतिसन्दहेत् समासव्यत्ययादिप्रकारेण सम्यक् दहेत् अग्नौ प्रज्वलयेत्। तथापि। एनं पितृप्रभृतिमृतशरीरं दाहयन्तमपि। न ब्रूयुर्न कथयेयुः। यत्त्वं पितृहा असि। त्वं पितुर्हन्ता वर्त्तसे इत्येनं प्रति न कोऽपि ब्रूयुः। एवमेव। त्वं मातृहासीत्येनं न ब्रूयुः भ्रातृहासीत्येनं न ब्रूयुः। स्वसृहासीत्येनं न ब्रूयुः। आचार्य्यहासीत्येनं न ब्रूयुः। ब्राह्मणहासीत्येनं न ब्रूयुः। इह हि सर्वः खलु स्वकीयजनकादीनां निर्गतप्राणं कलेवरं शूलेन खण्डशो विधायं विधायमग्निना भस्मसात् करोति नह्येनं पितृहासीत्येवंविधैर्वाक्यैः कोऽपि भर्त्सयति न स वा प्रायश्चित्त मर्हति। प्राणवतः खलु तान् किञ्चिदिव भर्त्सयेञ्जनोन्यैर्वाच्यो भवति धिक्कृतो भवति। विधिना प्रायश्चित्तीयते। एतेन प्राणएव पित्रादिसंज्ञको भवतीति ज्ञायते ॥ ३ ॥

अनुवाद—अब यद्यपि, प्राण रहित इन माता पिता आदिकों को शूल से ढेर करके और अवयवों को पृथक् करके उनके पुत्रादिक जलाते हैं परन्तु उनको ऐसा कोई नहीं कहते हैं कि तुम पितृघ्न हौ, तुम मातृघ्न हौ, तुम भ्रातृघ्न हौ, तुम स्वसृघाती हौ तुम आचार्य्यघाती हौ, तुम ब्राह्मणघाती हौ ॥ ३ ॥

पदार्थः—( अथ ) अनन्तर ( यद्यपि ) यद्यपि ( एनान् ) इन ( उत्क्रान्तप्राणान् ) निकले हुये प्राण वाले माता पिता आदिकों को ( शूलेन ) शूल से ( समासम् ) इकट्ठा करके ( व्यतिसन्दहेत् ) उस के पुत्र सम्बन्धिक आदि जलाते हैं ( एनम् ) तथापि इस जलाने वाले पुरुष को कोई नहीं कहते हैं कि ( पितृहा असि ) तू पिता के मारने वाला है ( मातृहा+असि+इति+न ) तू मातृ घाती है ऐसा उससे कोई नहीं कहता ( भ्रातृहा+असि+इति+न) भ्राता के मारने वाला तू है ऐसा कोई नहीं कहता ( स्वसृहा+असि+इति+न ) भगिनी के मारने वाला है ऐसा कोई नहीं कहता ( आचार्यहा+असि+

इति+न ) आचार्य का तू मारने वाला है ऐसा कोई नहीं कहता ( ब्राह्मणहा+असि+इति+न ) ब्राह्मण के हनन करने वाला तू है ऐसा कोई नहीं कहता अर्थात् प्राण से ही मातृ पितृ आदि सम्बन्ध घटित होता केवल शरीर से नहीं इस हेतु प्राण ही यथार्थ में माता पिता है ॥ ३ ॥

**प्राणो ह्येवैतानि सर्वाणि भवति । स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति । तञ्चेद् ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥४॥**

प्राणः । हि । एव । एतानि । सर्वाणि । भवति । सः । वै । एषः । एवम् । पश्यन् । एवम् । मन्वानः । एवम् । विजानन् । अतिवादी । भवति । तम् । चेद् । ब्रूयुः । अतिवादी । असि । इति । अतिवादी । अस्मि । इति । ब्रूयात् । न । अपह्नुवीत ॥ ४ ॥

भाष्यम्—प्राण इति । उपसंहरति । "प्राणो ह पिता । प्राणोमाता । प्राणोभ्राता । प्राणः स्वसा । प्राण आचार्यः । प्राणोब्राह्मणः" इति पूर्वमुक्तम् । सम्प्रति प्राण एव एष सर्वो भवतीति दर्शयति । तद्यथा प्राण एव हि । एतानि मातापित्रादीनि वस्तूनि भवति । प्राण एव माता भवति । प्राण एव पिता भवति । इति सर्वः प्राणएव भवति । फलं निर्दिशति । स वा एष एवं पश्यन् स वै प्रसिद्धवदेष जीवः । एवं पूर्वोक्तरीत्या । पश्यन् फलतोऽनुभवन् । एवं मन्वानो विविधोपपत्तिभिश्चिन्तयन् । एवं विजानन् उपपत्तिभिः संयोज्यैवमेवेति निश्चयं विदधत्सन् । अतिवादी भवति । अतीत्य वदितुं शीलमस्येत्यतिवादी । एतस्मादिदं भूयः । तस्मादपीदं भूयः । इत्थमतीत्यवक्ता यथार्थवक्तेत्यर्थः । अतिवादीसंज्ञको भवति । परन्तु अतिवादिने नराय द्रुह्यन्ति । विभीषिकां दर्शयन्ति । निन्दन्ति । कुत्सयन्ति । अहो इद मतिवादी समायातः । इत्यादिसाकूतमधिक्षिपन्ति । अतःकेऽपि प्रारब्धातिवादा लघवोजनास्तद्भीत्याऽतिवदनं त्यजन्ति । उपनिषत् खलु "अतिवदनं न कदापि त्याज्यमिति" उत्तरग्रन्थेनानुशास्ति तथाहि । तमतिवादिनं पुरुषं केपि निन्दाभावेन ब्रूयुश्चेत् यत् "त्वमतिवादी असि" । तर्हि स इदं ब्रूयात् । सत्यम् । "अहमतिवादी अस्मि" इति । न अपह्नुवीत । न कदापि गोपायेत । अपह्नवः पापकरोऽन्धकारश्च । अतो न गोपनीयं सत्यमित्यर्थः ॥ ४ ॥

अनुवाद—प्राण ही ये सब होते हैं सो यह साधक ऐसे देखता हुआ ऐसे मनन करता हुआ ऐसे जानता हुआ अतिवादी होता है । उसे ( अतिवादी पुरुष को ) यदि कोई कहे कि तुम अतिवादी हो तो यह उत्तर देवै कि हां मैं अतिवादी हूं छिपावे नहीं ॥ ४ ॥

पदार्थः-पूर्व में कहा गया है कि "प्राण पिता है। प्राण माता। प्राण भ्राता। प्राण स्वसा। प्राण आचार्य्य। प्राण ब्राह्मण है। इसी विषय का उपसंहार करते हैं यथा-( हि ) प्रसिद्ध ( प्राणः ) प्राण ( एव ) ही ( एतानि+सर्वाणि ) ये सब माता पिता आदि ( भवति ) होता है आगे फल कहा जाता है ( सः ) वह ( एषः ) यह प्रसिद्ध साधक उत्तरोत्तर अधिकतर वस्तु विज्ञानी विद्वान् ( एवं ) पूर्वोक्त प्रकार से (पश्यन्) अनुभव करता हुआ (एवम्+मन्वानः) इस प्रकार उपपत्ति के द्वारा चिन्ता करता हुआ ( एवम्+पश्यन् ) विविध उपपत्तियों से यह वस्तु ऐसी ही है इत्यादि निश्चय करता हुआ ( अतिवादी+भवति ) अतिवादी होता है अर्थात् सत्यवक्ता होता है। परन्तु इस प्रकार के अतिवादी पुरुष से लोग द्रोह करते हैं, विभीषिका दिखलाते हैं निन्दा करते हैं। यह "अतिवादी आया" इस प्रकार ताना मारते हैं। इत्यादि कष्ट देख कोई २ पुरुष अपनी सत्यता को त्याग अतिवादनधर्म्म से गिर पड़ते हैं। परन्तु उपनिषद् चेताती है कि अतिवादन का त्याग करना उचित नहीं क्योंकि अतिवादन सत्यता है और सत्यता का त्याग सर्वथा हेय है। अतः आगे कहा जाता है कि (तम्+चेत्) उस अतिवादी पुरुष को ( ब्रूयुः ) यदि कोई कहे कि तू ( अतिवादी+असि+इति ) अतिवादी है तौ वह ( ब्रूयात् ) अतिवादी उत्तर देवे कि मैं ( अतिवादी+अस्मि+इति ) अतिवादी हूं ( न+अपह्नुवीत ) छिपावे नहीं ॥ ४ ॥

भाष्याशयः-अतिवादी-नाम से वाणी अधिक उससे मन अधिक इत्यादि भाषणशील पुरुष को अतिवादी कहते हैं। क्योंकि अति नाम अतिक्रमण का है तब वह उसका २ त्याग करता जाय और उस से दूसरे २ को उत्तम बतलाता जाय उसे अतिवादी कहते हैं अर्थात् यथार्थ वस्तु की ओर चलने वाले से अभिप्राय है। परन्तु अतिवादी पुरुष से लोग द्रोह करते हैं उसे विभीषिका दिखलाते हैं ताना मारते हैं। कुत्सन करते हैं अहो यह अतिवादी पुरुष आया इत्यादि वाक्यों से उसके ऊपर आक्षेप करते हैं। अतः कोई अतिवाद प्रारम्भ कर्त्ता लघु पुरुष उनके भय से अतिवाद को परित्याग कर देते हैं। अतः उपनिषद् शिक्षा देती है कि उसे त्याग न करै किन्तु दृढ़ता पूर्वक सबों को उत्तर देवे कि मैं अतिवादी हूं। इस बात को कदापि न छिपावे। क्योंकि सत्य के गोपन से देश में अन्धकार फैलजाता है ॥ ४ ॥ इति पञ्चदश खण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १५ ॥

## अथ षोडशः खण्डः

प्राणस्य सर्वातिशयित्वं सर्वात्मत्वं तस्मिन् सर्वेषां समर्पितत्वं च निशम्य नारदोऽधुना प्रश्नाद् विरराम। अधीताखिलविद्योऽपि बोधितोऽपि पौनःपुन्येन, शिक्षितोऽपि पौर्वा-

पर्य्यप्रकरणपर्य्यालोचनेन प्राणशब्दस्योक्तार्थविज्ञानकुशलोऽपि "अस्ति भगवः प्राणाद्भूयः" इत्याकारकं प्रश्नं कथं नाप्राक्षीत् । किं प्राणाद् भूयसोवस्तुनोऽभावग्रहणात्तूष्णीकः संवृत्तः । उत आचार्य्यसामीप्ये वावदूकत्वविनिवृत्तये । उत कारुणिक आचार्य्योऽन्तेवासिभावनिबन्धं प्रज्ञाय इतःपरमपि यदि तत्त्वं स्यात्तर्हि स्वयमेवोपदेक्ष्यतीत्यलंपृष्ट्वेति जोषमासे । पौर्वापर्य्येणपर्य्यालोच्यमाने प्रकरणे प्राणशब्दो मुख्यप्राणवाचीति सर्वेषां बुद्धिमारोहति किमु सर्वविद्यस्य नारदस्य । अतस्तस्मादपि ब्रह्मणो भूयस्त्वमिति विदुषि नारदे न पूर्वस्य पक्षस्य सम्भवोऽस्ति । उत्तरौपक्षावेव प्रश्नविरामे कारणमिति ध्वन्यते । अतः प्रश्नाद् विरमन्तं बुद्धिमन्तं सर्वभावेनोपसन्नं श्रोत्रियं ब्रह्मतत्त्वं जिज्ञासुं शिष्यमवलोक्य नहि प्राणान्तमेव तत्त्वमितः परमपि अस्त्येव तदपि साधीयसे शिष्याय शिक्षणीयमित्युत्तरग्रन्थमारभते योगिवरिष्ठः सनत्कुमारः ॥

भाषा—प्राण ही सब से अतिशय है । सर्वात्मा प्राण ही है । उसी में सर्व पदार्थ समर्पित हैं इस विषय को सुन अब नारद प्रश्न से विरत होगये । इस में शङ्का होती है कि सम्पूर्ण विद्या के ज्ञाता, बोधित, पुनः २ शिक्षित और पूर्वापर प्रकरण की आलोचना से प्राण शब्द के उक्त अर्थों के जानने में कुशल नारद ने "हे भगवन्! प्राण से भी अधिकतर कोई वस्तु है?" ऐसा प्रश्न पूर्ववत् क्यों नहीं किया (१) प्राण से अधिकतर वस्तु का अभाव है इस हेतु क्या नारद चुप हो गये (२) अथवा आचार्य के समीप बहुत बोलना ठीक नहीं इस कारण (३) अथवा कारुणिक आचार्य शिष्य के भावबन्धन को जान यदि कोई तत्त्व इस से परे होगा तो स्वयमेव उत्तर देवेंगे पूछना व्यर्थ है इस हेतु वे चुप होगये । उत्तर—पूर्वापर प्रकरण की आलोचना से प्राण शब्द मुख्य प्राण वाचक है यह बात सबों की बुद्धि में झट आजाती है तब सर्वविद्य नारद की बात ही क्या । अतः प्राण से भी ब्रह्म की अधिकतरता को अच्छी तरह जानते हुए नारद में प्रथम पक्ष का सम्भव नहीं उत्तर दो पक्ष ही संभवित हैं । इस हेतु प्रश्न से विरत होते हुए बुद्धिमान्, सर्व भाव से उपसन्न, श्रोत्रिय और ब्रह्मतत्त्व के जिज्ञासु शिष्य को देख प्राण पर्य्यन्त ही तत्त्व नहीं है इस से परे भी है वह भी साधु शिष्य को शिक्षणीय है इस हेतु योगिवरिष्ठ सनत्कुमार उत्तर ग्रन्थ का आरम्भ करते हैं ॥

**एष तु वा अतिवदति यः सत्येनातिवदति । सोऽहंभगवः सत्येनातिवदानीति ? सत्यं त्वेव विजिज्ञासितव्यमिति । सत्यं भगवो विजिज्ञास इति ॥ १ ॥**

एषः । तु । वै । अतिवदति । यः । सत्येन । अतिवदति । सः । अहम् । भगवः । सत्येन । अतिवदानि । इति । सत्यम् । तु । एव । विजिज्ञासितव्यम् । इति । सत्यम् । भगवः । विजिज्ञासे । इति ॥ १ ॥

भाष्यम्-एषत्विति । सनत्कुमार आह । नारद! केवलस्य प्राणस्य वेत्ता नास्त्यतिवादी । किन्तु । एष तु वै निश्चितं अतिवदति । यः पुरुषः सत्येन=सत्त्वगुणनिधिना ब्रह्मणा सह अतिवदति अतिक्रम्य वदति । इत इदमधिकतरम् । ततोऽपीदं भूयः । इत्थमतिक्रम्यातिक्रम्य सत्त्वमुपतिष्ठते यः सोऽतिवदति । स एवातिवादी । वस्तुतस्तु नाम्न आरभ्य प्राणान्तमेवातिवदनशीलोनास्त्यतिवादी किन्त्वपरमार्थविदेव । यस्तु सर्वमतीत्य सत्यगुणमतत्त्वं ब्रह्म वदति। तस्मिन् प्रतितिष्ठति च स एव परमार्थविदतिवादी च । इदं श्रुत्वा नारदो ब्रूते । हे भगवो भगवन्! सोऽहं सत्यस्याऽवेत्ता तवोपदेशेन तत्सत्यस्य जिज्ञासुर्भवामि । मां कृपया तथा विदधातु यथाहं सर्वदा सत्येनातिवदानि सत्यं बोद्धुं वक्तुं च शक्नुयाम् । सनत्कुमार आह यद्येवं सत्येनातिवदितुमिच्छसि तर्हि । सत्यमेव तु तावद्विजिज्ञासितव्यम् । इति । नारद आह । एवमस्तु । हे भगवो भगवन्! सत्यं विजिज्ञासे सत्यं ज्ञातुमिच्छामि । इति ॥ १ ॥

अनुवाद—( हे नारद ! ) किन्तु यह ( उपासक ) अतिवादी है । जो सत्य के साथ अतिवादी होता है । ( नारद कहते हैं ) हे भगवन्! मुझ पर इतनी कृपा करो कि मैं सत्य से अतिवादी होऊं । सनत्कुमार—तब हे नारद ! सत्य ही की जिज्ञासा करनी चाहिये । नारद — हे भगवन् ! मैं सत्य की जिज्ञासा करता हूं ॥ १ ॥

पदार्थः—( तु ) परन्तु ( एषः ) यह ( वै ) निश्चित ( अतिवदति ) अतिवादी होता है ( यः ) जो ( सत्येन ) सत्यगुणनिधि ब्रह्मके द्वारा ( अतिवदति ) अतिवादी होता है इतना सुन नारद कहते हैं कि ( भगवः ) हे भगवन्! ( सः+अहम् ) सो मैं अर्थात् सत्य को न जानने वाला ( सत्येन ) सत्य से=सत्य गुण विधान ब्रह्म से (अतिवदानि ) अतिवादी होऊं । अर्थात् हे भगवन् ! मुझ पर आप ऐसी कृपा करें वा मुझे ऐसी शिक्षा देवें कि मैं सत्य ब्रह्म के द्वारा ही अतिवादी होऊं । पुनः सनत्कुमार कहते हैं कि यदि सत्य के साथ अतिवादी होना चाहते हो तो ( सत्यम् ) सत्य (तु+एव) ही ( जिज्ञासितव्यम् ) ( इति ) जिज्ञासनीय है । पुनः नारद कहते हैं ( भगवः ) भगवन्! ( सत्यम् ) सत्य की ( विजिज्ञासे+इति ) जिज्ञासा करता हूं । इति । १ ॥

भाष्याशयः—सनत्कुमार का अभिप्राय यह है कि केवल प्राण का ज्ञाता अतिवादी नहीं है परन्तु प्राण से पर जो सत्य है उस के साथ योग कर जो अतिवादी होता है

वही यथार्थ अतिवादी है। प्राणवेत्ता अतिवादी नहीं। हां नामादिवेत्तों की अपेक्षा प्राणवेत्ता अवश्य अतिवादी है। इसे सुन प्राणसे भी कोई अधिकतर तत्त्व विद्यमान है ऐसा जान, उस सत्य की जिज्ञासा नारदने की ॥ १ ॥

इतिषोडशखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १६ ॥

अथ सप्तदशः खण्डः

**यदा वै विजानात्यथ सत्यं वदति। नाविजानन् सत्यं वदति। विजानन्नेव सत्यं वदति। विज्ञानं त्वेव विजिज्ञासितव्यमिति। विज्ञानं भगवो विजिज्ञास इति ॥१॥**

यदा। वै। विजानाति। अथ। सत्यम्। वदति। न। अविजानन्। सत्यम्। वदति। विजानन्। एव। सत्यम्। वदति। विज्ञानम्। तु। एव। विजिज्ञासितव्यम्। इति। विज्ञानम्। भगवः। विजिज्ञासे। इति ॥ १ ॥

भाष्यम्—यदेति। यदा अध्येता। विजानाति। इदं सत्यमिदमसत्यमिति परमार्थतो विवेक्तुं शक्नोति। अथानन्तरं सत्यं वदति। पूर्वोक्तमेव दृढ़यति। नारद! अविजानन् अविदन् पुरुषो न सत्यं वदति। विजनन्नेव सत्यंवदति। अतो वि:ानमेव तु प्रथमं विजिज्ञासितव्यमिति। उक्त वचनं श्रुत्वा नारद आह। भगवो भगवन्! विज्ञानं विजिज्ञासे। इति ॥१॥

अनुवाद—सनत्कुमार (हे नारद!) जब ही अध्येता निश्चित रूप से सत्य (ब्रह्म) जानता है तब सत्य (ब्रह्म) का कथन करता है न जानता हुआ सत्य का कथन नहीं कर सक्ता। जानता हुआ ही सत्य कहता है। अतः विज्ञान की जिज्ञासा करनी चाहिये। नारद—हे भगवन्! मैं विज्ञान की जिज्ञासा करता हूं ॥ १ ॥

पदार्थः—(यदा+वै) जब ही (विजानाति) विशेष रूप से जानता है (अथ) तब (सत्यम्) ब्रह्म को (वदति) कहता है (अविजानन्) न जानता हुआ (न) नहीं (सत्यम्+वदति) सत्य ब्रह्म को कहता है (विजानन्+एव) जानता हुआ ही (सत्यम्+वदति) सत्य का कथन करता है इस कारण (विज्ञानम्+एव) विज्ञान की ही (विजिज्ञासितव्यम्) विजिज्ञासा करनी चाहिये। नारद कहते हैं (भगवः) हे भगवन्! (विज्ञानम्) विज्ञान की (विजिज्ञासे+इति) विजिज्ञासा करता हूं। जब साधक "यह सत्य है" "यह असत्य है" इस प्रकार विविध विज्ञान शास्त्र के द्वारा निर्णयकरता है तबही यथार्थ में सत्य वक्ता हो सकता है। अन्यथा भ्रम में पड़कर सत्यासत्य के निर्णय में सर्वदा असमर्थ ही रहेगा। इस हेतु सत्य के लिये विज्ञान की बड़ी

आवश्यक्ता है इस हेतु प्रथम सबों को विज्ञान शास्त्र अवश्य जानना चाहिये ॥ १ ॥

इति सप्तदशखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १७ ॥

अथाष्टादशः खण्डः

**यदा वै मनुतेऽथ विजानाति । नामत्वा विजानाति । मत्वैव विजानाति । मतिस्त्वेव विजिज्ञासितव्येति । मतिं भगवो विजिज्ञास इति ॥ १ ॥**

यदा । वै । मनुते । अथ । विजानाति । न । अमत्वा । विजानाति । मत्वा । एव । विजानाति । मतिः । तु । एव । विजिज्ञासितव्या । इति । मतिम् । भगवः । विजिज्ञासे । इति ॥ १ ॥

भाष्यम्-यदेति । यदा यस्मिन् काले । वै निश्चितम् । अध्येता विविधाभिरुपपत्तिभिर्मनुते सत्यासत्यविवेकपूर्वकं मननं करोति । अथ मननानन्तरं विजानाति सत्यासत्यभेदं वेत्ति । अमत्वा मननमकृत्वा न विजानाति । न ज्ञानवान् भवति । किन्तु मत्वा एव विजानाति । अतो हे नारद ! मतिरेव मननमेव तु विजिज्ञासितव्या । इति । नारदः पृच्छति । भगवो मतिं विजिज्ञासे । इति ॥ १ ॥

अनुवाद-( सनकुमार कहते हैं कि ) जब निश्चित रूप से ( अध्येता ) मनन करता है तब जानता है । मनन के विना नहीं जानता । किन्तु मनन करके ही जानता है इस कारण हे नारद ! अब मनन की ही जिज्ञासा करनी चाहिये । नारद पूछते हैं-हे भगवन् ! मैं मनन को विशेष रूप से जानने की इच्छा करता हूं ॥ १ ॥

पदार्थः-( यदा ) जब ( वै ) निश्चित रूप से ( मनुते ) विविध उपपत्तियों के द्वारा मनन करता है ( अथ ) तब ( विजानाति ) विशेष रूप से सत्यासत्य का भेद जानता है ( अमत्वा ) न मनन करके अर्थात् मनन के विना ( न+विजानाति ) विशेष रूप से नहीं जानता है ( मत्वा+एव ) मनन करके ही ( विजानाति ) विशेष रूप से जानता है ( मतिः+तु+एव ) इस लिये हे नारद! मनन ही ( विजिज्ञासितव्या+इति ) विजिज्ञासनीय है । इतना सुन नारद कहते हैं ( भगवः ) हे भगवन् ! ( मतिम् ) मनन को ( विजिज्ञासे+इति ) विशेष रूप से जानने की इच्छा करता हूं विज्ञान शास्त्र भी मनन के अधीन है । गत प्रपाठकों में विशेष कर चतुर्थ प्रपाठक के सत्यकामजाबाल और उपकोशल की आख्यायिका में मनन शास्त्र की ही प्रबलता कही गई है । मनन से ही मुनि होते थे । जबतक पदार्थों का मनन नहीं हुआ है तब

तक अन्तपर्यन्त तत्त्व का बोध कैसे हो सक्ता अतः मनन के अधीन ही विज्ञान शास्त्र है ॥ १ ॥ इत्यष्टादशखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १८ ॥

अथैकोनविंशः खण्डः

**यदा वै श्रद्दधात्यथ मनुते । नाश्रद्दधन् मनुते । श्रद्दधदेव मनुते । श्रद्धात्वेव विजिज्ञासितव्येति । श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥**

यदा । वै । श्रद्दधाति । अथ । मनुते । न । अश्रद्दधत् । मनुते । श्रद्दधत् । एव । मनुते । श्रद्धा । तु । एव । विजिज्ञासितव्या । इति । श्रद्धाम् । भगवः । विजिज्ञासे । इति ॥ १ ॥

भाष्यम्—यदेति । मननकारणभूतां श्रद्धां व्याकर्त्तुं ग्रन्थारम्भः । आस्तिक्यबुद्धिः श्रद्धा । यदा अध्येता । ब्रह्मणि वस्तुनि अध्येये वा श्रद्दधाति श्रद्धां करोति । अथ मनुते मन्ता भवति । अन्यत् सर्वमृज्वर्थम् । गीतायामपि श्रद्धावाँल्लभते ज्ञानमित्यादि । योगशास्त्रेऽपि "स तु दीर्घकालनैरन्तर्यसत्काराऽऽसेवितो दृढभूमिः" १ । १४ । सत्कारेण श्रद्धया आसेवितः सम्पादित इत्यर्थः । श्रद्धां विना मनने वैमनस्यसम्भवात् हे नारद ! श्रद्धा सम्यक् सम्पादनीया ॥ १ ।

अनुवाद—(सनत्कुमार कहते हैं ) जब ही मनुष्य श्रद्धा करता है तब ही मनन कर सकता है । श्रद्धा न करता हुआ मनन नहीं कर सकता । श्रद्धा करता ही हुआ मनन करता है इस कारण हे नारद ! श्रद्धा ही विशेष रूप से विजिज्ञासनीय है । नारद पूछते हैं हे भगवन् ! मैं श्रद्धा को विशेष रूप से जानने की इच्छा करता हूं । १॥

पदार्थः—( यदा ) जब ( वै+श्रद्दधाति ) श्रद्धा करता है (अथ) तबही (मनुते) मनन करता है ( अश्रद्दधत् ) श्रद्धा न करता हुआ (न+मनुते ) मनन नहीं करता किन्तु ( श्रद्दधद्+एव) श्रद्धा करता ही हुआ ( मनुते ) मनन करता है इस कारण हे नारद ! ( श्रद्धा+तु+एव ) श्रद्धा ही तो ( विजिज्ञासितव्या+इति ) विशेषरूप से विजिज्ञासनीय है । यह सुन नारद पुनः कहते हैं ( भगवः ) हे भगवन् ! ( श्रद्धाम् ) श्रद्धा को ( विजिज्ञासे+इति ) विशेष रूप से जानने की इच्छा करता हूं ॥१॥

भाष्याशयः—मनन का हेतु श्रद्धा है । श्रीकृष्णजी ने गीता में कहा है कि श्रद्धावान् पुरुष ज्ञान प्राप्त करता है । योगशास्त्र में भी कहा है कि सत्कार ( श्रद्धा ) से

आसेवित होने पर ही योग दृढ़भूमि होता है । उस श्रद्धा का अध्ययन करना आवश्यक है। नारद इस बात को सुन श्रद्धाशास्त्र की जिज्ञसा करते हैं ॥ १ ॥

इत्येकोनविंशखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १९ ॥

अथ विंशः खण्डः

**यदा वै निस्तिष्ठत्यथ श्रद्दधाति । नानिस्तिष्ठन् श्रद्दधाति । निस्तिष्ठन्नेव श्रद्दधाति । निष्ठा त्वेव विजिज्ञासितव्येति । निष्ठां भगवो विजिज्ञास इति ॥१॥**

यदा । वै । निस्तिष्ठति । अथ । श्रद्दधाति । न । अनिस्तिष्ठन् । श्रद्दधाति । निस्तिष्ठन् । एव । श्रद्दधाति । निष्ठा । तु । एव । विजिज्ञासितव्या । इति । निष्ठाम् । भगवः । विजिज्ञासे । इति ॥ १ ॥

भाष्यम्—यदेति । गुरुशुश्रूषादिषु या श्रद्धा सैव निष्ठा शब्दवाच्या ब्रह्मविज्ञानायाऽऽचार्य्य शुश्रूषापि आवश्यकी । साध्ये कार्य्ये सर्वतोभावेन दृढता निष्ठा वा । यदा वै निस्तिष्ठति नितरामुपास्ये वस्तुनि अधितिष्ठति । अथानन्तरं श्रद्दधाति श्रद्धालुर्भवति । अनिस्तिष्ठन् सन् न श्रद्दधाति न सत्कारं करोति किन्तु निस्तिष्ठन् एव श्रद्दधाति सत्करोति अतो नारद ! निष्ठैव तु विशेषेण विजिज्ञासनीया । नारदो ब्रूते । भगवो भगवन् ! निष्ठां विजिज्ञासे इति ॥ १ ॥

अनुवाद—( सनत्कुमार कहते हैं कि हे नारद ! ) जब ही ( कोई उपासक ) निष्ठा करता है तब श्रद्धालु होता है निष्ठा न करता हुआ श्रद्धालु नहीं होता किन्तु निष्ठा करता हुआ ही श्रद्धालु होता है अतः निष्ठा ही विजिज्ञासनीय है । नारद कहते हैं कि हे भगवन् ! मैं निष्ठा को विशेष रूप से जानने की इच्छा करता हूं ॥ १ ॥

पदार्थः—( यदा+वै ) जब ही ( निस्तिष्ठति ) निष्ठा करता है ( अथ+श्रद्दधाति ) तब श्रद्धालु होता है ( अनिस्तिष्ठन् ) निष्ठा न करता हुआ ( न+श्रद्दधाति ) श्रद्धालु नहीं होता किन्तु ( निस्तिष्ठन्+एव ) निष्ठा करता हुआ ही ( श्रद्दधाति ) श्रद्धावान् होता है इस कारण हे नारद ! ( निष्ठा+तु+एव ) निष्ठा ही तो (विजिज्ञासितव्या+इति ) विशेष रूप से जिज्ञासनीय है । इसे सुन नारद कहते हैं ( भगवः ) हे भगवन्! ( निष्ठाम् ) निष्ठा को ( विजिज्ञासे+इति ) विशेष रूप से जानने की इच्छा करता हूं ॥ १ ॥

भाष्याशयः—श्रद्धा का कारण निष्ठा है । उपास्य विषय में सर्वतो भाव से श्रद्धा

भाष्याशयः-यदि इस शरीर में बदर (बैर) परिमाण कोई वस्तु है तो उसके अन्वेषण और जिज्ञासा से जिज्ञासा करने वाले को क्या फल मिल सकता है इसहेतु उसमें जो अन्वेष्टव्य और विजिज्ञासितव्य है उससे कुछ प्रयोजन नहीं क्योंकि एक तो यह ब्रह्मपुर ही परिच्छिन्न और अल्प है दूसरा तत्स्थ पुण्डरीक उससे भी अल्पतर है तीसरा तदन्तर्निविष्ट जो वस्तु है वह उस से भी अल्पतम है उस के अन्वेषण से क्या हो सकता है ॥ २ ॥

**यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते। उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि। यच्चास्येहास्ति यच्चानस्ति सर्वं तदस्मिन् समाहितमिति ॥ ३ ॥**

यावान्। वै। अयम्। आकाशः। तावान्। एषः। अन्तर्हृदयः। आकाशः। उभे। अस्मिन्। द्यावापृथिवी। अन्तः। एव। समाहिते। उभौ। अग्निः। च। वायुः। च। सूर्याचन्द्रमसौ। उभौ। विद्युन्नक्षत्राणि। यत्। च। अस्य। इह। अस्ति। यत्। च। न। अस्ति। सर्वम्। तत्। अस्मिन्। समाहितम्। इति ॥३॥

भाष्यम्—यावानिति। स आचार्यस्तान् संशयितान् एवं पृष्टवतो ब्रूयादिति यदुक्तं तदिह दर्शयति। यावान् यत्परिमाणमस्य यावान्। अयमाकाशः। भौतिक आकाशोऽस्ति। तावान्। तत्परिमाणमस्य तावान्। अन्तर्हृदय आकाशः। आकाशाख्यं ब्रह्म। नात्राकाशतुल्यपरिमाणत्वमभिप्रेत्य तावानित्युच्यते। किन्तर्हि। ब्रह्मणोऽनुरूपस्य दृष्टान्तान्तरस्याभावात् सोपमा। कथं पुनर्नाकाशसममेव ब्रह्मेत्यवगम्येत। "येनावृतं खञ्च दिवं महीञ्च"। "तस्माद्वा एतस्मादात्मन आकाशः संभूतः"। "तस्मिन्नु खल्वक्षरे गार्ग्याकाश" इत्यादि श्रुतिभ्यो नाकाशसमत्वं ब्रह्मणः। किञ्च। अस्मिन्। अन्तराकाशाख्ये ब्रह्मणि। उभे द्यावापृथिवी। अन्तरेव अन्तर्वर्त्तित्वेनैव। समाहिते। सम्यगाहिते स्थिते। तथा उभौ। अग्निश्च वायुश्च। उभौ सूर्याचन्द्रमसौ। विद्युन्नक्षत्राणि च। एतत्सर्वं तदन्तर्वर्त्तिस्थितम्। यच्चास्यात्मन आत्मीयत्वेन देहवतोऽस्ति विद्यते। इहलोके तथा यच्चात्मीयत्वेन। न विद्यते। नष्टं भविष्यच्च नास्तीत्युच्यते। नत्वत्यन्तमेवासत्। तत्सर्वमस्मिन् समाहितम्। सम्यक् स्थितम् ॥ ३ ॥

अनुवाद—वह "उन संदिग्ध पुरुषों से" कहे कि निश्चय जितना बड़ा यह आकाश है उतना बड़ा यह हृदयान्तर्वर्त्ती आकाश ( ब्रह्म ) है । दोनों द्युलोक और पृथिवी इसके अन्तर्मध्य समाहित ( सम्यक् स्थित ) हैं । दोनों अग्नि और वायु । दोनों सूर्य और चन्द्रमा, विद्युत्, नक्षत्र इसके मध्य समाहित हैं जो इस प्राणी के यहां है और जो नहीं है वे सब ही इसमें समाहित हैं ॥ ३ ॥

पदार्थः—वह उपदेष्टा आचार्य्य उन संदिग्ध जिज्ञासुओं से कहे कि ( यावान् ) जितना प्रमाण का ( वै ) निश्चय ( अयम् ) यह ( आकाशः ) भौतिक आकाश है ( तावान् ) उतना प्रमाण का ( एषः ) यह ( अन्तर्हृदयः ) हृदयान्तर्वर्ती (आकाशः) आकाशाख्य ब्रह्म है ( अस्मिन् ) इस आकाशाख्य ब्रह्म में ( उभौ ) दोनों ( अग्निः+च+वायुः+च ) अग्नि और वायु ( उभौ ) दोनों ( सूर्याचन्द्रमसौ ) सूर्य और चन्द्र ( विद्युन्नक्षत्राणि ) विद्युत् और नक्षत्र ये सब इसमें समाहित हैं ( अस्य ) इस साधक का ( इह ) इस लोक में ( यच्च+अस्ति ) जो है ( यच्च+नास्ति ) और जो नहीं है ( तत्+सर्वम् ) सबही ( अस्मिन् ) इस आकाशाख्य ब्रह्म में ( समाहितम् ) अच्छे प्रकार से स्थित है इति ॥ ३ ॥

भाष्याशयः–जितना वाह्य आकाश है उतना ही हृदयाभ्यन्तर आकाश कहा गया है । हृदयाभ्यन्तर आकाश का अर्थ यहां ब्रह्म है वाह्य आकाश की उपमा देने से ब्रह्म की परिच्छिन्नता रूप दोष होता है परन्तु ब्रह्म अपरिच्छिन्न है तब कैसे यह वर्णन किया गया है ? उत्तर–यहां तावान् शब्द से आकाश तुल्य परिमाण का ग्रहण नहीं है । तब क्या है ? ब्रह्म के समान अन्य दृष्टान्त के अभाव होने के कारण यह वाह्याकाश का दृष्टान्त दिया गया है । पुनः शङ्का–आकाश के तुल्य ही ब्रह्म है ऐसा क्यों नहीं समझा जाय । उ०–क्योंकि सर्व वेदान्त सिद्धान्त यह है कि सम्पूर्ण ब्रह्माण्ड उसके अल्पावयव समान है फिर आकाश परिमाणवत् ही ब्रह्म कैसे हो सकता है और कहा भी गया है (तस्माद्वा०) उस इस परमातमा से आकाश का भी आविर्भाव होता है पुनः– "तस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्चप्रोतश्चेति" बृ० ३ । ८ । १२ ॥ हे गार्गी ! उसी ब्रह्म में यह आकाश ओतप्रोत है । इस हेतु उपमा के अभाव के कारण आकाश से उपमा दी जाती है ॥ ३ ॥

**तञ्चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितꣳ सर्व्वाणि च भूतानि सर्व्वे च कामा**

## यदैत(न)ज्जरावाऽऽप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥

तम् । चेत् । ब्रूयुः । अस्मिन् । चेत् । इदम् । ब्रह्मपुरे । सर्वम् । समाहितम् । सर्व्वाणि । च । भूतानि । सर्वे । च । कामा० । यत् । एतत् (एनत्) । जरा । वा । आप्नोति । प्रध्वंसते । वा । किम् । ततः । अतिशिष्यते । इति ॥ ४ ॥

भाष्यम्—तञ्चेदिति । तमुपदिशन्तमाचार्य्यं पुनरप्यन्तेवासिनः सन्दिग्धाः सन्तः ब्रूयुः कथयेयुश्चेत् । किंब्रूयुरित्याह । हेभगवन् आचार्य ! चेद्यदि अस्मिन्ब्रह्मपुरे । ब्रह्मैवपुरं ब्रह्मपुरम् । नतु ब्रह्मणः पूरितिषष्ठीतत्पुरुषः । अस्य शरीरस्य सर्वाधिष्ठानत्वासम्भवात् अस्मिन् ब्रह्मपुरे अन्तराकाशाख्ये ब्रह्मणि यदि सर्वमखिलं समाहितं सम्यगाहितं स्थितं वर्तते । एतदेवपुनः प्रपञ्चयति । सर्वाणि च भूतानि सर्वेच कामाः । एतस्मिन् ब्रह्मपुरे यदि समाहिताः सन्ति । तर्हि । हे गुरो ! यदा यस्मिन्काले । एनदेतत् शरीरं कर्तृ जरां वृद्धावस्थामाप्नोति प्राप्नोति । यद्वा । जरेति प्रथमान्तंपदं । यदा जरा जरावस्था एतच्छरीरं वा आप्नोति तदा प्रध्वंसत एव । वा शब्द एवार्थः । ततः यदा किमतिशिष्यते । किमवशिष्यते । प्राप्तायां जरावस्थायां विध्वस्ते चास्मिन् शरीरे न कश्चिदवशेषोऽत्रदृश्यते । कथं तर्हि । वयं भगवद्वचनं प्रतीमः । घटाश्रितक्षीर दधिस्नेहादिवद् घट नाशेपि देहाश्रयमुत्तरोत्तरं पूर्वपूर्वनाशान्नश्यतीत्यभिप्रायः । एवं प्राप्ते नाशे न किञ्चनावतिष्ठते ॥४॥

अनुवादः—उस ( उपदेश देते हुए आचार्य ) से पुनरपि सन्दिग्ध शिष्य यदि पूछें कि हे भगवन् आचार्य्य ! यदि इस ब्रह्मपुर में सब कुछ समाहित अर्थात् सम्यक् रूप से समावेशित है और सर्व प्राणियों ( का ज्ञान ) और सर्व काम समाहित हैं तो जब इसको ( इस शरीर को ) जरावस्था प्राप्त होती है तब विनष्ट ही हो जाता है तब इस में क्या रहजाता है अर्थात् कुछ नहीं रहता ॥ ४ ॥

पदार्थः–( चेत् ) यदि ( तम् ) उस उपदेष्टा आचार्य से ( ब्रूयुः ) संदिग्धशिष्य जिज्ञासाकरे कि (चेत्) यदि (अस्मिन्+ब्रह्मपुरे) इस ब्रह्मपुर अर्थात् विज्ञान में ( सर्व+समाहितम् ) सब कुछ अच्छेप्रकार स्थित है ( सर्वाणि च भूतानि ) और सब प्राणी का ज्ञान ( सर्वे च कामाः ) सर्व कामानाएं सम्यग् प्रकारसे स्थित हैं तो ( यदा ) जब

---

( १ ) एनदिति प्रामादिकः पाठो दृश्यते । लेखभ्रमात् तकारस्य नकारो जात इति प्रतीयते । क्वचिज्जरेतिप्रथमान्तं क्वचिद् द्वितीयान्तं पठ्यते । यदा जरा प्रथमान्ता तदा एनदिति साधु इतरथाऽसाधु इति विवेकः ॥

( जरा ) वृद्धावस्था ( एतत् ) इस शरीर को ( आप्नोति ) प्राप्त होती है तो ( प्रध्वंसते+वा ) यह शरीर अवश्य ही नष्ट होजाता है ( ततः ) तब (किम् ) क्या (अतिशिष्यते ) अवशेष बाकी रहजाता है ( इति ) ॥ ४ ॥

भाष्याशयः–ब्रह्मपुर–यहां ब्रह्मपुर शब्द का अर्थ केवल ब्रह्म ही है। ब्रह्म का जो पुर वह ब्रह्मपुर ऐसा समास यहां नहीं करना चाहिये । क्योंकि यावत् पदार्थ ब्रह्म में स्थित है न कि शरीर में। और शिष्य को शङ्का इस हेतु है कि यदि ब्रह्म इस शरीर में है तो शरीर के नाश से उस पुण्डरीक का नाश उसके नाश से ब्रह्म के नाश का भी प्रसंग होजायगा ॥ ४ ॥

**स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाःसमाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासःसत्यकामःसत्यसङ्कल्पो यथाह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥**

सः । ब्रूयात् । न । अस्य । जरया । एतत् । जीर्य्यति । न । वधेन । अस्य । हन्यते । एतत् । सत्यम् । ब्रह्मपुरम् । अस्मिन् । कामाः । समाहिताः । एषः । आत्मा । अपहतपाप्मा । विजरः । विमृत्युः । विशोकः । विजिघत्सः । अपिपासः । सत्यकामः । सत्यसङ्कल्पः । यथा । हि । एव । इह । प्रजाः । अन्वाविशन्ति । यथा । अनुशासनम् । यम् । यम् । अन्तम् । अभिकामाः । भवन्ति । यम् । जनपदम् । यम् । क्षेत्रभागम् । तम् । तम् । एव । उपजीवन्ति ॥ ५ ॥

भाष्यम्—स ब्रूयादिति । स उपदेष्टाचार्यः संदिग्धान् शिष्यान्प्रति पुनरपि ब्रूयात्। अस्य शरीरस्य जरया वार्द्धक्येन एतत्ब्रह्मपुरं न जीर्यति न जीर्णतां प्राप्नोति। अस्य शरीरस्य बधेन शस्त्रादिघातेन एतद्ब्रह्मपुरं न हन्यते न विनश्यति । यतः । एतद्ब्रह्मपुरं सत्यमविनश्वरं वर्त्तते । अस्मिन् सर्वे कामाः समाहिताः सन्ति । अधुना यस्य ब्रह्मण इयं पूरस्ति स कीदृगित्युच्यते । एष आत्मा परमात्मा । अपहतपाप्मा । अपहतो व्यपगतः पाप्मा पापं यस्मात् । सः । पुनः । विजरः । विगता जरा वार्द्धक्यं यस्मात् स विजरः । पुनः। विमृत्युः । विगतमृत्युः । विशोकः । विगतशोकः। विजिघत्सः। अत्तुमिच्छा जिघ-

त्सा विगता जिघत्सा भोजनेच्छा यस्य स विजिघत्सः । पुनः । अपिपासः पातुमिच्छा पिपासा । न विद्यते पिपासा पानेच्छा यस्य सः । पुनः । सत्यकामः । सत्या अविनश्वरा अपरिणामिनः कामा यस्य स सत्यकामः । सत्यसङ्कल्पः । सत्याः सङ्कल्पा यस्य सः। ईदृग् लक्षणोपेत आत्मा अस्मिन् ब्रह्मपुरे निवसति । सोऽन्वेष्टव्यः । स विजिज्ञासितव्यः । अत्र दृष्टान्तमाह । यथाह्येव हि यतः । यथैव इहास्मिन् लोके प्रजा राजानुशासनवर्तिन्यः प्रजाः। यथानुशासनम् । अनुशासनमतिक्रम्य यथानुशासनं नृपाज्ञानुसारेण अन्वाविशन्ति अनुवर्त्तन्ते । यंयम् अन्तं प्रदेशं अभिकामा अधिकामाः । यस्य यस्य प्रदेशस्य प्रार्थिन्योभवन्ति तथा च यं जनपदं यं क्षेत्रभागञ्च अभिकामाः प्रार्थिन्योभवन्ति तं तमेव अन्तादिं नृपानुग्रहेण प्राप्योपजीवन्ति जीविकां निर्वाहयन्ति ॥ ५ ॥

अनुवाद—वह उपदेष्टा शिक्षक उन सन्दिग्ध शिष्यों से कहे कि इस ( शरीर ) की जरावस्था से यह जीर्ण नहीं होता इस के बध से इस का हनन नहीं होता । यह ब्रह्मपुर सत्य है इस में सब काम समाहित हैं । यह आत्मा पाप रहित, जरा रहित, विमृत्यु, विशोक, अशनेच्छा रहित, पिपासा रहित, सत्य काम और सत्य सङ्कल्प है जैसे ही यहां जो प्रजाएं राजा की आज्ञानुसार वर्त्तने वाली हैं वे जिस२ प्रदेश जिस जनपद और जिस क्षेत्र भाग की कामनाएं करती हैं उस उसी को पाकर जीविका निर्वाह करती हैं ॥ ५ ॥

पदार्थः-( सः ) वह उपदेष्टा शिक्षक ( ब्रूयात् ) उन संदिग्ध शिष्यों से कहे कि ( अस्य ) इस शरीर की ( जरया ) वृद्धावस्था से ( एतत् ) यह ब्रह्मपुर अर्थात् ब्रह्म ( न+जीर्यति ) जीर्ण नहीं होता ( अस्य बधेन ) इस के बध से ( न+हन्यते ) यह हत नहीं होता क्योंकि ( एतद्+ब्रह्मपुरम् ) यह ब्रह्मपुर=ब्रह्म ( सत्यम् ) सत्य अविनश्वर है ( अस्मिन् ) इस ब्रह्मपुर में ( कामाः ) कामनाएं ( समाहिताः ) सम्यक् प्रकार स्थित हैं । आगे यह कहा जाता है कि जो इस ब्रह्मपुर में निवास करता है वह कैसा है ( एषः ) यह अन्तराकाशाख्य ब्रह्म (आत्मा) सर्व व्यापक है ( अपहतपाप्मा ) अपहत=विनष्ट व्यपगत है पाप जिस का अर्थात् विशुद्ध ( विजरः ) जरा अवस्था रहित ( विमृत्युः ) मृत्युरहित ( विशोकः ) जिस को शोक न हो ( विजिघत्सः ) जिस को खाने की इच्छा न हो ( अपिपासः ) जिस को पीने की इच्छा न हो ( सत्यकामः ) और जिस की कामनाएं कभी व्यर्थ न हों ( सत्यसङ्कल्पः ) जिस के सङ्कल्प भी सत्य ही हों ऐसा जो ब्रह्म है वही अन्वेष्टव्य और विजिज्ञासनीय है । आगे ज्ञाता और अ-

ज्ञाता के फल का कथन होता है ( इह ) इस लोक में ( यथा+हि+एव ) जैसे ही ( प्रजाः ) जो प्रजाएं ( यथानुशासनम् ) राजा की आज्ञानुकूल ( अन्वाविशन्ति ) चलनेवाली हैं वे प्रजाएं ( यम्+यम् ) जिस२ (अन्तम्) प्रदेश की (यं+जनपदम् ) जिस२ जनपद की ( यम्+क्षेत्रभागम् ) जिस २ क्षेत्रभाग की (अभिकामाः) कामना करने वाली ( भवन्ति ) होती हैं ( तम्+तमेव+उपजीवन्ति ) उसी२ प्रदेशादि को राजा की कृपा से पाकर जीविका निर्वाह करती हैं ॥ ५ ॥

**तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इहात्मानमननुविद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳस्तेषाꣳसर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳस्तेषाꣳसर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥**

तद् । यथा । इह । कर्मजितः । लोकः । क्षीयते । एवम् । एव । अमुत्र । पुण्यजितः । लोकः । क्षीयते । तद् । ये । इह । आत्मानम् । अननुविद्य । व्रजन्ति । एतान् । च । सत्यान् । कामान् । तेषाम् । सर्वेषु । लोकेषु । अकामचारः । भवति । अथ । ये । इह । आत्मानम् । अनुविद्य । व्रजन्ति । एतान् । च । सत्यान् । कामान् । तेषाम् । सर्वेषु । लोकेषु । कामचारः । भवति ॥ ६ ॥

भाष्यम्—तदिति । पूर्वोक्तलक्षणं ब्रह्माचार्येभ्यः शास्त्रमननादिभ्यश्च ज्ञातव्यमित्यनया बुद्धयावेदितव्यम् । स्वाराज्यादिककामनया न ब्रह्मज्ञाने प्रवर्तितव्यम् । कथम् । सर्वेषां विनश्वरत्वात् । स्वयमेवोपनिषद् काम्योपासने दोषमाह दृष्टान्तेन । तत्तत्र तस्मिन् विषये इहास्मिंल्लोके तासांनृपाज्ञानुसारिणीनां प्रजानाम् । कर्मजितः । कर्मभिः सेवादिरूपैर्व्यापारैर्जितः प्राप्तः । उपार्जितः । लोकः । सेवादिसंतुष्टेन नृपेण प्रदत्तोजनपदक्षेत्रभागादिरूपोभागो लोकः । गजतुरङ्ग हिरण्यरजतवित्तादिपुरस्कारोऽपि भोग्यहेतुत्वाल्लोकः । यथा येनप्रकारेण । क्षीयते गच्छत्सु कालेषु भोग्येन इतरैर्बहुभिःप्रकारैर्वा विनश्यति । एवमेव । यथायं दृष्टान्तस्तथैव । पुण्यजितःपुण्यैरग्निहोत्रपरोपकारदानादिभिर्धर्मैःजितः । उपार्जितः । लोकः । भोगसाधनम् । कालेनक्षीयते । क्षयं प्राप्नोति । अग्रे विद्यावतामविद्यावताञ्च भोगविषयं दर्शयति । तत् तत्र । इह कर्मक्षेत्रे । ये । अविद्वांसः ।

आत्मानम् परमात्मानम् । अननुविद्य अज्ञात्वा । असाक्षात्कृत्वा । एतान् यथोक्तान् सत्यान् कामान् सत्यसंकल्पजनितान् स्वात्मस्थान् कामांश्च । अननुविद्य । अस्मात् स्थानाद् । व्रजन्ति । गच्छन्ति । तेषामविद्यावतां पुरुषाणां । सर्वेषु लोकेषु अकामचारो भवति । प्रतिहतगतिर्भवति । इह चारश्चरणम् । कामं यथेच्छं चारः । कामचारः । न कामचारोऽकामचारः । अकामचारिता । अस्वतन्त्रता इति यावत् । अविदुषां न सर्वत्र सर्वे भोगाः सत्यसंकल्पान् समुत्तिष्ठन्तीत्यर्थः । तद्विपरीतं विदुषां विषयं दर्शयति । अथ ये विद्यावन्तः । इह कर्मभूमौ । आत्मानं परमात्मानं अनुविद्य । सर्वेषुलोकेषु स्थितम् । यमनियमादि योगशास्त्र प्रदर्शितमार्गाभ्यासादनन्तरम् । आत्मनि । आत्मानं साक्षात्कृत्य । एतांश्च वक्ष्यमाणान् सत्यानवश्यंभाविनः कामांश्चविदित्वा इतो व्रजन्ति । तेषां सर्वेषु लोकेषु कामचारो भवति । सर्वेषुभोग्येषु स्वतन्त्रता जायते तेषां सत्यसंकल्पादेव सर्वे भोगा उत्तिष्ठन्तीत्यर्थः ॥ ६ ॥

इति प्रथमखण्डस्य संस्कृतभाष्यं समाप्तम् ॥

अनुवाद—वहां जैसे इस लोकमें कर्मों से प्राप्त ( उपार्जित ) लोक ( भोग साधन) क्षयकोप्राप्त होताहै । वैसाही उसलोकमें पुण्योपार्जितलोक (भोगसाधन) क्षयको प्राप्त होता है । वहां जो इस लोकमें आत्माको और इन सत्यकामों को न जानकर यहां से प्रस्थान करते हैं । उन को सब लोकों में अकामचार ( अस्वतन्त्रता ) होती है और जो यहां आत्माको और इन सत्यकामों को जानकर यहां से प्रस्थान करते हैं उनका सब लोकों में कामचार ( स्वतन्त्रता ) होती है ॥ ६ ॥

पदार्थः—आचार्य और शास्त्र के मननादिद्वारा पूर्वोक्त लक्षण ब्रह्म ज्ञातव्य है उस बुद्धि से जाने किन्तु सुखादि कामना की इच्छा से ब्रह्म ज्ञान में प्रवृत्त नहीं होनी चाहिये क्योंकि सब पदार्थ विनश्वर हैं और स्वयं उपनिषद् भी दृष्टान्त से काम्योपासना में दोष सूचित करती है ( तत् ) उस विषय में दृष्टान्त कहा जाता है ( यथा ) जैसे ( इह ) इस लोक में राजा की आज्ञा के अनुसार चलनेवाली प्रजाओं का ( कर्मजितः ) सेवादि रूप व्यापार से उपार्जित ( लोकः ) सेवादि से सन्तुष्ट नृप प्रदत्त जनपद क्षेत्रभागादि रूपभाग, गज तुरङ्ग हिरण्य रजत वित्तादि पुरस्कार भी यहां भोग्य होने के कारण लोक कहलाता है । अर्थात् नृप प्रदत्त भोग्य पदार्थ ( क्षीयते ) कुछ दिनों के अनन्तर भोग्य से अथवा अन्य प्रकार से क्षीण होजाता (एवमेव) इसी दृष्टान्त के समान ( अमुत्र ) परलोक में भी ( पुण्यजितः ) पुण्य अग्निहोत्र परोपकार दानादि धर्मों से जित=उपार्जित (लोकः) भोगसाधन क्षीण होता है । इसहेतु ब्रह्मकी उपासना निष्काम करे आगे विद्यावान् और अविद्यावान् के भोग विषय को महर्षि दिखलाते हैं

( तत् ) उस विषय में यह कहा जाता है (इह) इस कर्मभूमि में (ये) जो अविद्वान् पुरुष (आत्मानम्)परमात्मा को (अननुविद्य) अच्छे प्रकार न जान (च) और (एतान्+सत्यान्+कामान् ) इन सत्यकामनाओं को न जान (व्रजन्ति )इस स्थान से प्रस्थान करते हैं ( तेषाम् ) उन अज्ञानी पुरुषों को ( सर्वेषु+लोकेषु ) सब लोकों में ( अकामचारः भवति ) स्वच्छन्दगमन नहीं होता है ( अथ ) और ( ये ) जो विद्यावान् पुरुष ( इह ) इस कर्म भूमि में (आत्मानम्) आत्मा को (एतान्+च+सत्यान्+कामान्) इन और सत्य कामनाओं को ( अनुविद्य ) जानकर ( व्रजन्ति ) यहां से प्रस्थान करते हैं (तेषाम् ) उन विद्वानों को ( सर्वेषु+लोकेषु ) सर्व लोकलोकान्तरों में ( कामचारोः+भवति ) स्वच्छन्द गमन होता है । अर्थात् अस्वतन्त्र प्रजा जैसे राजनियम बद्धहोकर स्वच्छन्दतया कोई काम नहीं करसकती वैसे ही आत्मानभिज्ञ पुरुष स्वतन्त्रता को कभी प्राप्त नहीं होते और जैसे सम्राट् स्वतन्त्रता पूर्वक सर्वत्र भ्रमण कर सकता सकलकार्य को स्वतन्त्रतया कर सकता है । तद्वत् आत्मज्ञानी मुक्त जीव सर्वत्र भ्रमण कर सकता है।६।

इति प्रथमखण्डस्य भाषाभाष्यं समाप्तम् ॥ १ ॥

## अथ द्वितीयः खण्डः

**स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ॥ १ ॥**

सः । यदि । पितृलोककामः । भवति । सङ्कल्पाद् । एव । अस्य । पितरः । समुत्तिष्ठन्ति । तेन । पितृलोकेन । सम्पन्नः । महीयते ॥ १ ॥

भाष्यम्—स यदीति । कथं विदुषांसर्वेषु लोकेषु कामचारो भवतीति विस्तरेण वक्तुमुपक्रमते । स परित्यक्तशरीरो मुक्तः पुरुषः । यदि पितृलोककामोभवति । पितरो जनकास्त एव आह्लादहेतुत्वेन भोग्यत्वाल्लोका उच्यन्ते । पितर एव लोकाःपितृलोकाः । तेषु कामो मनोरथो यस्य सः । अयं भावः । पितृदर्शनाभिलाषी यदि स भवति । तर्हि । अस्य शुद्धसत्त्वस्य योगिनः । संकल्पादेव सङ्कल्पे एव पितरः । अनेक प्राक्तन जन्म सम्बन्धिनोऽपि जन्मदातारः । समुत्तिष्ठन्ति सम्यग् उपस्थिता भवन्ति । प्रत्यक्षवद् भासन्ते तस्य योगिनोऽन्तःकरणे । तेन पितृलोकेन पितृदर्शनजनित भोगेन । सम्पन्नः समृद्धस्सन् । महीयते पूज्यते वर्द्धते । स्वसङ्कल्पस्यमहत्त्वमनुभवन् आत्मानं बहुमन्यत इत्यर्थः ॥१ ॥

अनुवाद–वह योगी यदि पितृलोकाभिलाषी होता है तो उसके सङ्कल्प से ही पितर उपस्थित होते हैं उस पितृलोक से सम्पन्न होकर वह पूजित होता है अर्थात् अपने महत्त्व का अनुभव करता है ॥ १ ॥

पदार्थः-( सः ) वह योगी ( यदि ) यदि ( पितृलोककामः ) पितरों के दर्शन की कामनावाला( भवति) होता है तो ( अस्य ) इस योगी के (सङ्कल्पात्+एव) सङ्कल्पमात्र से ही ( पितरः+समुत्तिष्ठन्ति ) पितरगण सम्यक् उपस्थित होते हैं (तेन+पितृलोकेन ) उन पितरों से ( सम्पन्नः ) समृद्ध होकर ( महीयते ) अपने महिमा का अनुभव करता है। भाव इसका यह है कि वह मुक्त योगी यदि समाधि दशा में ज्ञानी पुरुषों के दर्शन की अभिलाषा करे तो उस योगी के सङ्कल्प से ही विज्ञानी उसके मन में उपस्थित होते हैं। पिता आदि के नाम के कीर्तन से केवल प्रिय वस्तु सूचित करने का अभिप्राय है । परन्तु ऐसे अनेक ऐश्वर्य उन योगियों को सहजतया प्राप्त होते रहते हैं ॥१॥

**अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति। तेन मातृलोकेन सम्पन्नो महीयते ॥ २ ॥**

अथ । यदि । मातृलोककामः । भवति । सङ्कल्पाद् । एव । अस्य । मातरः । समुत्तिष्ठन्ति । तेन । मातृलोकेन । सम्पन्नः । महीयते ॥ २ ॥

भाष्यम्–अथेति । सः । यदि मातृलोककामो भवति । मातर एव लोका मातृलोकास्तेषुकामो यस्य सः । शेषंपूर्ववत् ॥ २ ॥

अनुवाद—वह यदि मातृदर्शनाभिलाषी होता है तो इसके सङ्कल्पमात्र से ही माताएं सम्यक् उपस्थित होती हैं उस मातृलोक से सम्पन्न होकर अपने महिमा को अनुभव करता है ॥ २ ॥

पदार्थः–( अथ ) और वह योगी (यदि) यदि (मातृलोककामः) माताओं के दर्शन की कामना वाला ( भवति ) होता है तो ( अस्य ) इस योगी के ( सङ्कल्पात्+एव ) सङ्कल्पसे ही ( मातरः+समुत्तिष्ठन्ति ) माताएं उपस्थित होती हैं (तेन+मातृलोकेन) उन माताओं से ( सम्पन्नः ) समृद्ध होकर ( महीयते ) अपने महिमा का अनुभव करत है ॥ २ ॥

**अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवा-**

**स्य भ्रातरः समुत्तिष्ठन्ति । तेन भ्रातृलोकेन सम्पन्नो महीयते ॥ ३ ॥**

अथ । यदि । भ्रातृलोककामः । भवति । सङ्कल्पाद् । एव । अस्य । भ्रातरः । समुत्तिष्ठन्ति । तेन । भ्रातृलोकेन । सम्पन्नः । महीयते ॥ ३ ॥

भाष्यम्—अथ यदिति । स यदि भ्रातृलोककामो भवति । भ्रातर एव लोका भ्रातृलोकास्तेषु कामो यस्य सः । शेषंपूर्ववत् ॥ ३ ॥

अनुवाद—वह यदि भ्रातृदर्शनाभिलाषी होता है तो इसके सङ्कल्पमात्र से ही भ्राता उपस्थित होते हैं उस भ्रातृलोक से सम्पन्न होकर अपने महिमा को अनुभव करता है ॥ ३ ॥

पदार्थः–( अथ ) और वह योगी (यदि) यदि ( भ्रातृलोककामः ) भ्राता के दर्शन की कामना वाला ( भवति ) होता है तो ( अस्य ) इस योगी के ( सङ्कल्पात्+एव ) सङ्कल्प से ही ( भ्रातरः+समुत्तिष्ठन्ति ) भ्राता उपस्थित होते हैं (तेन+भ्रातृलोकेन) उन भ्राताओं से (सम्पन्नः) समृद्ध होकर (महीयते) अपने महिमाका अनुभव करता है ॥३॥

**अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ॥ ४ ॥**

अथ । यदि । स्वसृलोककामः । भवति । सङ्कल्पाद् । एव । अस्य । स्वसारः । समुत्तिष्ठन्ति । तेन । स्वसृलोकेन । सम्पन्नः । महीयते ॥ ४ ॥

भाष्यम्—अथेति । स यदि स्वसृलोककामो भवति । स्वसार एव लोकाः स्वसृलोकास्तेषु कामो यस्य सः । शेषंपूर्ववत् ॥ ४ ॥

अनुवाद–वह यदि स्वसृ दर्शनाभिलाषी होता है तो इसके सङ्कल्प से ही स्वसाएं अर्थात् बहिनें उपस्थित होती हैं । उस स्वसृ लोक से सम्पन्न होकर वह अपने महिमा का अनुभव करता है ॥ ४ ॥

पदार्थः—( अथ ) और वह योगी ( यदि ) यदि (स्वसृलोककामः) बहिनों के दर्शन की कामना वाला ( भवति ) होता है तो (अस्य) इस योगी के (सङ्कल्पात्+एव) सङ्कल्पसे ही (स्वसारः+समुत्तिष्ठन्ति) बहिनें उपस्थित होती हैं ( तेन+स्वसृलोकेन ) उस स्वसृलोकसे ( सम्पन्नः ) समृद्ध होकर ( महीयते ) पूज्य होता है यद्वा अपने महिमा का अनुभव करता है ॥ ४ ॥

**अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायःसमुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते ॥ ५ ॥**

अथ । यदि । सखिलोककामः । भवति । सङ्कल्पात् । एव । अस्य । सखायः । समुत्तिष्ठन्ति । तेन । सखिलोकेन । सम्पन्नः । महीयते ॥ ५ ॥

भाष्यम्—अथेति । स यदि सखिलोककामो भवति । सखाय एव लोकाः सखिलोकास्तेषुकामो यस्य सः । शेषं पूर्ववत् ॥ ५ ॥

अनुवाद-वह यदि सखिदर्शनाभिलाषी होता है तो इसके सङ्कल्प से ही सखा उपस्थित होते हैं । उस सखिलोक से सम्पन्न होकर वह अपने महिमा को अनुभव करता है ॥ ५ ॥

पदार्थः—(अथ) और वह योगी (यदि) यदि ( सखिलोककामः ) सखाओं के दर्शन की कामनावाला ( भवति ) होता है तो (अस्य) इस योगी के ( सङ्कल्पात्+एव ) सङ्कल्पसे ही (सखायः+समुत्तिष्ठन्ति) सखा उपस्थित होते हैं (तेन+सखिलोकेन) उस सखिलोकसे ( सम्पन्नः ) समृद्ध होकर ( महीयते ) पूज्य होता है यद्वा अपने महिमा का अनुभव करता है ॥ ५ ॥

**अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ॥ ६ ॥**

अथ । यदि । गन्धमाल्यलोककामः । भवति । सङ्कल्पात् । एव । अस्य । गन्धमाल्ये । समुत्तिष्ठतः । तेन । गन्धमाल्यलोकेन । सम्पन्नः । महीयते ॥ ६ ॥

भाष्यम्—अथेति । स यदि गन्धमाल्यलोककामोभवति । गन्धश्चमाल्यञ्च गन्धमाल्ये गन्धमाल्ये एव लोकौ तयोः कामो यस्य सः । शेषं पूर्ववत् ॥ ६ ॥

अनुवाद—वह यदि गन्धमाल्यलोक की कामनावाला हो तो इसके सङ्कल्प से ही गन्ध और माल्य उपस्थित होते हैं । उन गन्धमाल्यों से सम्पन्न होकर वह अपने महिमा का अनुभव करता है ॥ ६ ॥

पदार्थः—(अथ) और वह योगी (यदि) यदि ( गन्धमाल्यलोककामः ) गन्ध और माला की कामना वाला ( भवति ) होता है तो ( अस्य ) इस योगी के (सङ्कल्पात्+

अनुवाद—वह योगी जिस२ प्रदेश की प्राप्ति के कामना वाला होता है और इन सबों के अतिरिक्त जो जो कामनाएं करता है। वह२सब ही इस के सङ्कल्प से ही दर्शन देता है । उस से सम्पन्न हो अपने महिमा का अनुभव करता है ॥ १० ॥

पदार्थः—(अथ)और वह योगी ( यम्+यम् ) जिस२ ( अन्तम् ) प्रदेश का (अभिकामः) कामना वाला ( भवति )होता है ( यम् ) और उन पूर्वोक्त कामनाओं के अतिरिक्त जिसजिस कामना को करता है ( सः ) वह प्रदेश और वह कामना ( अस्य ) इस योगी के ( सङ्कल्पात्+एव ) सङ्कल्प से ही ( समुत्तिष्ठति ) दर्शन देती है (तेन+सम्पन्नः) उस से समृद्ध होकर ( महीयते ) अपने महिमा का अनुभव करता है ॥ १० ॥

इति द्वितीयखण्डस्य भाषाभाष्यं समाप्तम् ॥ २ ॥

अथ तृतीयः खण्डः

## त इमे सत्याः कामा अनृतापिधानास्तेषाᳬसत्यानाᳬसतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥

ते । इमे । सत्याः । कामाः । अनृतापिधानाः । तेषाम् । सत्यानाम् । सताम् । अनृतम् । अपिधानम् । यः । यः । हि । अस्य । इतः । प्रैति । न । तम् । इह । दर्शनाय । लभते ॥ १ ॥

भाष्यम्—त इति । हृदयपुण्डरीके ब्रह्मणः स्थितिः । तस्मिन् द्यावापृथिव्यादीनां स्थितिरित्युक्तं प्रथमखण्डे । योह्युपासक एतद्ब्रह्म हृदयस्थं विजानाति तस्य सर्वे कामा हृदय एव प्राप्यन्ते । इममेव विषयं द्वितीयखण्डे "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति । तेन पितृलोकेन सम्पन्नो महीयते" इत्यादि वाक्यैर्विस्तरेणा दर्शयत् । अत्र केचिच्छंकन्ते यदि हृदये सकलकामा लभ्येरन् तर्हि कथन्न सर्वेषां ते प्राप्ता भवन्ति । सर्वेषां हृदि हि ब्रह्मसमत्वात् । तेन । एवंविदो यथा प्राप्नुवन्ति । अनेवंविदोऽपि तथैव प्राप्नुयुः । इत्येवं प्रकारकविविधशङ्काः प्रत्याख्यातुं तृतीयखण्डमारभन्ते भगवन्त ऋषयः । अहो कष्टमिदं वर्तते । यत्स्वात्मस्थाः शक्यप्राप्ता अपि सत्यकामा जना न प्राप्नुवन्ति । तथाहि । यद्यपि आत्मस्थाः सर्वे कामाः सत्या एव सन्ति । तथापि इहासत्या इव दृश्यन्ते । किं कारणं तस्येत्युच्यते । ते पूर्वोक्ता इमे आत्मस्थाः । कामा मनोरथाः सत्याः सर्वदा स्थितिशीला नित्या अपि जनैर्न प्राप्यन्ते कुतः ? अनृतापिधाना अनृतं कुसंस्कारजनिता अविद्या । अपिधानमाच्छादनं येषां

ते अनृतापिधानाः असत्येनाच्छादिताः । बाह्यविषयेषु स्त्र्यन्नभोजनादिषु तृष्णा तन्निमित्तं च स्वेच्छाप्रचारत्वं मिथ्याज्ञाननिमित्तत्वादनृतमित्युच्यते तन्निमित्ता सत्यानां कामानां हृदयस्थानामप्राप्तिर्भवति । इदमेवापिधानमतोजनास्तांस्तान् कामान् हृदयस्थानपि न प्राप्नुवन्ति । स्वयमेवर्षिः "अनृतापिधाना" इत्यस्य व्याख्यानं वेदयत्युत्तरपदैः । सतामात्मनि वर्तमानानाम् तेषां सत्यानां तेषां नित्यानां कामानामनृतं मिथ्याज्ञानम् । अपिधानमाच्छादनमप्राप्तिरित्यर्थः । अपिधानमिवापिधानम् । अस्य अनृतापिधानैः सत्यैः कामैर्युक्तस्य पुरुषस्य । इतोऽस्मात् स्थानात् यो यो बन्धुरिष्टः माता पिता अन्यः प्रियतमः कश्चिद्वा । प्रैति देहं परित्यज्य लोकान्तरं गच्छति। तमिष्टं पुत्रं भ्रातरं मातरं वा स्व हृदयाकाशे विद्यमानमपि इहास्मिन् बाह्ये लोके दर्शनाय पुनर्द्रष्टुमिच्छन्नपि न लभते । तस्य २ दर्शनं न प्राप्नोति । अनृतापिधानत्वात् । इति त्वविदुषां फलं प्रदर्शितमग्रे विद्वत्फलं दर्शयिष्यति ॥ १ ॥

अनुवाद—वे ये काम सत्य होने परभी अनृत से ढके हुए हैं । अर्थात् ( आत्मामें ) विद्यमान इन सत्यकामों का अनृत ( अविद्या ) अपिधान ( ढकना ) है इसहेतु इस ( पुरुष ) का जो जो यहां से ( शरीर त्यागकर ) परलोक को जाता है । यहां उसको दर्शन के लिये नहीं पाता है ॥ १ ॥

पदार्थः—यद्यपि आत्मस्थ सकल काम सत्य ही हैं तथापि ये कहीं २ अनृत देख पड़ते हैं इसका क्या कारण है सो आगे दर्शाया जाता है ( ते ) वे सर्व आत्मस्थ (इमे) ये ( कामाः ) मनोरथ ( सत्याः ) सत्य ही हैं तथापि सब को प्राप्त नहीं होते । क्यों ? सो आगे कहते हैं । ( अनृतापिधानाः ) अनृतरूप ढकने से ढके हुए हैं इसीलिये हृदय में सब काम रहते हुए भी सब मनुष्य नहीं प्राप्त करते । "अनृतापिधान" शब्द का स्वयं अर्थ ऋषि करते हैं ( सताम् ) सब के हृदयों में वर्त्तमान ( तेषाम्+सत्यानाम् ) उन सत्यकामनाओं का ( अनृतम् ) कुसंस्कार जनित अविद्या ही ( अपिधानम् ) आच्छादन=ढकना है इसी हेतु वे सत्यकाम सबों को प्राप्त नहीं होते । किस प्रकार अनृतापिधान निमित्त उन कामनाओं का लाभ नहीं होता सो आगे कहते हैं ( हि ) उसी को दिखलाते हैं ( अस्य ) अनृतापिधान सत्य कामों से युक्त इस पुरुष का (इतः) इस लोक से (यः+यः) जो जो पुत्र भ्राता पिता माता इष्टबन्धु बांधव ( प्रैति ) प्राण त्याग कर लोकांतर में जाता है ( तम् ) उस उस गये हुए पुरुष को हृदयाकाश में वर्त्तमान रहने पर भी (दर्शनाय ) दर्शनार्थ इच्छा करता हुआ भी उनका दर्शन ( न ) नहीं ( लभते ) पाता है ॥ १ ॥

अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्रगत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्य्युपरि सञ्चरन्तो न विन्देयुरेव मेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥

अथ । ये । च । अस्य । इह । जीवाः । ये । च । प्रेताः । यत् । च । अन्यत् । इच्छन् । न । लभते । सर्वम् । तत् । अत्र । गत्वा । विन्दते । अत्र । हि। अस्य । एते । सत्याः । कामाः । अनृतापिधानाः । तद् । यथा । अपि । हिरण्यनिधिम् । निहितम् । अक्षेत्रज्ञाः । उपरि । उपरि । सञ्चरन्तः । न । विन्देयुः । एवम् । एव । इमाः । सर्वाः । प्रजाः । अहः । अहः । गच्छन्त्यः । एतम् । ब्रह्मलोकम् । न । विन्दन्ति । अनृतेन । हि । प्रत्यूढाः ॥ २ ॥

भाष्यम्—अथेति । हृदयस्थसत्यकामानां विज्ञातुः फलं दर्शयति। अथ पुनः । अस्य विद्यावतः सम्बन्धिनां मातृपितृपुत्रेष्टप्रभृतीनां जनानां मध्ये । ये च ये जनाः । इह अस्मिन् लोके । जीवा जीवन्तीति जीवा जीवन्तः पुरुषाः । येच प्रेताः येच पञ्चत्वं गताः प्र= प्रकृष्टं दूरं स्वनिकटाद्दूरम् । इता गता इति प्रेताः प्रपूर्वकादितेःक्तः । प्रयन्ति इमं देहं त्यक्त्वा प्रव्रजन्तीति प्रेताः । मृता इत्यर्थः । यच्चान्यद् पूर्वोक्तादन्यदपि वस्त्रान्नपानाद्यभीष्टं वस्तु। इच्छन् तेषां दर्शनं कामयमानोऽपि । इह वाह्ये लोके न लभते दर्शनं न प्राप्नोति । तत्सर्वं तदखिलमिष्टं पितृमात्रादिकंवस्तु । अत्र दहराकाशाख्ये ब्रह्मणि गत्वा निकटं प्राप्य विन्दते । यथोक्तेन विधिना लभते । हि यतः अत्र अस्मिन् हार्दाकाशे । अस्य पुरुषस्य एते सत्याः कामा अनृतापिधानाः सन्ति । तानेव ज्ञानाऽऽलोकेन अनृतापिधानमन्धकारं दूरीकृत्य ज्ञानिनः प्राप्नुवन्ति । कथमिव तदन्याय इति दृष्टान्तेनाह । तत्तत्र तस्मिन् विषये । यथा अक्षेत्रज्ञाः न क्षेत्रं जानन्तीति अक्षेत्रज्ञाः स्वकीयस्यैव क्षेत्रस्य अज्ञाः। उपर्य्युपरि संचरन्तः अपि क्षेत्रस्य उपर्य्युपरि कर्षणादिव्यापारं कुर्वन्तोऽपि पुरुषाः । निहितं स्वक्षेत्रे अन्तर्हितम्। हिरण्यनिधिं हिरण्यमेव निधिः हिरण्योपलक्षितपृथिवीस्थ विविधाऽऽकरमित्यर्थः । न विन्देयुः न लभेरन् नाप्नुवन्तीत्यर्थः । एवमेव । यथायं दृष्टान्तस्तथैव इमा अविद्यावत्यः सर्वाः अखिलाः प्रजाजनाः । अहरहः प्रत्यहम् । एतं सर्वत्र

विद्यमानं ब्रह्मलोकम् ब्रह्मैवलोकः ब्रह्मलोकस्तम् । गच्छन्त्यो लभमानाः । ब्रह्मणः सर्वत्र विद्यमानत्वात् सर्वयोगोऽस्तीत्यभिप्रायः । इत्थं प्रत्यहं ब्रह्मयोगं लभमाना अपि इमा जना एतं ब्रह्मलोकं न विन्दन्ति । न प्राप्नुवन्ति । हि यस्मात्कारणात् । अनृतेन मिथ्याज्ञानेन हार्दं ब्रह्माऽजानन्त्यः प्रजाः प्रत्यूढाः हृताः सन्ति । अविद्यादिदोषैर्बहिरपकृष्टाः सन्ति । अतः कष्टमिदं वर्तते जन्तूनां यत्स्वायत्तमपि ब्रह्म न लभ्यत इत्यभिप्रायः ॥ २ ॥

अनुवाद—और इस विद्वान् के सम्बन्धिक जो यहां जीवित और जो मृत होगये हैं। और जो कुछ अन्य वस्तु प्राप्त करने की अभीष्ट है इन सबों को प्राप्ति की इच्छा करता हुआ भी जिनको वह विद्वान् इस बाह्य जगत् में नहीं पाता है । उस सबको यहां ( दहराकाशाख्य ब्रह्म के निकट ) जाकर पाता है क्योंकि इस के ये सब सत्यकाम इस ब्रह्म में वर्त्तमान हैं परन्तु अनृतापिधान होने से प्राप्त नहीं होते ( इस विषय में दृष्टान्त कहा जाता है ) जैसे अक्षेत्रज्ञ पुरुष, खेतके ऊपर २ जोतना बोना आदि व्यापार करते हुए भी अपने क्षेत्र में निहित हिरण्य कोश को नहीं पाते हैं । इसी प्रकार ये सब प्राणी दिन २ ब्रह्म के निकट जाते हुए भी इस ब्रह्म लोक को नहीं पाते हैं । क्योंकि ये असत्य से ( हृत ) आच्छादित हैं ॥ २ ॥

पदार्थः—हृदयस्थ सत्यकामों को जानने वाले का फल कहते हैं ( अथ ) और ( अस्य ) इस विद्यावित् पुरुष के ( ये+च ) जो सम्बन्धिक इष्ट मित्र पुत्र भार्य्या माता पिता आदिक ( इह ) इस लोक में ( जीवाः ) जीते हुए हैं (ये+च) और जो (प्रेताः ) मर गये हैं (यत्+च+अन्यत्) और जो कुछ इन दोनों के अतिरिक्त अन्य पदार्थ हैं उन सबों को ( इच्छन् ) इच्छा करता हुआ भी वह विद्वान् (न+लभते) जिन को इस लोक में नहीं पाता है ( तत्सर्वम् ) उस सब को ( अत्र ) इस हृदय कमलस्थ ब्रह्म के निकट (गत्वा) जाकर अर्थात् हृदयस्थ ब्रह्म के निकटस्थ होकर (विन्दते) पाता है । यदि ब्रह्म सर्व सम्बद्ध है तो सब स्थान सब काल में सबों को सब कामनाएं प्राप्त होनी चाहिये परन्तु सो नहीं होता । इसका कारण आगे कहा जाता है ( हि ) क्योंकि (अत्र) इस ब्रह्म लोक में ( अस्य ) इस विद्वान् पुरुष के ( एते+सत्याः+कामाः ) ये सत्यकामनाएं वर्तमान हैं और जाननेपर प्राप्त करते हैं परन्तु ( अनृतापिधानाः ) वे सत्यकाम अनृत=अविद्यारूप पात्र से ढके हुए हैं यहां पर दृष्टान्त कहाजाता है ( तत् ) इस विषय में ( यथा ) जैसे ( अक्षेत्रज्ञाः ) अपने खेत को अच्छेप्रकार से नहीं जाननेवाले और (उपरि+उपरि+संचरन्तः ) ऊपर २ जोतना बोना आदि व्यापार करतेहुए गृहस्थ ( निहितम् ) अपने खेत के भीतर गड़े हुए (अपि) भी ( हिरण्यनिधिम् ) सुवर्णकोश को

( न+विन्देयुः ) नहीं पाते हैं ( एवमेव ) वैसे ही (इमाः+सर्वाः+प्रजाः) ये सब प्रजाएं ( अहः+अहः ) दिन २ (गच्छन्त्यः) ब्रह्म के समीप जाती हुई भी (एतम्+ब्रह्मलोकम्) इस ब्रह्म के दर्शन को ( न+विन्दन्ति ) नहीं पाती हैं (हि) क्योंकि ये प्राणी (अनृतेन) अविद्या से ( प्रत्यूढाः ) प्रतिहृत ढके हुए हैं ॥ २ ॥

भाष्याशयः–उपासकों के प्रोचनार्थ यह वर्णन है । यदि विचारदृष्टि से देखो तो सर्वव्यापी ब्रह्म से सर्वों का तुल्य रूप से सम्बन्ध है । सम्बन्ध में तो सन्देह नहीं परन्तु अस्मदादिकों को अनुभव नहीं होता । योगियों को होता है । हृदय में ध्यान करने से साधक अन्तर्दृष्टि होना आरम्भ होता है जब उस में दृढ़ता को प्राप्त होता है तब वहां ही सर्वानन्द का अनुभव करता है । यह विषय योगशास्त्र गम्य है । इस हेतु यहां इस विषय का विशेष वर्णन नहीं करते हैं ॥ २ ॥

## स वा एष आत्मा हृदि तस्यैतदेव निरुक्तꣳ हृदयमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति *॥ ३ ॥

सः । वै । एषः । आत्मा । हृदि । तस्य । एतत् । एव । निरुक्तम् । हृदि । अयम् । इति । तस्मात् । हृदयम् । अहः । अहः । वै । एवंवित् । स्वर्गम् । लोकम् । एति ॥ ३ ॥

भाष्यम्–स इति । स वै एष आत्मा परमात्मा हृदि हृदय एव वर्तते । तस्य हृदयस्य । एतदेव निरुक्तं निर्वचनाविद्यते । हृदि अयमात्मा वर्तत इति यस्मात्तस्माद्धृदयम् । हृदयनामनिर्वचनप्रसिद्ध्यापि स्वहृदये आत्मेत्यवगन्तव्यमित्यभिप्रायः । एवंवित् पुरुषः । अहरहर्वै । प्रत्यहमेव स्वर्गं लोकं ब्रह्मलोकम् । एति गच्छति विन्दते । स्वर्गं सुखं सुखधाम ब्रह्मेत्यर्थः ॥ ३ ॥

अनुवाद–निश्चय सो यह आत्मा (परमात्मा) हृदय (हृदय पुण्डरीक) में है । उसका यही निरुक्त (निर्वचन=शब्दार्थ) है । हृदय में यह आत्मा है उस हेतु "हृदयम्" यह नाम है । अतः एवंविद् पुरुष प्रतिदिन ब्रह्म को प्राप्त होता है ॥ ३ ॥

* एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरꣳ"हृदय" मिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद । द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद । यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद । बृ० उ० ५ । ३ । १ ॥

पदार्थः–( वै ) इसमें निश्चय ही है कि ( सः+एषः+आत्मा ) सो यह आत्मा परमात्मा ( हृदि ) हृदय कमल में है। क्योंकि हृदय शब्द का अर्थ भी यही है सो आगे कहते हैं ( तस्य ) उस हृदय का ( एतदेव ) यही ( निरुक्तम् ) निर्वचन=शब्द व्युत्पत्ति अर्थात् शब्दार्थ है क्या है। सो कहते हैं ( हृदि ) हृदय में ( अयम् ) यह परमात्मा जिस कारण है ( तस्मात् ) उस हेतु ( हृदयम् ) हृदयम् कहलाता है। अतः ( एवंविद् ) ऐसा जानने वाला विद्वान् (अहः+अहः+वै) निश्चय दिन दिन ( स्वर्गम्+लोकम् ) सुखधाम ब्रह्मरूप लोक को ( एति ) प्राप्त होता है ॥ ३ ॥

**अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति। तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥**

अथ। यः। एषः। सम्प्रसादः। अस्मात्। शरीरात्। समुत्थाय। परम्। ज्योतिः। उपसम्पद्य। स्वेन। रूपेण। अभिनिष्पद्यते। एषः। आत्मा। इति। ह। उवाच। एतद्। अमृतम्। अभयम्। एतद्। ब्रह्म। इति। तस्य। ह। वै। एतस्य। ब्रह्मणः। नाम। सत्यम्। इति ॥ ४ ॥

भाष्यम्—अथ य इति। सम्प्रसादः। सम्प्रसीदतीति सम्प्रसाद आत्मा। आचार्य्यतः शास्त्रतश्च संस्कृत आत्मा प्रत्यहं सता सम्पन्नः सन् सम्यक् सर्वदा सर्वत्रैव प्रसन्नः सन्नेव तिष्ठति। अतो विदुषामात्मा सम्प्रसाद इत्युच्यते। अथ य एषः सम्प्रसादः। विदुषामात्मा वर्तते। सः। अस्मात् शरीराद्देहात्। समुत्थाय। इदं शरीरं त्यक्त्वा। परंज्योतिः। परमात्माख्यमनुत्तमं प्रकाशम्। उपसम्पद्य। प्राप्य। स्वेन रूपेण सह वर्त्तमानः सन्। अभिनिष्पद्यते। तस्मिन्नेव परमे ब्रह्मणि अभितो विचरति। हे शिष्याः! एष आत्मा परमात्मास्ति। यत्रायंजीवात्मा। परमानन्दं लभते। इति होवाच कारुणिक उपदेष्टाऽऽचार्यः। साधनाय अदृश्यस्य परमात्मनः केनापि नामधेयेन भवितव्यामित्यस्तस्यनामाह। हे शिष्याः! यदेतद्। अमृतम्। विमृत्यु। एतद्। अभयम्। एतद्। ब्रह्मास्ति तस्य ह वै एतस्य ब्रह्मणो नाम। नामधेयम्। सत्यम्। इति वर्त्तते ॥ ४ ॥

अनुवाद–जो यह सम्प्रसाद ( जीवात्मा ) है वह इस शरीर से उठकर परज्योति को प्राप्त हो निजरूप से उसके अन्तर चारों ओर विचरण करता है। हे शिष्यो! यह आत्मा ( परमात्मा ) है जिसमें सम्प्रसाद आनन्द को पाता है। पुनः आचार्य बोले। यह अमृत है, यह अभय है, यह ब्रह्म है। उस इस ब्रह्मका निश्चय सत्य नाम है॥४॥

पदार्थः–( अथ ) अनन्तर ( यः ) जो ( एषः ) यह ( सम्प्रसादः ) जीवात्मा है वह (अस्मात्+शरीरात् ) इस शरीरसे (समुत्थाय) उठकर अर्थात् इस शरीर को त्यागकर (परम्+ज्योतिः) परमात्माख्य प्रकाश के (उपसम्पद्य) सान्निध्य को पा (स्वेन रूपेण) निज-रूप से वर्त्तमान रहता हुआ ( अभिनिष्पद्यते ) उस परमात्मा के अभ्यन्तर अभि=चारों तरफ विचरण करता है। हे शिष्यो (एषः) यही (आत्मा) परमात्मा है ( इति+ह+उवाच) इतना उपदेश दे पुनः आचार्यबोले हे शिष्यो ! ( एतद्+अमृतम् ) यह अमृत है (अ-भयम् ) यह अभय है ( एतद्+ब्रह्म+इति ) यही ब्रह्म है (तस्य+वै+एतस्य ) निश्चय उस इस ब्रह्म का ( नामसत्यम् ) नाम सत्य है ॥ ४ ॥

**तानि हवा एतानि त्रीण्यक्षराणि "सतिय मिति,, तद्यत् "सत्" तदमृतमथ यत् "ति" तन्मर्त्यमथ यत् "यम्" तेनोभे यच्छति । यदनेनोभे यच्छति तस्मा-द्"यम्" अहरहर्वा एवंवित्स्वर्गं लोकमेति * ॥ ५ ॥**

तानि । ह । वै । एतानि । त्रीणि । अक्षराणि । स । ति । यम् । इति । तद् यत् । सत । तद् । अमृतम् । अथ । यद् । ति । तत् । मर्त्यम् । अथ । यत् । यम् । तेन । उभे । यच्छति । यद् । अनेन । उभे । यच्छति । तस्मात् । यम् । अहः । अहः । वै । एवंविद् । स्वर्गम् । लोकम् । एति ॥ ५ ॥

भाष्यम्–तानीति। तानि ह वै एतानि ब्रह्मणो नामाक्षराणि त्रीणि वर्तन्ते। सतियमिति । स-कारस्तकारोयमिति इकारस्तकारे उच्चारणार्थोऽनुबन्धः ह्रस्वेनैवाक्षरेण पुनःप्रतिनिर्देशात्तेषाम्। तत् तत्र । यत् । सत् । सकारः तदमृतम् । स सद्ब्रह्म । अमृतवाचकत्वादमृत एव सका-रस्तकारान्तो निर्दिष्टः। यत् ति तकारः । तन्मर्त्यम् । अथ यद् यमक्षरमस्ति । तेनाक्षरेण अमृतमर्त्याख्ये पूर्वे उभे अक्षरे । यच्छति । यमयति । नियमयति । आत्मना वशीकरो-तीत्यर्थः । यद्यस्मादनेन यमित्येतेनोभे अक्षरे यच्छति। तस्माद् "यम्" निगद्यते। यच्छ-ति नियच्छतीतियम्। एवंविद्। अहरहर्वै प्रत्यहं वै। स्वर्गं लोकमेति ब्रह्म प्राप्नोतीत्यर्थः ॥५॥

इति तृतीय खण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ३ ॥

*.... ते देवाः सत्यमेवोपासते तदेतत्त्र्यक्षरꣳ "सत्य"मिति स इत्येकमक्षरं ती-त्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतम् तदेतदनृतमुभयतः सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैनं विद्वाꣳसमनृतꣳ हिनस्ति ॥ बृ० ५.५।१॥

अनुवाद-ब्रह्म के सत्यनाम के तीन अक्षर हैं। स+त+यम्। जो सत् सकार है वह अमृत है। और जो ति तकार है वह मर्त्य है। जो य यम् है उससे दोनों को अपने वश करता है जिस हेतु य अक्षर से दोनों संयत नियमबद्ध होते हैं। अतः यम् उसका नाम है। एवंविद् पुरुष निश्चय प्रतिदिन स्वर्गलोक (ब्रह्म) को प्राप्त होते हैं ॥५॥

पदार्थः--ब्रह्म के "सत्य" नाम के ( तानि+ह+वै ) अति प्रसिद्ध वे ( एतानि ) ये ( त्रीणि+अक्षराणि ) तीन अक्षर हैं (सतियमिति) स=सकार, ति=तकार और यम् ( तत् ) उन तीनों अक्षरों में ( यद् ) जो ( सद् ) सकार अक्षर है ( तद्+अमृतम् ) वह अमृत है ( अथ ) और ( यत्+ति ) जो ति=तकार अक्षर है ( तत्+मर्त्यम् ) वह मर्त्य है ( अथ ) और ( यद्+यम् ) जो "यम्" अक्षर है ( तेन ) उस यम् अक्षर से ( उभे ) पूर्वोक्त दोनों अक्षरों को ( यच्छति ) यह नाम अपने वश में करता है ( तस्माद् ) उस हेतु ( यम् ) "यम्" कहलाता है। अतः ( एवंविद् ) ऐसा जानने वाला (अहः+अहः+वै) निश्चय प्रतिदिन (स्वर्गम्+लोकम्) स्वर्गलोक को अर्थात् सुख स्वरूप ब्रह्म को ( एति ) प्राप्त होता है ॥ ५ ॥

भाष्याशयः—सत्य-इस शब्द में "स+त+य" ये तीन अक्षर हैं मूल में कहा गया है कि "स" इस अक्षर का अर्थ अमृत, "त" अक्षर का मर्त्य और "य" अक्षर का वश करनेवाला अर्थ है यहां पर ऐसा प्रतीत होता है कि सकार अक्षर से जीवात्मा का और तकार अक्षर से प्रकृति का ग्रहण है यद्यपि प्रकृति भी अमृत स्वरूप है मर्त्य नहीं। तथापि उसके सकल महदादि कार्य परिवर्तनशील और आविर्भाव तिरोभाव को प्राप्त होते रहते हैं और प्रकृतिरूप बीज का ही यह सम्पूर्ण विश्व दीखता है जो अवश्य विनश्वर है। इसहेतु गौण अर्थ में यहां प्रकृति को मर्त्य कहा गया है। जीवात्मा और प्रकृति को जो अपने वश में रखाता है उसे सत्य कहते हैं। "यम्" धातु से "य" सिद्ध हुआ है "स" अमृत जीवात्मा "त" परिवर्तन शील प्रकृति इन दोनों को जो "य" अपने नियम में रखने वाला है उसे "सत्य" कहते हैं। मूल में "सत्" में तकार और "ति" में इकार उच्चारण मात्र के लिये कहा गया है और "यम्" अक्षर में "म" यह विभक्ति का चिह्न है ॥ ५ ॥ इति तृतीयखण्डस्य भाषाभाष्यं समाप्तम् ॥ ३ ॥

## अथ चतुर्थः खण्डः

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न**

शोको न सुकृतं न दुष्कृतम् ॥ १ ॥*

अथ । यः । आत्मा । सः । सेतुः । विधृतिः । एषाम् । लोकानाम् । असम्भेदाय । न । एतम् । सेतुम् । अहोरात्रे । तरतः । न । जरा । न । मृत्युः । न । शोकः । न । सुकृतम् । न । दुष्कृतम् ॥ १ ॥

भाष्यम्—अथेति । अथानन्तरं य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोक इत्येवंविधपूर्वोक्तविशेषणयुक्तो य आत्मास्ति स पुनः कीदृशोऽस्तीति भण्यते । स आत्मा एषां लोकानां सेतुः । सेतुरिव सेतुः । पुनः । विधृतिः । विधरणः धर्ता इत्यर्थः । ईश्वरेणाध्रियमाणमिदं विश्वं विनश्येदत एव स एव ईश्वरः सेतुर्विधृतिश्चैतेषामुच्यते । किमर्थम् । ? एषां लोकानाम् । असम्भेदाय अविदारणाय । अविनाशायेत्यर्थः । किंविशिष्टश्चासौ सेतुरित्याह । एतं सेतुमहोरात्रे न तरतः न प्राप्नुतः । न जरा, न मृत्युः, न शोकः, न सुकृतं धर्मः । न दुष्कृतमधर्मः । एतत्सर्वमेतं सेतुं न तरतीत्यन्वयः ॥ १ ॥

अनुवाद—अनन्तर जो आत्मा ( पूर्वोक्त विशेषण युक्त ) है वह इन लोकलोकान्तरों के अविनाशार्थ सेतु और धर्त्ता है । इस सेतु को अहोरात्र प्राप्त नहीं करते और न जरा, न मृत्यु, न शोक, न सुकृत, न दुष्कृत ॥ १ ॥

पदार्थः–( अथ ) और ( यः+आत्मा ) जो आत्मा पूर्व प्रकरण में अपहतपाप्मा, विजर, विमृत्यु, विशोकादि विशेषण युक्त कहा गया है (सः+आत्मा) वह आत्म शब्द वाच्य ईश्वर ( एषाम्+लोकानाम् ) इन लोकलोकान्तरों के ( असम्भेदाय ) अविनाश के लिये ( सेतुः ) सेतु सदृश है और विधृति विधारण अर्थात् धारण करने वाला है । भाव यह है कि यदि ईश्वर इस जगत् को धारण न करे तो तत्काल यह सम्पूर्ण ब्रह्माण्ड विनष्ट होजाय इस कारण इस संसार की रक्षा के लिये ब्रह्म ही सेतु और विधृति है । आगे सेतु का विशेषण कहते हैं ( एतम्+सेतुम् ) इस सेतु को ( अहोरात्रे ) दिन और रात ( न+तरतः ) प्राप्त नहीं कर सकते । और ( न+जरा ) न जरावस्था (न+मृत्युः ) न मृत्यु ( न+शोकः) न शोक ( न+सुकृतम् ) न धर्म ( न÷दुष्कृतम् ) और न अधर्म इस सेतु को प्राप्त कर सकते ॥ १ ॥

सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकस्तस्माद्वा एतꣳसेतुं तीर्त्वाऽन्धः सन्ननन्धो भ-

* एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेनैत मेव विदित्वा मुनिर्भवति । बृ० ४ । ४ । २२ ॥

वति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति। तस्माद्वा एतꣳसेतुं तीर्त्वापि नक्तमहरेवाभि निष्पद्यते । सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥

सर्वे । पाप्मानः । अतः । निवर्त्तन्ते । अपहतपाप्मा । हि । एषः । ब्रह्मलोकः। तस्माद् । वै । एतम् । सेतुम् । तीर्त्वा । अन्धः । सन् । अनन्धः । भवति । विद्धः । सन् । अविद्धः । भवति । उपतापी । सन् । अनुपतापी । भवति । तस्माद् । वै । एतम् । सेतुम् । तीर्त्वा । अपि । नक्तम् । अहः । एव । अभिनिष्पद्यते । सकृद्विभातः । हि । एव । एषः । ब्रह्मलोकः ॥ २ ॥

भाष्यम्—सर्वे पाप्मान इति । अतोऽस्मादात्मनः । सर्वे पाप्मानः सर्वाणि पापानि निवर्त्तन्ते। हि यतः। एष ब्रह्मलोकः । ब्रह्मैव लोको ब्रह्मलोकः। अपहतपाप्मा अपहताः पाप्मानः पापानि यस्य सः । तस्माद्धेतोः । वै निश्चितम् एतं सेतुं आत्माख्यंसेतु तीर्त्वा प्राप्य अन्धस्सन् अनन्धो भवति । देहवत्त्वे पूर्वमन्धोऽपि सन् आत्मानं प्राप्य तं द्रष्टुं नेत्रवान् भवति। विद्धः सन् देहवत्त्वे पीडितः सन्नपि देहवियोगे सति सेतुमात्मानं प्राप्य अविद्धोभवति । तथा देहावस्थायामुपतापी रोगाद्युपतापवान् सन् अनुपतापी भवति त्रिविधतापरहितो भवति । यस्मादीदृश आत्मास्ति तस्माद्वै । एतं सेतुं तीर्त्वा प्राप्य । नक्तमपि रात्रिरपि। अहरेव दिनमेव। अभिनिष्पद्यते भवतीत्यर्थः। विज्ञानात्म ज्योतिःस्वरूप महरिवाहः सदैकरूपं विदुषः सम्पद्यत इत्यर्थः । हि यतः । एष ब्रह्मलोकः । ब्रह्मैवलोकः ब्रह्मलोकः । सकृद्विभातः । सदा विभातः । सदैकरूपएवेत्यर्थः ॥ २ ॥

अनुवाद–यहां से सब पाप निवृत्त हो जाते हैं क्योंकि यह ब्रह्म अपहतपाप्मा है। इसी हेतु इस सेतु ( ब्रह्म ) को पाकर अन्ध अनन्ध हो जाता है। पीड़ित अपीड़ित होता है। उपतापी अनुपतापी होता है । इसीहेतु इस सेतु को पाकर रात्रि भी दिन ही हो जाती है । क्योंकि यह ब्रह्म सदा प्रकाश स्वरूप ही है ॥ २ ॥

पदार्थः–( अतः ) इस पूर्वोक्त लक्षण युक्त आत्मा से ( सर्वे ) सब ( पाप्मानः ) पाप ( निवर्त्तन्ते ) निवृत्त होजाते हैं ( हि ) क्योंकि (एषः+ब्रह्मलोकः) यह ब्रह्म ( अपहतपाप्मा ) पाप रहित है ( तस्माद्वै ) इसी हेतु ( एतम्+सेतुम् ) इस आत्माख्य सेतु को पाकर तीर्त्वा ( अन्धः+सन् ) अन्धा होता हुआ पुरुष ( अनन्धः+भवति ) अनन्ध अर्थात् नेत्रवान् होता है ( विद्धः+सन् ) पीडित होता हुआ भी ( अविद्धः+भवति ) अविद्ध अपीडित होता है ( उपतापी+सन् ) रोगादियों से उपतापवान् होता हुआ भी

( अनुपतापी+भवति ) अनुपतापवान्=रोगादि ताप रहित होता है ( तस्माद्वै ) इसीहेतु ( एतम्+सेतुम्+तीर्त्वा ) इस सेतु को पाकर (नक्तम्+अपि ) रात्रि भी ( अहः+एव ) दिन ही ( अभिनिष्पद्यते ) होजाती है ( हि ) क्योंकि ( एषः+ब्रह्मलोकः ) यह ब्रह्म (सकृत्) सर्वदा ( विभातः+एव ) प्रकाशस्वरूप ही है ॥ २ ॥

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥**

तत् । ये । एव । एतम् । ब्रह्मलोकम् । ब्रह्मचर्य्येण । अनुविन्दन्ति । तेषाम् । एव । एषः । ब्रह्मलोकः । तेषाम् । सर्वेषु । लोकेषु । कामचारः । भवति ॥ ३ ॥

भाष्यम्—तदिति । तत्तत्र ये विद्वान्सः । ब्रह्मचर्य्येण स्त्रीविषयतृष्णात्यागेनैव । एतं । ब्रह्मलोकमेतद्ब्रह्म अनुविन्दति प्राप्नुवन्ति । तेषां विदुषामेव । एष ब्रह्मलोकः प्राप्यते । नान्येषां स्त्रीविषयसम्पर्कजाततृष्णानां ब्रह्मविदामपीत्यर्थः । तेषां ब्रह्मविदां ब्रह्मचर्य साधनवतामेव सर्वेषु लोकेषु कामचारो भवति । तस्मात्परममेतत्साधनंब्रह्मचर्यं सर्वेषां ब्रह्मजिज्ञासूनाम् ॥ ३ ॥ इति चतुर्थखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ४ ॥

अनुवादः—इसहेतु जो इस ब्रह्म को ब्रह्मचर्य से ही प्राप्त करते हैं उन्हीं को यह ब्रह्मलोक मिलता है। और उन्हीं को सब लोकलोकान्तरों में स्वेच्छाचार विहार होता है ॥३॥

पदार्थः—( तत् ) इसलिये ( ये+एव ) जो ही ब्रह्मवित् पुरुष ( एतम्+ब्रह्मलोकम् ) इस ब्रह्म को ( ब्रह्मचर्येण ) ब्रह्मचर्य से ही ( अनुविन्दन्ति ) प्राप्त करते हैं ( तेषाम्+एव ) उन ब्रह्मचर्य साधक ब्रह्मवित् पुरुषों को ही ( एषः+ब्रह्मलोकः ) यह ब्रह्मलोक मिलता है ( तेषाम् ) उनका ही ( सर्वेषु+लोकेषु ) सर्वलोकलोकान्तरों में ( कामचरो+भवति ) स्वेच्छाचार अर्थात् स्वच्छन्द मगन होता है ॥ ३ ॥

इति चतुर्थखण्डस्यभाषाभाष्यं समाप्तम् ॥ ४ ॥

## अथ पञ्चमः खण्डः

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्य्यमेव तद्ब्रह्मचर्य्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ॥ १ ॥**

अथ । यद् । यज्ञः । इति । आचक्षते । ब्रह्मचर्यम् । एव । तत् । ब्रह्मचर्येण । हि । एव । यः । ज्ञाता । तम् । विन्दते । अथ । यद् । इष्टम् । इति । आचक्षते । ब्रह्मचर्य्यम् । एव । तद् । ब्रह्मचर्य्येण । हि । एव । इष्ट्वा । आत्मानम् । अनु- । विन्दते ॥ १ ॥

भाष्यम्—अथ यदिति । य आत्मा स सेतुत्वादिगुणैः पूर्वप्रकरणे स्तुतः । सम्प्रति तल्लब्धये ज्ञानसहकारि साधनान्तरं ब्रह्मचर्याख्यं विधातव्यमित्याह । यज्ञादिभिस्तत्स्तौति च कर्तव्यार्थम् । अथ विद्वांसो "यज्ञ" इति यल्लोके आचक्षते विवृण्वन्ति कथयन्ति । तद् ब्रह्मचर्यमेव । यतो यज्ञस्यापियत्फलं तद्ब्रह्मचर्यवान्पुरुषएवलभते । अतो यज्ञोऽपि ब्रह्मचर्यमेवेतिबोद्धव्यम् । कथं ब्रह्मचर्यं यज्ञ इत्याह । हि यस्मात् । ब्रह्मचर्येणैव ब्रह्मचर्यसाधनेनैव यो ब्रह्मविद् । ज्ञाता ब्रह्मणो ज्ञाता भवति । स एव ब्रह्मविद् ब्रह्मचर्य साधनः तं ब्रह्मलोकं विन्दते प्राप्नोति । अथ तथाच । लोकेविद्वांसः । "इष्ट" मिति यदाचक्षते कथयन्ति । तद् ब्रह्मचर्यमेव । हि यस्मात् । ब्रह्मचर्येणैव साधनेन । इष्ट्वा तमीश्वरं पूजयित्वा । तमात्मानं ब्रह्माख्यं परमात्मानम् । अनुविन्दते प्राप्नोति । जानातीतिज्ञो । येनासौज्ञो यज्ञ इतिव्युत्पत्तिर्लक्ष्यते । यतो यो ज्ञातेति पदं पठति । यजतेर्यज्ञ इति सिद्धिः सर्वत्रैव प्रसिद्धा ॥ १ ॥

अनुवाद—अब ( इसलोक में शिष्ट पुरुष ) जिसको "यज्ञ" कहते हैं वह ब्रह्मचर्य ही है क्योंकि जो ब्रह्मचर्यरूप साधन से ही ब्रह्मवित् बनता है वही उस (ब्रह्मलोक ) को पाता है और जिसको "इष्ट" कहते हैं वह भी ब्रह्मचर्य ही है क्योंकि ब्रह्मचर्यरूप साधन से ही उस ( परमात्मा ) को पूजन कर परमात्माको पाता है ॥ १ ॥

पदार्थः—( अथ ) अब ( यज्ञः+इति ) यज्ञ ऐसा ( यद्+आचक्षते ) जिसको शिष्ट पुरुष कहते हैं अर्थात् जिसको इसलोक में शिष्ट पुरुष यज्ञ कहते हैं और जिस यज्ञ को परम पुरुषार्थ का साधन मानते हैं (तत्+ब्रह्मचर्यम्+एव) वह ब्रह्मचर्य ही है (हि) क्योंकि ( ब्रह्मचर्येण+एव ) ब्रह्मचर्यरूप साधन से ही ( यः+ज्ञाता ) जो ज्ञाता होता है अर्थात् जो ब्रह्मवित् होता है वही ( तम् ) उस ब्रह्मलोक अर्थात् ब्रह्मको ( विन्दते ) पाता है ( अथ ) और ( यत् ) जिसको ( इष्टम्+इति+आचक्षते ) इष्ट कहते हैं ( तत्+ब्रह्मचर्यम्+एव ) वह ब्रह्मचर्य ही है ( हि ) क्योंकि ( ब्रह्मचर्येण+एव ) ब्रह्मचर्यरूप साधनसे ही ( इष्ट्वा ) उस ब्रह्मको पूज ( आत्मानम् ) परमात्माको (अनुविन्दते) पाता है ॥ १ ॥

भाष्याशयः—ब्रह्मप्राप्ति का मुख्य साधन इस खण्ड में कहा जाता है । ब्रह्मचर्य ही मुख्य साधन है । यद्यपि यज्ञ, इष्ट आदि अनेक साधन के द्वारा ब्रह्म की प्राप्ति

कही गई है किन्तु मूल कारण ब्रह्मचर्य ही है इस के बिना किसी यज्ञ में मन की स्थिरता नहीं हो सकती । इस हेतु यज्ञ वाचक कतिपय शब्द के अर्थ के द्वारा दर्शाते हैं कि सम्पूर्ण यज्ञ ब्रह्मचर्य के उद्देश को ही जतलाते हैं । यथा—यज्ञशब्द–यज धातु से इस की सिद्धि मानते हैं । परन्तु यथार्थ में "यत्+ज्ञ" ये दो शब्द मिलकर यज्ञ बना है (जानातीतिज्ञः) जानने वाले को "ज्ञः" कहते हैं । जिस के द्वारा उस ब्रह्म को जाने उस को यज्ञ कहते हैं । अर्थात् ब्रह्मचर्य का ही नामान्तर यज्ञ है । इसी प्रकार इष्ट भी ब्रह्मचर्य का नाम है ॥ १ ॥

**अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवाऽऽत्मानमनुविद्य मनुते ॥ २ ॥**

अथ । यत् । सत्त्रायणम् । इति । आचक्षते । ब्रह्मचर्यम् । एव । तद् । ब्रह्मचर्येण । हि । एव । सतः । आत्मनः । त्राणम् । विन्दते । अथ । यत् । मौनम् । इति । आचक्षते । ब्रह्मचर्य्यम् । एव । तद् । ब्रह्मचर्येण । हि । एव । आत्मानम् । अनुविद्य । मनुते ॥ २ ॥

भाष्यम्—अथेति । अथ विद्वांसः "सत्त्रायण"मिति यदाचक्षते यत्कथयन्ति तद्ब्रह्मचर्यमेव । हि यस्मात् । ब्रह्मचर्येणैव आत्मज्ञः पुरुषः । सत आत्मनो जीवात्मनस्त्राणं रक्षणं विन्दते प्राप्नोति । अतः सत्त्रायणशब्दोऽपि ब्रह्मचर्यमेव लक्षयति। अथ यत्"मौन"मित्याचक्षते विद्वांसस्तद्ब्रह्मचर्यमेव । हि यस्मात् ब्रह्मचर्येणैव साधनेन । आत्मानं परमात्मानमनुविद्य विदित्वा पश्चान्मनुते ध्यायति । अतो मौनंशब्दोऽपि ब्रह्मचर्यमेव द्योतयति । सत्त्रायणं सन्तमात्मानं त्रायते साधको येन कर्मणा तत्सत्त्रायणं यद्वा सन्नात्मा त्रायते येनेति सत्त्रायणम् । मनुते मननं करोति साधको येन तन्मौनम् ॥ २ ॥

अनुवाद—अनन्तर जिसको (विद्वान् लोग) "सत्त्रायण" कहते हैं वह ब्रह्मचर्य ही है क्योंकि ब्रह्मचर्यरूप साधन से ही सत् जो जीवात्मा उस का त्राण अर्थात् रक्षा को पाता है । और जिसको विद्वान् लोग "मौन" कहते हैं वह ब्रह्मचर्य ही है क्योंकि ब्रह्मचर्य रूपसाधन से ही आत्माको जानकर पश्चात् मनन करता है ॥ २ ॥

पदार्थः—(अथ) अनन्तर (यत्) जिसको (सत्त्रायणम्) सत्त्रायण नामयज्ञ (इति+आचक्षते) विद्वान् लोग कहते हैं (तत्+ब्रह्मचर्यम्+एव) वह ब्रह्मचर्य ही है (हि) क्यों-

कि ( ब्रह्मचर्येण+एव ) ब्रह्मचर्यरूप साधन से ही (सतः+आत्मनः) सर्वदा विद्यमान अर्थात् अविनश्वर जीवात्मा की (त्राणम्) रक्षा (विन्दते) पाता है (अथ) और (यत्) जिसको (मौनम्) मौन (इति+आचक्षते) ऐसा । विद्वान् लोग कहते हैं ( तद्+ब्रह्मचर्यम्+एव) वह ब्रह्मचर्य ही है ( हि ) क्योंकि (ब्रह्मचर्येण+एव) ब्रह्मचर्यरूप साधन से ही ( आत्मानम् ) परमात्मा को ( अनुविद्य ) अच्छे प्रकार जान पश्चात् ( मनुते ) मनन करता है ॥ २ ॥

भाष्याश्यः—सत्त्रायण—यह नाम किसी यज्ञ विशेष का है। "सत्+त्रायण" ये दो शब्द हैं । सत्=जीवात्मा । त्रायण=रक्षण=रक्षा । आत्मा की त्रायण रक्षण जिस से हो । उसे सत्त्राण कहते हैं । यथार्थ में ब्रह्मचर्य से ही उस आत्मा की रक्षा होती है अतः ब्रह्मचर्य का ही नाम सत्त्रायण भी है । इसी प्रकार मौन शब्द भी जानना॥२॥

**अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयꣳसरस्तदश्वत्थःसोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣳहिरण्मयम् ॥ ३ ॥**

अथ । यत् । अनाशकायनम् । इति । आचक्षते । ब्रह्मचर्यम् । एव । तद् । एषः । हि । आत्मा । न । नश्यति । यम् । ब्रह्मचर्येण । अनुविन्दते । अथ । यद् । अरण्यायनम् । इति । आचक्षते । ब्रह्मचर्यम् । एव । तद् । अरः । च । ह । वै । ण्यः । च । अर्णवौ । ब्रह्मलोके । तृतीयस्याम् । इतः । दिवि । तद् । ऐरम् । मदीयम् । सरः । तद् । अश्वत्थः । सोमसवनः । तद् । अपरजिता । पूः । ब्रह्मणः । प्रभुविमितम् । हिरण्मयम् ॥ ३ ॥

भाष्यम्—अथेति । अथ विद्वांसः । अनाशकायन मनशनायन मुपवासनायनमित्यर्थः । इति तु लौकिकोऽर्थः । परमार्थस्तु वक्ष्यते । यदाचक्षते । तद्ब्रह्मचर्यमेव । हि यस्मात् । तस्य ब्रह्मचर्यसाधनवतः पुरुषस्य । ब्रह्मचर्य साधनेन योह्यात्मा दृढो भवति । स उत्तरोत्तरमूर्ध्वगामी भवति । एष आत्मा न नश्यति न विविधक्लेशान् प्राप्नोति । यमात्मानं ब्रह्मचर्येण अनुविन्दते प्राप्नोति । तस्मादनाशकायनं नाम यो यज्ञस्तदपि ब्रह्मचर्यमेव । नाशएव नाशकः । नाशक ईयते

भाष्यम्—उदशराव इति । पुनरपि प्रजापतिरुवाच । हे सोम्यौ इन्द्रविरोचनौ ! युवाम् । उदशरावे । उदकपूर्णेशरावादौ । आत्मानम् । आत्मच्छायाम् । अवेक्ष्य सम्यग् दृष्ट्वा ।यद्यदितत्र । आत्मनः । आत्मसम्बन्धि तत्त्वं न जानीथः । तत्तर्हि मे मह्यम् । प्रब्रूतम् । कथयतम् । इतिप्रजापतेराचार्य्यस्योपदेशं श्रुत्वा तौ हेन्द्र विरोचनौ । उदशरावे उदकपूर्णे शरावेमृत्तिकापात्रविशेषे आत्मानम् । अवेक्षांचक्राते । ददृशतुः । परन्तु उदशरावे आत्मानमवेक्ष्य तौ किमज्ञासिष्टामित्युपदिष्टावपि प्रजापतये न किमप्यवोचताम् । अतोज्ञानविमोहितौ संक्षुब्धौ तूष्णींभूतौ शिष्याववलोक्य स्वयं प्रजापतिरुवाच । युवाम् । अस्मिन् उदशरावे किं पश्यथः इति? । इत्युक्तौ तौ होचतुः । हे भगवः ! यथऽऽवाम् । लोमनखादिमन्तौ करचरणाद्यवयववन्तौ वर्त्तावहे । तथैवावाम् आलोमभ्यः । शिरोरुहान् केशान् आरभ्य आनखेभ्यः चरणाङ्गुलिजनखान्तम् । सर्वमेवेदं शरीरस्य प्रतिरूपम् । प्रतिकृतिमात्मानम् । पश्यावः अवेक्षावहे ॥ १ ॥

अनुवाद–( पुनः प्रजापति बोले कि हे प्रिय शिष्य इन्द्र ( विरोचना ) जल परिपूर्ण शराव ( मृत्तिकापात्र ) में आत्मा को देख यदि तुम दोनों उसे न जान सको तब मुझ से आकर कहो । उन दोनों ने उदक शराव में ( आत्मा को ) देखा । उन दोनों से प्रजापति पुनः बोले कि क्या देखते हो? । उन दोनों ने उत्तर दिया कि हे भगवन्! नखसिख यह सब ( शरीर का ) प्रतिरूप आत्मा को हमदोनों देखते हैं ॥ १ ॥

पदार्थः—आचार्य्य प्रजापति पुनः बोले कि ( उदशरावे ) उद=उदक=जल । शराव=मृत्तिका का पात्र विशेष । अर्थात् जल से भरे हुए किसी पात्र में ( आत्मानम् ) आत्मा को ( अवेक्ष्य ) देख ( यद् ) यदि उस में ( आत्मनः ) आत्म के तत्त्व को ( न+विजानीथः ) नहीं जानसको ( तत् ) तब ( मे ) मुझ से ( प्रब्रूतम् ) आकर कहो ( इति ) प्रजापति के उस वचन को सुनकर ( तौ+ह ) वे दोनों ( उदशरावे ) उदक पूर्णपात्र में (अवेक्षाञ्चक्राते) आत्मा को देखने लगे । परन्तु आत्मा को उस में देखकर पीछे अपने आचार्य से कुछ नहीं कहा । अतः ( प्रजापतिः ) पुनः प्रजापति ( तौ+ह ) उन दोनों से (उवाच) बोले कि ( किम्+पश्यथः ) हे सौम्य! इस में क्या देखते हो ( तौ+ह+ऊचतुः ) आचार्य के वचन सुन वे दोनों बोले कि हे ( भगवः ) भगवन् ! ( आवाम् ) हमदोनों जैसे शिखावान् और शरीर के अवयववान् हैं ठीक वैसे ही ( आलोमभ्यः ) शिर से लेकर ( आनखेभ्यः ) पैरतक ( सर्वम् ) सब ( इदम् ) यह (प्रतिरूपम्) शरीर का प्रतिरूप ( आत्मानम्) आत्मा को (पश्यावः) देखतेहैं ॥१॥

**तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते। तौ ह प्रजापतिरुवाच—किं पश्यथ इति ?॥ २॥**

तौ। ह। प्रजापातिः। उवाच। साधु। अलंकृतौ। सुवसनौ। परिष्कृतौ। भूत्वा। उदशरावे। अवेक्षेथाम्।। इति। तौ। ह। साधु। अलङ्कृतौ। सुवसनौ। परिष्कृतौ। भूत्वा। उदशरावे। अवेक्षाञ्चक्राते। तौ। ह। प्रजापतिः। उवाच। किम्। पश्यथः। इति॥ २॥

भाष्यम् तौ हेति। पुनरपि प्रजापातिराचार्यस्तौहोवाच। सोम्यौ इन्द्र विरोचनौ! युवाम् साध्वलङ्कृतौ सुवसनौ परिष्कृतौ च भूत्वा। उदशरावे जलपात्रविशेषे। आत्मानम्। अवेक्षेथाम्। अवेक्ष्यपरमात्मनो न विजानीथस्तन्मे प्रब्रूतम्। साध्वलङ्कृतौ। साधु शोभनं यथास्यात्तथा विविधभूषणैरलङ्कृतौ भूषितौ। सुवसनौ। शोभनं वसनं वस्त्रं यस्य तौ। परिष्कृतौ। परिधौतौ। सर्वथाविमलौ। तौ ह आचार्य्येण यथोपदिष्टौ तथैव साध्वलङ्कृतौ सुवसनौ। परिष्कृतौ भूत्वा। उदशरावे। जलपूर्णपात्रे आत्मानम्। अवेक्षाञ्चक्राते। ददृशतुः। अस्मिन् समयेऽपि। आत्मानमवेक्ष्य प्रजायतये नावोचताम्। अतःपुनरपि प्रजापतिर्ह तौ उवाच। किं पश्यथः। युवाम स्मिन् किं पश्यथः॥ २॥

अनुवाद—उन दोनों से प्रजापति पुनःबोले कि हे सोम्य! तुम दोनों अच्छे प्रकार अलङ्कृत हो सुन्दर वस्त्र पहन और सर्वथा परिष्कृत हो उदक पूर्ण किसी पात्र में आत्मा को देखो (इस आज्ञा को पा) वे दोनों साध्वलङ्कृत सुवसन और सुपरिष्कृत हो उदकपूर्ण पात्र में (आत्माको) देखने लगे। तब प्रजापति ने उनसे पूछा कि तुम क्या देखते हो ?॥ २॥

पदार्थः—(प्रजापतिः) आचार्य प्रजापति पुनः (तौ+ह) उन दोनों से (उवाच) बोले तुम दोनों (साध्वलङ्कृतौ) अच्छे प्रकार अलङ्कृत (सुवसनौ) सुवस्त्रधारी (परिष्कृतौ) और स्वच्छ अतिविमल (भूत्वा) होकर (उदशरावे) उदकपूर्ण पात्रमें (अवेक्षेथाम्) आत्मा को देखो। और देखकर पुनः मुझ से कहो (इति) इस प्रजापति के वचन को सुन (तौ+ह) वे दोनों (साध्वलङ्कृतौ) अच्छे अलङ्कृत (सुवसनौ) सुवस्त्रधारी (परिष्कृतौ) और सुपरिष्कृत (भूत्वा) होकर (उदशरावे) उदकपात्र में (अवे-

क्षाञ्चक्राते ) अपने आत्मा को देखने लगे तब ( तौ+ह+प्रजापतिः+उवाच) उन दोनों से पुनः प्रजापति बोले कि (किम्+पश्यथः+इति) तुम दोनों इस में क्या देखते हो ॥२॥

**तौ होचुर्यथैवेदमावां भगवःसाध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवःसाध्वलङ्कृतौ सुवसनौ परिष्कृता वित्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥३॥**

तौ । ह । ऊचुः । यथा । एव । इदम् । आवाम् । भगवः । साध्वलङ्कृतौ । सुवसनौ । परिष्कृतौ । स्वः । एवम् । एव । इमौ । भगवः । साध्वलङ्कृतौ । सुवसनौ । परिष्कृतौ ।इति । एषः । आत्मा । इति । ह । उवाच । एतद् । अमृतम् । अभयम् । एतद् । ब्रह्म । इति । तौ । ह । शान्तहृदयौ । प्रवव्रजतुः ॥ ३ ॥

भाष्यम्—तौ होचुरिति । किं पश्यथ इति प्रजापतिनाचार्य्येण पृष्टौ तौ होचतुः । हे भगवन् ! यथैवेदं शरीरं पूर्वं सुपरिष्कृतं तथैवेदं पश्यावः । हे भगवः हे भगवन् ! यथैवावाम् । साध्वलङ्कृतौ सुवसनौ परिष्कृतौ । स्वः । भवावः । वर्त्तावहे । एवमेव तथैव । इमौ आवाम् । साध्वलङ्कृतौ । सुवसनौ । सुवस्त्रौ । परिष्कृतौ । निर्मलौ । स्वः । इति शिष्यप्रत्युत्तरं श्रुत्वा प्रजापतिरुवाच । हे सोम्य ! एतदमृतम् । एषः परमपुरुषः । अमृत अमरणधर्मा । एतदभयम् एतद्ब्रह्म । इति प्रजापति प्रत्युत्तरं श्रुत्वा तौ हेन्द्रविरोचनौ शान्तहृदयौ गुरुकुलात् प्रवव्रजतुः ॥ ३ ॥

अनुवाद—वे दोनों बोले कि हे भगवन् ! जैसे ही हम दोनों अच्छे प्रकार अलङ्कृत, सुव- और परिष्कृत हैं । हे भगवन् वैसे ही ये दोनों छायात्मा अच्छे प्रकार अलङ्कृत, सुवसन और परिष्कृत हैं ( प्रजापति ) बोले कि यही आत्मा है । यह अमृत, अभय और यही बड़ा है । यह सुन वे दोनों शान्त हृदय हो वहां से चले ॥ ३ ॥

पदार्थः—( तौ+ह+ऊचतुः ) वे दोनों बोले कि ( यथा+एव+इदम् ) जैसे ही यह शरीर प्रथम था वैसे ही इसको देखते हैं अर्थात् हे (भगवः) भगवन् ! जैसे( आवाम् ) हम दोनों ( साध्वलङ्कृतौ ) अच्छे प्रकार अलङ्कृत ( सुवसनौ ) सुन्दर वस्त्रधारी ( परिष्कृतौ ) परिष्कृत विमल ( स्वः ) हैं ( एवम्+एव ) वैसे ही ( इमौ ) ये दोनों छायात्मा (साध्वलङ्कृतौ) अच्छे प्रकार अलङ्कृत ( सुवसनौ ) सुवस्त्रधारी ( परिष्कृतौ ) विमल देख पड़ते हैं । यह सुन ( एषः+आत्मा+इति ) यही आत्मा है ( ह+उवाच)

ऐसा प्रजापति ने कहा ( एतद्+अमृतम् ) यही अमृत है ( अभयम् ) अभय है ( एतद्+ब्रह्म ) यही ब्रह्म है ( इति ) यह सुन ( तौ+ह ) वे दोनों ( शान्तहृदयौ ) शान्तहृदय हो ( प्रवव्रजतुः ) वहां से विदा हो चले ॥ ३ ॥

**तौ हान्वीक्ष्य प्रजापतिरुवाचाऽनुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भवष्यन्ति। देवा वाऽसुरा वा ते पराभविष्यन्तीति सह शान्तहृदय एव विरोचनोऽसुरान् जगाम।तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमञ्चामुञ्चेति ॥ ४ ॥**

तौ । ह । अन्वीक्ष्य । प्रजापतिः । उवाच । अनुपलभ्य । आत्मानम् । अननुविद्य । व्रजतः । यतरे । एतदुपनिषदः । भविष्यन्ति । देवाः । वा । असुराः । वा । ते । पराभविष्यन्ति । इति । सः । ह । शान्तहृदयः । एव । विरोचनः । असुरान् । जगाम । तेभ्यः । ह । एताम् । उपनिषदम् । प्र । उवाच । आत्मा । एव । इह । महय्यः । आत्मा । परिचर्य्यः । आत्मानम् । एव । इह । महयन् । आत्मानम् । परिचरन् । उभौ । लोकौ । अवाप्नोति । इमम् । च । अमुम् । च । इति ॥ ४ ॥

भाष्यम्—तौ हेति । तौ हेन्द्रविरोचनौ गच्छन्तौ शान्तहृदयौ च । अन्वीक्ष्य अवलोक्य प्रजापतिर्मनसि उवाच । एतौ । आत्मानम् । परमात्मानम् । जीवात्मानम् वा । अनुपलभ्य असाक्षात्कृत्य । पुनः । अननुविद्य अज्ञात्वा मम स्थानाद् व्रजतः । स्वं गृहं गच्छतः । अतो यतरे । ये देवा वा असुरा वा । एतदुपनिषदो भविष्यन्ति । एषा उपनिषद् येषांते एतदुपनिषदः । बहुव्रीहिः । इन्द्रविरोचनाभ्यामयथातथ्यं गृहीता इयमुपनिषत्शिक्षाविद्या येषां देवानाम्वासुराणाम्वा भविष्यतिते देवा वा असुरा वा पराभविष्यन्ति । पराभवं प्राप्स्यन्ति । इति प्रजापति मनसिचिन्तयामास स ह विरोचनो विगततेजस्को मन्दबुद्धिः शान्तहृदय एव लब्धात्मा इव । असुरान् वैदिकसम्प्रदायरहितान् पुरातनान् आर्य्यान् आजगाम । आगत्य च तेभ्यो हासुरेभ्यः । एतामुपनिषदं प्रोवाच । हे असुराः ! इहास्मिन् लोके । आत्मैव देह एव ।

महय्यः पूजनीयः । तथा आत्मा देह एव परिचर्य्यः परिचरणीयः शुश्रूषणीयः । तथा इहास्मिन् लोके आत्मानमेव । देहमेव महयन् पूजयन् । आत्मानं परिचरन् देहमेव-विविधाशनवसनैः सेवमानः सन् पुरुषः उभौ लोकौ इमञ्च । अमुञ्च । अवाप्नोति । लभते ॥ ४ ॥

अनुवाद—उन दोनों को ( शान्तहृदय होकर जाते हुए ) देख प्रजापति बोले कि ये दोनों आत्मा ( परमात्मा वा जीवात्मा ) को न साक्षात्कार कर और न कुछ जान यहां से जाते हैं । इस कारण इस उपनिषद् वाले जो देव अथवा असुर होवेंगे । वे अवश्य पराभूत होवेंगे । वह विरोचन शान्त हृदय ही असुरों के निकट जा पहुंचा । और उन लोगों से यह उपनिषद् कही कि यहां शरीर ही पूजनीय है । शरीर ही सेवनीय है । और यहां शरीर को ही पूजता हुआ और सेवता हुआ मनुष्य इसलोक और परलोक दोनों लोकों को पाता है । इति ॥ ४ ॥

पदार्थः—( प्रजापतिः ) आचार्य प्रजापति ( तौ+ह+अन्वीक्ष्य ) उनदोनों को देख ( उवाच ) बोले कि ( आत्मानम् ) आत्मा को ( अनुपलभ्य ) न पाकर और ( अननुविद्य ) न जानकर ( व्रजतः ) प्रजापतिचिन्ता करने लगेये दोनों जाते हैं । इस कारण ( यतरे ) जो ( देवा वा ) देव ( असुर वा ) अथवा असुर ( एतदुपनिषदः ) इस उपनिषद् वाले ( भविष्यन्ति ) होवेंगे ( ते ) वे देव वा असुर ( पराभविष्यन्ति ) परास्त होंगे ( सः+विरोचनः ) वह विरोचन ( शान्तहृदयः+एव ) शान्तहृदय होकर ही ( असुरान् ) असुरों के निकट ( जगाम ) पहुंचा । और पहुंच कर ( तेभ्यः+ह ) उन असुरों से ( एताम्+उपनिषदम् ) इस उपनिषद को ( प्रोवाच ) कहने लगा । क्या कहा सो आगे कहते हैं (इह) इस लोक में ( आत्मा+एव ) शरीर ही (महय्यः) पूजनीय है ( आत्मा+परिचर्य्यः ) और आत्मा शरीर ही सेवनीय है ( इह ) यहां ( आत्मानम्+एव ) आत्मा=देह को ही ( महयन् ) पूजता हुआ (आत्मानम्+परिचरन् ) आत्मा को ही सेवता हुआ ( उभौ+लोकौ ) दोनों लोक ( अमुम्+च ) इस लोक ( अमुञ्च ) उस लोक को ( अवाप्नोति ) पाता है ॥ ४ ॥

**तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो वतेत्यसुराणाᳬ ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति सᳬ स्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्त इति ॥ ५ ॥**

तस्माद् । अपि । अद्य । इह । अददानम् । अश्रद्दधानम् । आहुः । आसुरः । बत । इति । असुराणाम् । हि । एषा । उपनिषत् । प्रेतस्य । शरीरम् । भिक्षया । वसनेन । अलङ्कारेण । इति । संस्कुर्वन्ति । एतेन । हि । अमुम् । लोकम् । जेष्यन्तः । मन्यन्ते । इति ॥ ५ ॥

भाष्यम्—तस्मादिति । तस्मात्कारणात् । अद्यापि तत्सम्प्रदायोऽनुवर्त्तते । तथाहि । इह । अस्मिन् लोके । अददानम् । अन्येभ्यो यथा कालं यथापात्रम् किमपि अप्रयच्छन्तम् । अश्रद्दधानम् । परलोके । अविश्वसन्तम् । अयजमानम् । वैदिकानि यज्ञादीनि कर्माणि अकुर्वाणम् । ईदृशं पुरुषं कञ्चिदपि दृष्ट्वा । शिष्टा बतेति खेदेन । अयमासुरः । असुर सम्बन्धी कोऽपि पुरुषोऽस्तीति । आहुः कथयन्ति । इदानीमपि तस्मादेवकारणाद्वैदिकं कर्माननुतिष्ठन्तं जनमवलोक्य आसुरोऽयमिति शिष्टाःखेदेन कथयन्ति । हि यतः । असुराणामेव एषा अददानताऽश्रद्दधानताऽयजमानतैवंविधलक्षणोपनिषद् वर्तते । तयोपनिषदा संस्कृताः सन्तः । प्रेतस्य एकं देहं परित्यज्य देहान्तरस्य ग्रहीतुर्गमनशीलस्य जीवात्मन इत्यर्थः । शरीरं देहं भिक्षया गन्धमाल्यादिलक्षणया । वसनेन वस्त्रादिप्रकारेण । अलङ्कारेण भूषणेन एवंविधैरन्यैरपिपदार्थैः । संस्कुर्वन्ति भूषयन्ति । हि यतः । एतेन शरीरस्यालङ्कारादिव्यापारेण । अमुं परलोकमपि । जेष्यन्तो जेष्यामोवयमिति । मन्यन्ते हासुराः । तेहासुराः शरीरस्य भरणपोषणादिभिरेव कल्याणं मन्यन्त उभयत्रेतिभावः ॥५॥

इत्यष्टमखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ८ ॥

अनुवादः—इस कारण आज भी इसलोक में, अदानी, अश्रद्धालु, और अयजमान ( अयाजी ) पुरुष को देखकर शिष्टजन यह "असुर" है ऐसा खेद के साथ कहते हैं । क्योंकि असुरों की ही यह उपनिषद् है । ये लोक मृतक के शरीर को ही भिक्षाओं वस्त्रों और अलङ्कारों से संस्कृत करते हैं और इससे समझते हैं कि हम उस लोक को भी जीत लेवेंगे । इति ॥ ५ ॥

पदार्थः—( तस्माद् ) उस कारण ( अद्य+अपि ) आजकल भी उन असुरों का सम्प्रदाय आ रहा है । इसी को आगे दिखलाते हैं ( अददानम् ) दान को न देते हुए अर्थात् अदाता ( अश्रद्दधानम् ) और परलोक विषय में श्रद्धा को न करते हुए अर्थात् अश्रद्धालु नास्तिक और ( अयजमानम् ) यज्ञ को न करते हुए अर्थात् अव्रती पुरुष को देखकर ( बत ) खेदके साथ ( आहुः ) शिष्ट जन कहते हैं कि ( आसुरः+इति ) यह पुरुष आसुर=असुर सम्बन्धी कोई है ( हि ) क्योंकि ( एषा ) यह अर्थात् अदान,अश्रद्धा, अयज्ञत्व आदि लक्षणयुक्त (उपनिषद्) उपनिषद् मिथ्या ज्ञान (असुराणाम्) अ-

सुरों की है। अर्थात् ऐसी उपनिषद् केवल असुरों की है। वे लोग ही दान आदि कर्म नहीं करते हैं और ये असुर लोग ( प्रेतस्य+शरीरम् ) प्रेत के शरीर को अर्थात् एक देह को त्याग दूसरे देह को धारण करने वाला गमनशील जीवात्मा के शरीर को ही ( भिक्षया ) गन्धमाल्य अन्नादि लक्षण स्वरूप भिक्षा से ( वसनेन ) विविध सुन्दर वस्त्र से ( अलङ्कारेण ) और विविध भूषण से ( इति ) इस प्रकार के अन्य २ पदार्थ से भी ( संस्कुर्वन्ति ) संस्कृत=सुसज्जित करते हैं और ( एतेन ) इस से ( हि ) निश्चय ( अमुम्+लोकम् ) उस परलोक को भी ( जेष्यन्तः ) जीत लेवेंगे ( मन्यन्ते ) ऐसा मानते हैं ॥ ५ ॥

भाष्याशयः—इस लेख से विस्पष्ट होता है कि असुर धर्म्म वहुत दिनों से चला आता है। जो लोग वैदिक कर्म्मों को नहीं किया करते थे वे असुर नाम से प्रसिद्ध थे। इस शब्द पर प्रथम विचार हुआ है। वहां देखो। प्रेत—यहां प्रेत शब्द निन्दा सूचक है। यह जीवात्मा एक शरीर में कदापि भी स्थिर नहीं रहता सदा नूतन २ शरीर का ग्रहण करता है। इस हेतु यह जीवात्मा प्रेत=अति गमन शील कहलाता है ( प्र=अतिशय। इत=गत ) जब यह निश्चय है कि यह शरीर क्षण भंगुर है तब बुद्धिमान् को उचित है कि जीवात्मा के उद्धार का उपाय सदा करे इस शरीर के ऊपर उतनी आस्था न रक्खे। गीता के षोडशाध्याय में असुर धर्म्म का अच्छा वर्णन है वहां देखो।

इत्यष्टमखण्डस्य भाषाभाष्यं समाप्तम् ॥ ८ ॥

## अथ नवमः खण्ड

**अथ हैन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाऽहमत्र भोग्यं पश्यामीति ॥ १ ॥**

अथ । ह । इन्द्रः । अप्राप्य । एव । देवान् । एतद् । भयम् । ददर्श । यथा । एव । खलु । अयम् । अस्मिन् । शरीरे । साधु । अलङ्कृते । साधु । अलङ्कृतः । भवति । सुवसने । सुवसनः । परिष्कृते । परिष्कृतः । एवम् । एव । अयम् । अ-

स्मिन् । अन्धे । अन्धः। भवति । स्रामे । स्रामः । परिवृक्णे । परिवृक्णः । अस्य । एव । शरीरस्य । नाशम् । अनु । एषः । नश्यति । न । अहम् । अत्र । भोग्यम् । पश्यामि । इति ॥ १ ॥

भाष्यम्—अथेति । तयोर्मध्ये विरोचनस्तु । असुरान् प्राप्य यथाज्ञानमुपनिषदमनूच्य "अयं देह एव अपहतपाप्मत्वादि गुणः" । एनमेव पूजयन् सर्वांश्चलोकान् सर्वांश्चकामान् लभते । अयमेव देह आत्माऽपरनामवाच्यः प्रजापतिना तथैवोक्त" इत्यादि व्याख्याय विपरीतमात्मानमसुरान् ग्राहयामास । तस्मादेव कालादधिका आसुरी विद्या लोके वितता । अथ ह किल इन्द्रस्तु परमैश्वर्यसम्पन्नत्वाद्विवेकित्वाच्च । देवान् । तत्कालिकान् वेदधर्मणः स्वजातिबन्धुबान्धवान् । अप्राप्यैव । अलब्ध्वैव । एतद्-वक्ष्यमाणं भयं ददर्श । तथाहि । यथैव खलु येन प्रकारेणैव । अस्मिन् शरीरे देहे ।साध्वलङ्कृते। साधु सम्यं यथास्यात्तथा अलंकृते भूषिते । तथैवायं छायापुरुषोऽपि। साध्वलंकृतो भवति । सुवसने शोभनं वसनं वस्त्रं यस्य तस्मिन् सुवस्त्रे देहे सति । अयं छायापुरुषोऽपि। सुवसनो दृश्यते । परिष्कृते विमलीकृतेऽस्मिन् शरीरे सति । अयमपि परिष्कृतो भवति । एवमेवायं पूर्वोक्तदृष्टान्तवत् । छायापुरुषः । अस्मिन् शरीरे । अन्धे सति नेत्रविहीनेसति । अन्धो भवति । अस्य शरीरस्य चक्षुषोऽपगमेऽस्य छायापुरुषोऽपि अन्धो भवति । अस्मिन् शरीरे । स्रामे । काणे । एकनेत्रेसति । स्रवतीति स्रामः । अयं छायापुरुषोऽपि स्रामो दृश्यते । परिवृक्णे परिच्छिन्ने हस्तपादाद्यवयवविनाशे सति। परिवृक्णो भवति । अयं भावः। शरीरानुरूप एव छायापुरुषो भवति। तथाच। अस्यैव शरीरस्य। नाशमनुपश्चात् शरीरे नष्टे सति ।एषोऽपि नश्यति नष्टो भवति । अतोऽहमस्मिन् विषये प्रजापत्युपदेशे वा न भोग्यं कल्याणं फलं पश्यामि। अतःपुनरपि स आचार्य्यःप्रष्टव्य एव । नाहं स्वयं संदिग्धो देवान् गच्छामीति स्थिरीकृत्य प्रत्याजगाम ॥ १ ॥

अनुवादः—परन्तु उस इन्द्र ने देवों को न प्राप्त हो कर के ही इस भय को देखा जैसे ही इस शरीर के अच्छे अलंकृत होने पर यह ( छाया पुरुष ) अच्छा अलंकृत होता है ( शरीर के ) सुवस्त्रधारी होने से यह सुवस्त्रधारी होता है । परिष्कृत होने से यह परिष्कृत होता है । वैसे ही इस शरीर के अन्ध होने से यह ( छाया पुरुष ) अन्ध होता है । काण होने से यह काण और छिन्न होने से यह छिन्न होता है । इस शरीर के ही नाश होने से यह नष्ट होता है । अतः मैं इस ( अध्यात्मविद्या में ) भोग्य फल को नहीं देखता हूं॥ १ ॥

पदार्थः– ( अथ ) परन्तु ( ह ) प्रसिद्ध ( इन्द्रः ) इन्द्र ने ( देवान् ) देवों को ( अप्राप्य+एव ) न प्राप्त कर के ही ( एतद् ) इस वक्ष्यमाण ( भयम् ) भय को ( ददर्श ) देखा । किस भय को देखा सो आगे कहते हैं ( खलु ) निश्चय ( यथा+एव ) जैसे ही ( अस्मिन्+शरीरे ) इस शरीर के ( साध्वलंकृते ) अच्छे प्रकार अलंकृत होने पर ( अयम् ) यह छाया पुरुष भी ( साधु+अलंकृतः ) सुअलंकृत ( भवति ) होता है ( सुवसने ) सुवस्त्रधारी होने से ( सुवसनः ) यह भी सुवसन होता है । ( परिष्कृते+परिष्कृतः ) निर्मल होने से यह भी निर्मल होता है ( एवम्+एव ) वैसे ही ( अस्मिन्+अन्धे ) इस शरीर के अन्ध होने से ( अन्धः ) यह छाया पुरुष भी अन्ध होता है ( स्रामे ) काण होने पर ( स्रामः ) यह भी काना होता है ( परिवृक्णे +परिवृक्णः ) छिन्न होने पर छिन्न होता है ( अस्य+एव+शरीरस्य ) इस शरीर को ( नाशम्+अनु ) नष्ट होने पर ( एषः ) यह भी ( नश्यति ) नष्ट होजाता है । इस कारण ( अत्र ) इस आध्यात्मिक शास्त्र में (न+भोग्यम्+पश्यामि+इति) मैं भोग्य=कल्याण को नहीं देखता हूं । गुरूपदिष्ट विषय में मैं स्वयं संशय ग्रस्त हो रहा हूं देवों को क्या समझाऊंगा । इस कारण गृह न जाकर पुनःआचार्य्य के निकट जाना चाहिये । ऐसा मन में विचार वह इन्द्र प्रजापति के निकट चले । ॥ १ ॥

**स समित्पाणिः पुनरेयाय । तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्द्धं विरोचनेन किमिच्छन् पुनरागम इति । स होवाच यथैवखल्वयं भगवोऽस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णो परिवृक्णोऽस्यैवशरीरस्य नाशमन्वेष नश्यति नाऽहमत्र भोग्यं पश्यामीति ॥ २ ॥**

सः । समित्पाणिः । पुनः । एयाय । तम् । प्रजापतिः । उवाच । मघवन् । यत् । शान्तहृदयः । प्राव्राजीः । सार्द्धम् । विरोचनेन । किम् । इच्छन् । पुनः । आगमः । इति । सः । ह । उवाच । यथा । एव । खलु । अयम् । भगवः । अस्मिन् । शरीरे ।

साधु । अलङ्कृते । साधु । अलङ्कृतः । भवति । सुवसने । सुवसनः । परिष्कृते । परिष्कृतः । एवम् । एव । अयम् । अस्मिन् । अन्धे । अन्धः । भवति । स्रामे । स्रामः । परिवृक्णे । परिवृक्णः । अस्य । एव । शरीरस्य । नाशम् । अनु । एषः । नश्यति । न । अहम् । अत्र । भोग्यम् । पश्यामि । इति ॥ २ ॥

भाष्यम्-स इति । भयदर्शनात् सहेन्द्रः समित्पणिः सन् पुनरपि प्रजापतिमेयाय । तमागतमिन्द्रंप्रजापतिरुवाच । हे मघवन् इन्द्र ! विरोचनेन स्वसहाध्यायिना सार्धं । शान्तहृदयः सन् यत्त्वं प्राब्राजीः । अगमः । पुनरपि किमिच्छन् आगमः । आगतवानासि इति प्रजापतिनापृष्ट इन्द्रो होवाच । यथैवेत्यादि पश्यामि पर्य्यन्तं स्वानुभवं श्रावयामास। अर्थस्तु पूर्वोक्त एव ॥ २ ॥

अनुवादः—वह इन्द्र समित्पाणि हो पुनरपि लौट आये प्रजापति ने उनसे पूछा कि हे इन्द्र ! विरोचन के साथ आप शान्त हृदय होकर चले गये थे पुनः किस कामना से आये । इन्द्र बोले कि हे भगवन् ! इस शरीर के साध्वलङ्कृत होने पर यह (छाया पुरुष ) भी साध्वलङ्कृत, सुवसन होने पर सुवसन, परिष्कृत होने पर परिष्कृत जैसे ही होता है । वैसे ही इस के अन्ध होने पर भी अन्ध, काने होने पर काना, छिन्न होने पर छिन्न होता है । और इसी शरीर के नष्ट होने पर यह भी नष्ट होता है । अतः इस में मैं भोग्य नहीं देखता हूं ॥ २ ॥

पदार्थः—( सः ) वह इन्द्र ( समित्पाणिः ) पुनः ब्रह्मचर्य साधन सम्पन्न हो ( पुनः+एयाय ) पुनरपि आचार्य प्रजापति के निकट आये ( तम्+ह ) आये हुए उस इन्द्र को देख ( प्रजापतिः+उवाच ) प्रजापति ने पूछा कि ( मघवन् ) हे मघवन् ! इन्द्र ! ( विरोचनेन×सार्धम् ) विरोचन के साथ (शान्तहृदयः) शान्त हृदय होकर (यत्+प्राब्राजीः) चले गये थे तब ( पुनः ) पुनः ( किम्+इच्छन् ) क्या कामना करते हुए ( आगमः ) आप यहांआये (इति) (सः+ह+उवाच ) तब इन्द्र बोले (यथा+एव) यथैव इत्यादि । इन सबों के अर्थ पूर्व में हो चुके हैं ॥ २ ॥

**एवमेवैष मघवन्निति होवाचैतं त्वेवं ते भूयोऽनुव्याख्यास्यामि । वसाऽपराणि द्वात्रिंशतं वर्षाणीति । स हापराणि द्वात्रिंशतं वर्षाण्युवास । तस्मै होवाच ॥ ३ ॥**

एवम् । एव । एषः । मघवन् । इति । ह । उवाच । एतम् । तु । एव । ते । भूयः। अनुव्याख्यास्यामि । वस । अपराणि । द्वात्रिंशतम् । वर्षाणि । इति । सः । ह । अपराणि । द्वात्रिंशतम् । वर्षाणि । उवास । तस्मै । ह । उवाच ॥ ३ ॥

भाष्यम्—हे मघवन् इन्द्र ! एवमेव। यथा त्वमात्थ तथैव एष आत्मास्ति । सम्यक् त्वया तर्कितम्। इति होवाच प्रजापतिः। हे इन्द्र! एतमात्मानम्+तु+एव ते तुभ्यं। भूयोऽनुव्याख्यास्यामि । व्याख्यातमपि पुनरपि व्याख्यास्यामि । हे सौम्य ! अपराणि द्वात्रिंशतं वर्षाणि । मम समीपे वस निवासं कुरु । इत्याचार्यवचनं श्रुत्वा स तत्त्वजिज्ञासुरिन्द्रः अपराणि द्वात्रिंशतं वर्षाणि प्रजापतौ । उवास । उषितवान् । तस्मै इन्द्राय कष्टतपसे वक्ष्यमाणं वचनमुवाच ॥ ३ ॥ इति नवमखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ९ ॥

अनुवादः—प्रजापति ने कहा कि हे इन्द्र ! यह आत्मा ऐसा ही है। इसी का अनुव्याख्यान पुनरपि तुम से कहेंगे फिर भी बत्तीसवर्ष निवास करो । वह इन्द्र पुनः बत्तीसवर्ष निवास करता रहा । तब उस से प्रजापति बोले ॥ ३ ॥

पदार्थः—( मघवन् ) हे इन्द्र! ( एषः ) यह आत्मा ( एवम्+एव ) ऐसा ही है अर्थात् जैसा तुमने तर्क किया है वह सर्वथा ठीक है ( इति+ह+उवाच ) प्रजापति इस प्रकार इन्द्र से पुनः बोले ( एतम्+तु+एव ) हे इन्द्र ! इसी आत्मा का तो ( ते ) तुझ से ( भूयः ) फिर ( अनुव्याख्यास्यामि ) अनुव्याख्यान करूंगा हे इन्द्र! ( अपराणि ) अन्य और ( द्वात्रिंशतम् ) बत्तीस ( वर्षाणि ) वर्ष ( वस ) मेरे निकट वास कर इस आज्ञा को पा ( सः+ह ) वह इन्द्र ( अपराणि+द्वात्रिंशतम् ) और बत्तीस ( वर्षाणि ) वर्ष ( उवास ) प्रजापति के निकट वास करने लगा ( तस्मै ) उस से (ह+उवाच ) प्रजापति बोले ॥ ३ ॥

इति नवमखण्डस्य भाषाभाष्यं समाप्तम् ॥ ९ ॥

## अथ दशमः खण्डः

**य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज। सहाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥**

यः । एषः । स्वप्ने । महीयमानः । चरति । एषः । आत्मा । इति । ह । उवाच । एतद् । अमृतम् । अभयम् । ब्रह्म । इति । सः । ह । शान्तहृदयः । प्रवव्राज । सः । ह । अप्राप्य । एव । देवान् । एतद् । भयम् । ददर्श । तद् । यदि । अपि इदम् । शरीरम् । अन्धम् । भवति । यदि । सः । अनन्धः । भवति । स्रामम् । अस्रामः । न । एव । एषः । अस्य । दोषेण । दुष्यति ॥ १ ॥

भाष्यम्—य एष इति । य आत्माऽपहतपाप्मत्वादिलक्षणः य एषोऽक्षिणीत्यादिना पूर्वव्याख्यातः । एष सः । कोऽसौ । यः आत्मा । स्वप्ने महीयमानः । स्त्र्यादिभिः पूज्यमानः । सन् । चरति । अनेकविधान् स्वप्नभोगान् अनुभवतीत्यर्थः । एष आत्मेति होवाचेत्यादि समानम् । सह प्रजापतिनैवएवमुक्तइन्द्रः । शान्तहृदयः । लब्धात्मा इव प्रवव्राज जगाम । मार्गे गच्छन् प्रजापतिवचनं पुनः पुनर्विवेचयन् देवान् । अप्राप्यैव एतद् भयं वक्ष्यमाणं भयं ददर्श । तद्भयं दर्शयति । तत् तत्र स्वप्ने यद्यपि । इदं शरीरमन्धं भवति । स आत्मा स्वप्नवाननन्धो भवति । यदि । यद्यपि इदं शरीरंस्रामंकारं भवति तथापि । तथापि अयमात्मा । अस्राम एव भवति । इत्थम् । अस्य शरीरस्य दोषेण । न वै न जातु । एष आत्मा दुष्यति दूषितो भवति ॥ १ ॥

अनुवादः—जो यह आत्मा स्वप्न में पूज्यमान होकर विचरण करता है वह यह आत्मा है इस प्रकार प्रजापति कह पुनः बोले कि यह अमृत अभय है यह बड़ा है । यह सुन वह इन्द्र शान्तहृदय हो वहां से चले । देवों को न पाकर ही इस भय को देखा कि उस स्वप्न में तो यद्यपि यह शरीर अन्ध भी हो तो वह स्वप्नात्मा अनन्ध ही होता है । यद्यपि यह शरीर स्राम रहे तो भी यह आत्मा अस्राम रहता है इस प्रकार इस ( शरीर ) के दोष से यह कदापि दूषित नहीं होता है ॥ १ ॥

पदार्थः—( यः ) जो आत्मा अपहतपाप्मत्वादि लक्षण सहित पूर्व में कहा गया है और जो आत्मा नेत्र में दीखता है । इत्यादि व्याख्यान हुआ है ( एषः ) वह यह है । कौन है । सो कहते हैं । जो ( स्वप्ने ) स्वप्नावस्था में ( महीयमानः ) स्त्री पुत्र धनधान्यादि विविध मनोरथों से पूज्यमान होता हुआ ( चरति ) विविधभोगों का अपने तांई अनुभव करता है हे इन्द्र ! ( एषः+आत्मा+इति ) वह यह आत्मा है ( इति+ह+उवाच ) इन्द्र को इतना कह पुनः बोले ( एतद्+अमृतम् ) यह अमृत है । यह अभय है । और यह ब्रह्म=बड़ा है ( इति ) इस उपदेश को पा ( सः+ह ) वह इन्द्र ( शान्तहृदयः ) शान्त हृदय हो (प्रवव्राज) वहां से चला । ( सः+ह ) उस प्रसिद्ध इन्द्र ने ( देवान् ) देवों को ( अप्राप्य+एव ) न पाकरके ही ( एतद्+भयम् ) इस भय को ( ददर्श ) देखा

(यदि+अपि) यद्यपि (तत्) उस स्वप्नावस्था में (इदं+शरीरम्) यह वाह्य शरीर (अन्धम्+भवति) अन्धा रहता है तथापि (सः) वह स्वप्नात्मा (अनन्धः+भवति) अनन्ध अन्धा नहीं होता है (यदि+स्रामम्) यदि यह शरीर काना रहता है तथापि (अस्रामः) काणत्वरहित ही रहता है अर्थात् (अस्य+दोषेण) इस वाह्य शरीर के दोष से (न+वा+एषः+दुष्यति) कभी नहीं यह दूषित होता है ॥ १ ॥

**न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव । नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

न । वधेन । अस्य । हन्यते । न । अस्य । स्राम्येण । स्रामः । घ्नन्ति । तु । एव । एनम् । विच्छादयन्ति । इव । अप्रियवेत्ता । इव । भवति । अपि । रोदिति । इव । न । अहम् । अत्र । भोग्यम् । पश्यामि । इति ॥ २ ॥

भाष्यम्ः—न वधेनेति । अस्य शरीरस्य दोषेणायं स्वप्नात्मा न दुष्यतीति यदुक्तं तदेव पुनः कथयति न वधेनेत्यादिना । अस्य शरीरस्य वधेन घातेन अयं स्वप्नात्मा न हन्यते । हिंस्यते । न अस्य शरीरस्य स्राम्येण स्रामत्वेन विकलत्वेन विकारेणेत्यर्थः । अयं स्रामो भवति नायं विकलोऽङ्गहीनो वा भवति । एतत्सर्वं सत्यं किन्त्वयमात्मापि नापहतपाप्मत्वादिलक्षणो दृश्यते । कथमेतत् । एनम् । स्वप्नात्मानन्तु । स्वप्नेमहीमानतादशायामपि विद्यमानम् । केचन घ्नन्त्येव । घ्नन्तीव हिंसंतीव अत्रैव शब्द इवार्थः । उत्तरत्र तथैव दर्शनात् । न हन्यते इति प्रयोगाच्च । गजादय आगत्य आत्मानं घ्नन्तीव स्वप्ने दृश्यन्ते । तेनात्मा महद्दुःखमनुभवन् मृतइव तिष्ठति । तथा केचन एनमात्मानं विच्छादयन्तीव । विद्रावयन्तीव । तथा स्वयमपि कदाचित् अप्रियवेत्ता इव भवति । मम पुत्रोमृतः । कलत्रं कूपे पतितम् । मम सर्वे बान्धवाः पंचत्वं गताः । मां बध्वा केपि नयन्ति । इत्याद्यप्रियं स्वप्ने अवलोक्य अप्रियवेत्ता इव भवति । अप्रियं दृष्ट्वा स्वयं रोदितीव । रुदन् लक्ष्यते । अतोत्रापि आत्मदर्शने नाहं भोग्यं पश्यामि ॥ २ ॥

अनुवादः—इस (शरीर) के बध से (यह स्वप्नात्मा) मारा नहीं जाता है इस (शरीर) के वैक्लव्य से (यह) विकल नहीं होता । परन्तु इस (स्वप्नात्मा) को कोई मानो मार रहे हैं । कोई मानो भगा रहे हैं । यह स्वयं अप्रियवेत्तासा हो रहा है और यह रोता हुआ सा हो रहा है । अतः इस में भी मैं भोग्य फलको नहीं देखता हूं ॥ २ ॥

पदार्थः-(अस्य) इस शरीर के (बधेन) बध से (न+हन्यते) यह स्वप्नात्मा हत नहीं होता (अस्य) इस शरीर की (स्राम्येण)काणत्वादि विकलता से (न+स्रामः) यह विकल नहीं होता (तु) परन्तु (एनम्) इस स्वप्नात्मा को (घ्नन्ति+तु+एव) मानो कोई मार रहे हैं और (विच्छादयन्ति+इव) मानो कोई भगा रहे हैं (अप्रियवेत्ता+इव+भवति)और इस हेतु स्वयं यह आत्माअप्रियवेत्तासा हो रहा है (अपि+रोदितीव) और इसी हेतु रोता हुआसा भी प्रतीत होता है (अत्र) इस अध्यात्म ज्ञान विषय में (न+अहम्) मैं नहीं (भोग्यम्) भोग्य=कल्याण को (पश्यामि+इति) देखता हूं ॥ २ ॥

**समित्पाणिः पुनरेयाय। तꣳह प्रजापतिरुवाच-मघवन्यच्छान्त हृदय.प्राव्राजीः किमिच्छन् पुनरागम इति?। स होवाच-तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति। यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥**

सः। समित्पाणिः। पुनः। एयाय। तम्। ह। प्रजापतिः। उवाच। मघवन्। यत्। शान्तहृदयः। प्राव्राजीः। किम्। इच्छन्। पुनः। आगमः। इति। सः। ह। उवाच। तद्। यदि। अपि। इदम्। भगवः। शरीरम्। अन्धम्। भवति। अनन्धः। सः। भवति। यदि। स्रामम्। अस्रामः। न। एव। एषः। अस्य। दोषेण। दुष्यति ॥ ३ ॥

भाष्यम्-स इति। नाहमत्र भोग्यं पश्यामीति मार्गे पुनः२ विवेचयन् भयमवलोक्य समित्पाणिर्ब्रह्मचर्यसाधनसम्पन्नःसन् पुनरेयाय। पुनरपि प्रजापतिमाजगाम। तं ह प्रजापतिरुवाचेत्यादि दुष्यतीत्यन्तं पूर्वं व्याख्यातमेव ॥ ३ ॥

अनुवाद—फिर इन्द्र, ब्रह्मचर्य साधन सम्पन्न होकर प्रजापति के निकट आये उन से प्रजापति बोले कि हे मघवन्! जो आप शान्त हृदय हो कर यहां से चले गये थे तो किस इच्छा से पुनरपि आये यह सुन इन्द्र बोले कि हे भगवन्! यद्यपि यह शरीर अन्ध होता है तथापि वह स्वप्नात्मा अन्धा नहीं होता। यद्यपि यह शरीर अङ्गविकल रहता तथापि यह स्वप्नात्मा अङ्ग विकल नहीं होता है अर्थात् इस शरीर के दोष से यह कदापि दूषित नहीं होता ॥ ३ ॥

पदार्थः—(सः) वे इन्द्र (समित्पाणिः) हाथ में यज्ञ सामग्री ले अर्थात् ब्रह्मचर्य के साधन से युक्त हो (पुनः+एयाय) फिर प्रजापति के निकट आये (तम्+

ह) उन से (प्रजापतिः+उवाच) प्रजापति ने पूछा (यत्) कि ( हे मघवन् ) इन्द्र (शान्तहृदयः) आप शान्त हृदय होकर (प्राव्राजीः) चले गये थे तब पुनः (किमिच्छन्) किस पदार्थ की इच्छा करते हुए ( पुनः+आगमः) फिर लौट आये? ( इति ) ( सः+ह+उवाच ) वे इन्द्र बोले ( भगवः ) हे भगवन् ! ( यद्यपि ) यद्यपि ( तत्+इदम् ) यह ( शरीरम् ) शरीर ( अन्धम्+भवति ) अन्ध रहता है ( सः) वह स्वप्नात्मा ( अनन्धः भवति) अन्धा नहीं होता है (यदि+स्रामम् ) यादि यह शरीर अंगविकल रहता है तथापि ( अस्रामः) यह स्वप्नात्मा अविकल होता है ( अस्य+दोषेण ) इस शरीर के दोष से ( एषः ) यह स्वप्नात्मा ( नैव ) कदापि नहीं ( दुष्यति ) दूषित होता है ॥ ३ ॥

**न वधेनास्य हन्यते नाऽस्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाऽप्रियवेत्तेव भवत्यपि रोदितीव। नाऽहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतन्त्वेव ते भूयोऽनुव्याख्यास्यामि । वसाऽपराणि द्वात्रिंशतं वर्षाणीति । स हाऽपराणि द्वात्रिंशतं वर्षाण्युवास । तस्मै होवाच ॥ ४ ॥**

न । वधेन । अस्य । हन्यते । न । अस्य । स्राम्येण । स्रामः । घ्नन्ति । तु । एव । एनम् । विच्छादयन्ति । इव । अप्रियवेत्ता । इव । भवति । अपि । रोदिति । इव । न । अहम् । अत्र । भोग्यम् । पश्यामि । इति । एवम् । एव । एषः । मघवन् । इति । ह । उवाच । एतम् । तु । एव । ते । भूयः । अनुव्याख्यास्यामि । वस । अपराणि । द्वात्रिंशतम् । वर्षाणि । इति । सः । ह । अपराणि । द्वात्रिंशतम् । वर्षाणि । उवास । तस्मै । ह । उवाच ॥ ४ ॥

भाष्यादिकं सर्वं पूर्ववत् ॥ ४ ॥

इति दशमखण्डस्य संस्कृतभाषाभाष्ये समाप्ते ॥ १० ॥

## अथैकादशः खण्डः

**तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवानेतद्भ-**

**ददर्श। नाह खल्वयमेवꣳ सम्प्रत्यात्मानं जानात्यय-महमस्मीति नो एवेमानि भूतानि। विनाशमेवापीतो भवति। नाहमत्र भोग्यं पश्यामीति ॥ १ ॥**

तद्। यत्र। एतत्। सुप्तः। समस्तः। सम्प्रसन्नः। स्वप्नम्। न। विजानाति। एषः। आत्मा। इति। ह। उवाच। एतद्। अमृतम्। अभयम्। एतद्। ब्रह्म। इति। सः। ह। शान्तहृदयः। प्रवव्राज। सः। ह। अप्राप्य। एव। देवान्। एतद्। भयम्। ददर्श। नाह। खलु। अयम्। एवम्। सम्प्रति। आत्मानम्। जानाति। अयम्। अहम्। अस्मि। इति। नो। एव। इमानि। भूतानि। निवाशम्। एव। अपीतः। भवति। न। अहम्। अत्र। भोग्यम्। पश्यामि। इति ॥ १ ॥

भाष्यम्—तदिति। हे इन्द्र! य आत्मा अक्षिणि त्वया दृष्टः। स्वप्ने च महीयमानश्चरति। स एषोऽस्ति। कोऽस्ति? । तदेतद्। स एषः। इह लिङ्गव्यत्ययः। यत्र यस्यां दशायां सुषुप्तावित्यर्थः। सुप्तः स्वप्नविरहितः। समस्तः स्वेन सार्धं संमिलितः। अतः। सम्प्रसन्नः स्वानन्दमनुभवन् सन्। स्वप्नं न जानाति। एष स आत्माऽपहतपाप्मत्वादिलक्षणः। इति कथयित्वा पुनरपि प्रजापतिर्होवाच। एतदमृतमित्यादि समानम्। तत्रापि दोषं ददर्श। कथम्? सुषुप्तिस्थ आत्मा। अयमहमस्मीति। एवं सम्प्रति। सम्यग् नैवात्मानं जानाति। अयमहमस्मि। एवं भूतोस्मि एवं भूतोस्मि। इति। नाह। नैव। खलु जानाति। नो एव। न चैव। इतराणि इमानि भूतानि कानिचिज्जानाति। तस्यां सुषुप्त्यवस्थायां नात्मा स्वमात्मानं जानाति नचान्यत् किमपि वेत्ति। तेनानुमीयते। विनाशमेव। अपीतो गतः। भवति। विनाशमेव प्राप्तोभवतीत्यर्थः। अतोऽत्रापि अस्मिन्नप्यध्यात्मविज्ञाने नाहं भोग्यं पश्यामि। इति ॥ १ ॥

अनुवाद—सो यह आत्मा जहां सुप्त, समस्त और सम्प्रसन्न हो स्वप्न को नहीं देखता है। यह आत्मा है। इतना कह पुनः प्रजापति बोले कि यह अमृत, अभय, और यह ब्रह्म (बड़ा) है। यह सुन वे इन्द्र शान्तहृदय हो वहां से चले। परन्तु देवों को न पाकर ही इन्द्र को यह भय देख पड़ा। यह (सुषुप्तात्मा) "मैं यह हूं" इस प्रकार अच्छी तरह से अपने को नहीं जानता है और न "इन प्राणियों को" जानता है (यह आत्मा) विनाश को ही प्राप्त होता है। अतः इस (आत्मदर्शन) में भी भोग्य=कल्याण को मैं नहीं देखता हूं ॥ १ ॥

पदार्थः—( तत्+एतत् ) सो यह आत्मा ( यत्र ) जिस सुषुप्ति अवस्था में (सुप्तः ) सुप्त=स्वप्न को न देखता हुआ ( समस्तः ) समस्त=अपने में अवस्थित इसी हेतु ( सम्प्रसन्नः ) सम्यग् प्रसन्न=निज आनन्द का अनुभव करता हुआ ( स्वप्नम् ) स्वप्न को ( न ) नहीं ( विजानाति ) जानता है ( एषः+आत्मा ) यह आत्मा अपहत पाप्मादि है ( इति+होवाच ) इतना कह प्रजापति पुनः बोले ( एतद्+अमृतम् ) यह अमृत इत्यादि पूर्ववत् जानना । इन्द्र ने भय को देखा सो आगे कहते हैं ( अयम् ) यह सुषुप्तात्मा ( अयम्+अहम्+अस्मि ) यह मैं हूं ( एवम् ) इस प्रकार ( सम्प्रति ) अच्छी तरह से ( आत्मानम् ) अपने को ( खलु ) निश्चयरूप से ( नाह ) नहीं (जानाति) जानता है ( नो+एव ) और नहीं ( इमानि+भूतानि ) इन प्राणियों को जानता है । इस से विदित होता है कि ( विनाशम् ) विनाश को ( अपीतः ) प्राप्त (भवति) होता है । इस हेतु (अत्र) इस आध्यात्मिक विद्या में भी (न+अहम्+भोग्यम्+पश्यामि) मैं भोग्य सुख को नहीं देखता हूं ( इति ) इस प्रकार संदिग्ध हो पुनः इन्द्र मार्ग से आचार्य्य के निकट लौट आये ॥ १ ॥

**स समित्पाणिः पुनरेयाय । तꣳह प्रजापतिरुवाच-मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति ? स होवाच-नाह खल्वयं भगव एवꣳ सम्प्रत्यात्मानं जानात्य "यमहमस्मीति" नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

सः । समित्पाणिः । पुनः । एयाय । तम् । ह । प्रजापतिः । उवाच । मघवन् । यत् । शान्तहृदयः । प्राव्राजीः । किम् । एव । इच्छन् । पुनः । आगमः । इति । सः । ह । उवाच । नाह । खलु । अयम् । भगवः । एवम् । सम्प्रति । आत्मानम् । जानाति । अयम् । अहम् । अस्मि । इति । नो । एव । इमानि । भूतानि । विनाशम् । एव । अपीतः । भवति । न । अहम् । अत्र । भोग्यम् । पश्यामि । इति ॥ २ ॥

भाष्यम्—स इति । समिधः समिदुपलक्षितानि ब्रह्मचर्यसाधनानि पाणौ हस्ते यस्य सः । स इन्द्र पूर्वोक्तं दोषमवलोक्य भोग्यमनवगम्यच । पुनरपि एयाय प्रजापतिमा-

जगाम । आगतं तमिन्द्रंप्रति प्रजापतिरुवाच । हे मघवन् इन्द्र ! त्वं यच्छान्तहृदयः। अस्मात्स्थानात् । प्राव्राजीः । अगमः । तर्हि । किमेव इच्छन् । किं कामयमानः । पुनस्त्वम् । आगमः । आगच्छः। इति प्रजापतिना पृष्ट इन्द्रः सर्वं नाहेत्यारभ्य पश्यामिपर्यन्तमुवाच । पदानि पूर्वं व्याख्यातानि ॥ २ ॥

अनुवाद—वह इन्द्र पुनरपि समित्पाणि हो लौट आये, उस इन्द्र से प्रजापति ने पूछा कि हे इन्द्र ! तुम जो शान्तहृदय होकर चले गये थे तो पुनः किस कामना से लौ-ट आये हो। वह इन्द्र बोले कि हे प्रजापते ! यह ( सुषुप्तात्मा ) "मैं यह हूं" इस प्र-कार अच्छी तरह निश्चितरूप से अपने को नहीं जानता और न इन प्राणियों को जानता । यह नाश को प्राप्त हो जाता है । अतः इसमें मैं भोग्य को नहीं देखता हूं ॥ २ ॥

पदार्थः—( सः ) वह इन्द्र ( समित्पाणिः ) ब्रह्मचर्य साधन सम्पन्न हो ( पुनः+एयाय) पुनः रास्ते से प्रजापति के निकट लौट आये (तम्+ह+प्रजापतिः+उवाच) उनसे प्रजापति ने पूछा कि ( मघवन् ) हे इन्द्र ! ( यत+शान्तहृदयः ) जो तुम शान्त हृदय होकर ( प्राव्राजीः ) यहां से चले गये थे तब ( किम्+एव+इच्छन् ) किस पदार्थ की इच्छा करते हुए ( पुनः+आगमः ) पुनः लौट आये हैं (इति+सः+ह+उवाच) प्रजा-पति के इस वचन को सुन वह इन्द्र बोले ( नाह ) इत्यादि पूर्ववत् जानना ॥ २ ॥

**एवमेवैष मघवन्निति होवाचैतंत्वेव ते भूयोऽनुव्या-ख्यास्यामि । नो एवान्यत्रैतस्माद्वसाऽपराणि पञ्च वर्षाणीति । सहापराणि पञ्च वर्षाण्युवास । तान्ये-कशतꣳ सम्पेदुरेतत्तद्यदाहुरेकशतꣳ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास । तस्मै होवाच ॥३॥**

एवम् । एव । एषः । मघवन् । इति । ह । उवाच । एतम् । तु । एव । ते । भूयः । अनुव्याख्यास्यामि । नो । एव । अन्यत्र । एतस्माद् । वस । अपराणि । प-ञ्च । वर्षाणि । इति । सः । ह । अपराणि । पञ्च । वर्षाणि । उवास । तानि । एक-शतम् । सम्पेदुः । एतत् । तत् । यद । आहुः । एकशतम् । ह । वै । वर्षाणि । मघवान् । प्रजापतौ । ब्रह्मचर्यम् । उपास । तस्मै । ह । उवाच ॥ ३ ॥

भाष्यम्—एवमेवेति । हे मघवन् इन्द्र! एवमेव । यत्त्वमात्थ । तत्सत्यम् । एष आत्मा तादृगेव । इति प्रजापतिर्होवाच । हे इन्द्र ! एतमेवात्मानन्तु ते तुभ्यम् । भूयोऽनुव्याख्यास्यामि । पूर्वं व्याख्यातमपि पुनः व्याख्यास्यामि । एतस्मात् । पूर्वं त्रिभिः पर्य्यायैर्मयोक्तादात्मनः । अन्यत्र अन्यम् । आत्मानम् । नो एव नैव कञ्चन । व्याख्यास्यामि किन्तु । तमेवात्मानम् । त्वयाऽविदितम् । अनुव्याख्यास्यामि । त्वम् । अपराणि पञ्चवर्षाणि पुनरपि मम सन्निकटे । वस वासं कुरु । सहाचार्य्यवचने विश्वस्तः । अपराणि पञ्चवर्षाणि । प्रजापतौ । उवास । तानि । सर्व्वाणि वर्षाणि मिलित्वा । एकशतम् । वर्षाणि सम्पेदुः । सम्पन्नानि बभूवुः । तदेतत् । तस्मात्कारणात् । एते शिष्टाः । आहुः । यत् । मघवानिन्द्रः । प्रजापतौ आचार्ये । एकशतम् । हवै । वर्षाणि । ब्रह्मचर्य्यम् । उवास । उषितवान् । इति । तस्मै कष्टतपसे पुनरपि प्रजापतिरुवाच वक्ष्यमाणं वचनम् ॥ ३ ॥

इत्येकादशखण्डस्य संस्कृतभाष्यं समाप्तम् ॥ ११ ॥

अनुवाद—हे मघवन्! वैसा ही यह ( आत्मा ) है । इतना कह प्रजापति फिर बोले कि इसी का तो पुनः तुमसे अनुव्याख्यान करूंगा । इस से भिन्न ( आत्मा ) का नहीं तुम और पांचवर्ष निवास करो । इन्द्र इस आज्ञा को पा और पांचवर्ष वहां ब्रह्मचर्य करते रहे । वे सब मिलकर एकसौ एक वर्ष ब्रह्मचर्य के हुए । इस कारण आजतक शिष्ट लोक कहते हैं कि इन्द्र, प्रजापति के निकट निश्चितरूपसे एकसौएक वर्ष ब्रह्मचर्य करते रहे । तत्पश्चात् फिर उनसे प्रजापति बोले ॥ ३ ॥

पदार्थः-( मघवन् ) हे इन्द्र! ( एषः ) यह सुषुप्तात्मा ( एवमेव ) वैसा ही है ( इति+ह+उवाच ) इतना कह प्रजापति फिर बोले कि हे इन्द्र ! (ते) तुह्मारे लिये (एतम्+तु+एव ) इसी का तो ( भूयः ) फिर ( अनुव्याख्यास्यामि ) अनुव्याख्यान करूंगा ( एतस्मात् ) इस आत्मा से ( अन्यत्र ) दूसरे का ( न+एव ) नहीं व्याख्यान करूंगा किन्तु उसी आत्मा का अनुव्याख्यान करूंगा । ( अपराणि+पञ्चवर्षाणि ) और पांच वर्ष ( वस ) वास करो ( इति ) ( सः ) वे इन्द्र ( अपराणि+पञ्चवर्षाणि ) और पांचवर्ष ( उवास ) ब्रह्मचर्य करते रहे ( तानि ) वे सब मिलकर ( एकशतम् ) एकसौएकवर्ष ( सम्पेदुः ) सम्पन्न हुए ( तत् ) इस हेतु ( एतत् ) इसको ( आहुः ) शिष्ट लोग कहते हैं ( यत् ) कि ( एकशतम्+वर्षाणि ) एकसौएक वर्ष ( ह+वै ) निश्चित रूप से ( मघवान् ) इन्द्र ( प्रजापतौ ) प्रजापति के निकट ( ब्रह्मचर्यम्+उवास ) ब्रह्मचर्य करते रहे ( तस्मै+ह+उवाच ) उस इन्द्र के लिये प्रजापति वक्ष्यमाण प्रकार से उपदेश देने लगे ॥ ३ ॥ इत्येकादशखण्डस्य भाषाभाष्यंसमाप्तम् ॥ ११ ॥

—॥ अथ द्वादशः खण्डः ॥—

## मघवन्मर्त्यं वा इदꣳ शरीरमात्तं मृत्युना ✳

✳ "मघवन्मर्त्यं वै मरणधर्म्मीदं शरीरं। यन्मन्यसेऽक्ष्याधारादिलक्षणः सम्प्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति। शृणु तत्र कारणम्। यदिदं शरीरं वै यत्पश्यासि तदेतन्मर्त्यं विनाशि। तच्चात्तं मृत्युना ग्रस्तं सन्ततमेव। कदाचिदेव म्रियत इति मर्त्यमित्युक्ते न तथा सन्त्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते इति वैराग्यार्थं विशेष इत्युच्यते। आत्तं मृत्युनेति। कथं नामदेहाभिमानतो विरक्तः सन्निवर्त्तेत इति। शरीरमित्यत्र सहेन्द्रियमनोभिरुच्यते। तच्छरीरमस्य सम्प्रसादस्य त्रिस्थानतया गम्यमानस्यामृतस्य मरणादिदेहेन्द्रियमनोधर्मवर्जितस्येत्येतत्। अमृतस्येत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत्सावयवत्वमूर्त्तिमत्वे मा भूतामित्यात्मनो भोगाधिष्ठानं। आत्मनो वा सत ईक्षितुस्तेजोऽवन्नादिक्रमेणोत्पन्नमिधष्ठानं। जीवरूपेण प्रविश्य सदेवाधितिष्ठत्यस्मिन्निति वाधिष्ठानं। यस्येदमीदृशं नित्यमेव मृत्युग्रस्तं धर्माधर्मजनितत्वात्प्रियाप्रियवदधिष्ठानं तदधिष्ठितस्तद्वान् सशरीरो भवति। अशरीरस्वभा-

भाषार्थ–हे इन्द्र! यह शरीर मरण धर्मवाला है इस में सन्देह नहीं परन्तु अक्षि-में रहने वाला और स्वप्न सुषुप्ति में विचरण करने वाला और परमानन्द युक्त जैसा कि मैंने वर्णन किया है वह भी मरणाधर्म वाला है ऐसा जो तुम समझते हो इसका कारण सुनो? जिस इस शरीर को तुम देखते हो वह विनाशी है और सर्वदा मृत्यु ग्रस्त है ग्रस्त पद यहां इस लिये कहा गया है कि "यह शरीर कदाचित् मरता है" इतना कहने से उतना भय लोगों को नहीं होता है जितना कि "यह शरीर मृत्यु से आत्त" अर्थात् ग्रस्त है इतना कहने से होता है इस हेतु वैराग्य के लिये "मृत्युना आत्तम्" इतना पद कहागया है। वह शरीर आत्मा का अधिष्ठान, यद्यपि आत्मा आनन्द युक्त अमृतस्वरूप मरणादि देहेन्द्रिय मनो धर्म रहित है अर्थात् शरीर रहित है तथापि इस आत्मा का यह शरीर अधिष्ठान होता है। शङ्का अमृतपद कह देने से ही अशरीर का बोध होता पुनः अशरीर शब्द कहने का क्या प्रयोजन? उत्तर वायु आदिवत् यह आत्मा भी सावयव और मूर्तिमान् कोई वस्तु है ऐसा न कोई समझे। इस हेतु अशरीर पद कहा गया। अधिष्ठान शब्द से तात्पर्य यह है कि यह आत्मा इस शरीर के द्वारा ही सुख दुःख का भोग करता है। यद्यपि आत्मा का शरीर कोई नहीं तथापि सुख दुखादि भोग के लिये उसको शरीर धारण करना पड़ता है। इस हेतु यह "सशरीर" कहलाता है

# तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः

वस्यात्मनस्तदेवाऽहं शरीरं शरीरमेव चाहमित्यविवेकादात्मभावः सशरीरत्वमत एव सशरीरः सन्नात्तोग्रस्तः प्रियाप्रियाभ्यां । प्रसिद्धमेतत्तस्य च न वै सशरीरस्य सतः प्रियाप्रिययोर्वाह्यविषयसंयोग वियोगयोर्निमित्तयोर्वाह्यविषयसंयोगवियोगौ ममेति मन्यमानस्यापहतिर्विनाश उच्छेदः सन्ततिरूपयोर्नास्तीति । तं पुनर्देहाभिमानादशरीरस्वरूपविज्ञानेन निवर्त्तताऽविवेकज्ञानमशरीरं सन्तं प्रियाऽप्रिये न स्पृशतः । स्पृशिः प्रत्येकं सम्बध्यत इति प्रियं न स्पृशत्यप्रियं न स्पृशतीति वाक्यद्वयं भवति । न म्लेच्छाशुच्यधार्म्मिकैः सह सम्भाषेतेति यद्वत् । धर्म्माधर्मकार्ये हिताहिते यतोऽशरीरता तु स्वरूपमिति । तत्र धर्म्माधर्मयोरसम्भवात्तत्कार्यभावो दूरत एवेत्यतो न प्रियाप्रिये स्पृशतः ।

ननु यदि प्रियमप्यशरीरं न स्पृशतीति यन्मघवतोक्तं सुषुप्तस्थो विनाशमेवापीतो भवतीति तदेवेहाप्यापन्नम् । नैष दोषो धर्माधर्मकार्ययोः शरीरसम्बन्धिनोः प्रियाप्रिययोः प्रतिषेधस्य विवक्षितत्वात् । अशरीरं न प्रियाप्रिये स्पृशत इत्यादिश्रुतिः । आगमापायि-

और जब सशरीर होता है तब इस आत्मा को बाहर के संयोग और वियोग के निमित्त यह मेरा वाह्य विषय का संयोग है । यह मेरा देह है, यह स्त्री है, यह पुत्र है, यह अन्य है इत्यादि, यह मेरा वाह्य विषय का वियोग है ऐसा मानलेता है इसहेतु शरीर में रहते हुए आत्मा के सुख दुःख का नाश कभी नहीं होता। परन्तु जब यह आत्मा देहाभिमान से छूट कर निज स्वरूप को पहिचानता है तब इस को सुख दुःख नहीं स्पर्श करता । न सुख स्पर्श करता न दुःख स्पर्श करता। क्योंकि सुख दुःख धर्म अधर्म का कार्य है अशरीता ( शरीर का अभाव ) आत्मा का स्वरूप है इस हेतु उस आत्मा में धर्माधर्म के न होने से उनके कार्य सुख दुःख तो दूर रहे इस हेतु सुख दुःख इसे स्पर्श नहीं करते ।

यहां शङ्का होती है कि जिस प्रकार से दुःख आत्मा को स्पर्श नहीं करता इस प्रकार सुख भी नहीं करता यदि यह अर्थ लिया जाय तो इस से तो यह सिद्ध हुआ कि आत्मा नष्ट हो जाता है । क्योंकि सुख दुःख इन दोनों में से कोई तो उस का चिन्ह रहना चाहिये । क्योंकि जिस प्रकार सुषुप्ति अवस्था में सुख दुःख के अभाव को देख कर इन्द्र ने अनुमान किया था कि उस अवस्था में आत्मा का अभाव हो जाता है परन्तु यह प्रत्यक्ष है कि सुषुप्ति अवस्था से जब जागृत अवस्था में प्राप्त होता

# प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरप-

नोर्हि स्पर्शशब्दो दृष्टो यथा शीतस्पर्श उष्णस्पर्श इति । न त्वग्नेरुष्णप्रकाशयोः स्वभावभूतयोरग्निना स्पर्श इति भवति । तथाग्नेः सवितुर्वोष्णप्रकाशवत्स्वरूपभूतस्याऽऽनन्दस्य प्रियस्यापि नेह प्रतिषेधो विज्ञानमानन्दमानन्दो ब्रह्मेति श्रुतिभ्यः । इहापि भूमैव सुखमित्युक्तत्वात् । ननु भूम्नः प्रियस्यैकत्वेऽसंवेद्यत्वात् । स्वरूपेणैव वा नित्यसंवेद्यत्वान्निर्विशेषतेति नेन्द्रस्य तदिष्टम् । नाह खल्वयं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो ए-

है तो वह कहता है कि मैंने आज सुख पूर्वक शयन किया एक भी स्वप्न नहीं देखा । इस अनुभव से बोध होता है कि सुषुप्ति अवस्था में सुख का अनुभव करने वाला कोई आत्मा था जो जाग्रत अवस्था में वैसा कहता है परन्तु आपका कथन है कि अशरीर अवस्था में आत्मा को सुख का भी अनुभव नहीं रहता है तो इस से तो यह सिद्ध हुआ कि सुषुप्ति अवस्था से भी कोई विलक्षण यह अवस्था है जिस में सुख का भी अभाव हो जाता है । एक प्रकार से यही सिद्ध होता है कि आत्मा का नाश हो जाता है । उत्तर—यहां प्रिय अप्रिय का तात्पर्य यह है कि धर्म अधर्म के कारण, जो शरीर के सम्बन्ध से सुख दुःख प्राप्त होता है, उस सुख दुःख का नाश होता है । और जो आत्मा में स्वभावतः सुख है उस के नाश से तात्पर्य नहीं । जैसे अग्नि में स्वभावतः उष्णता और प्रकाशता है उस उष्णता और प्रकाशता को देख कर कोई नहीं कहता है कि अग्नि को उष्णता और प्रकाशता स्पर्श करती है । स्पर्श शब्द का प्रयोग वहां होता है जहां बाहर से कुछ धर्म उस में प्राप्त होता हो अर्थात् नैमित्तिक धर्म के आने का नाम यहां स्पर्श है । इस हेतु नैमित्तिक प्रिय और अप्रिय इन दोनों का यहां निषेध किया गया है । स्वाभाविक सुख का नहीं । यदि यह कहो कि आत्मा में सुख तो स्वाभाविक है दुःख नहीं इस में क्या प्रमाण ? यद्यपि इस का निर्णय करना अति कठिन है तथापि शास्त्रों का यह सिद्धान्त है कि आत्मा में स्वभावतः सुख ही है दुःख नहीं क्योंकि "विज्ञानमानन्दमानन्दो ब्रह्म" इत्यादि श्रुति के प्रमाण से अर्थात् यह आत्मा आनन्द स्वरूप है और यहां पर भी भूमा ही सुख है यह कहा गया है इस हेतु स्वाभाविक आनन्द आत्मा में है दुःख नहीं ।

शङ्का—क्या आप का यह तात्पर्य है कि आनन्द और आत्मा में भेद नहीं, यदि ऐसा हो तो कदापि भी "मैं आनन्द भोक्ता हूं" ऐसा बोध आत्मा को नहीं होगा परन्तु मैं आनन्द का भोग करता हूं, मैं आनन्द से भिन्न हूं ऐसा बोध होना चा-

हतिरस्त्यशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः ॥१॥

वेमानि भूतानि विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीत्युक्तत्वात् । तद्धीन्द्रस्येष्टं यद्भूतानि चात्मानं च जानाति । न चाप्रियं किञ्चिद्वेत्ति । स सर्वांश्च लोकानाप्नोति सर्वांश्चकामान् येन ज्ञानेन । सत्यमेतदिष्टमिन्द्रस्येमानि भूतानि मत्तोऽन्यानि लोकाः कामाश्च सर्वे मत्तोऽन्येऽहमेषां स्वामीति । न त्वेतदिन्द्रस्य हितम् । हितञ्चेन्द्रस्य प्रजापतिना वक्तव्यम् । व्योमवदशरीरात्मतया सर्वभूतलोककामात्मत्वोपगमेन या प्राप्तिस्तद्धितमिन्द्राय वक्तव्यमिति प्रजापतिनाऽभिप्रेतम् । नतु राज्ञो राज्याप्तिवदन्यत्वेन । तत्रैवं सति कं केन विजानीयादात्मैकत्वे इमानि भूतान्यमहमस्मीति । नन्वस्मिन्पक्षे स्त्रीभिर्वा यानैर्वा स यदि

हिये इसी में पुरुषार्थ है इन्द्र का भी यही अभीष्ट था क्योंकि "नाह खल्वयं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानिभूतानि विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामि" इस अवस्था में यह जीव अपने को नहीं जानता है कि मैं यह हूं और न इन प्राणियों को जानता है : इस से सिद्ध होता है कि यह आत्मा बिनाश को प्राप्त हो जाता, मैं यहां कल्याण नहीं देखता । यह इन्द्र का कथन है । यदि आनन्द और आनन्दभोक्ता में अभेद इन्द्र मानता रहता तो फिर उसको इस अवस्था में भय नहीं प्राप्त होता । इस हेतु इन्द्र का अभिप्राय यह मालूम होता है कि ऐसा ज्ञान होना चाहिये कि जिस से वह जाने कि मैं हूं और इन प्राणियों को मैं जानता हूं मुझे सुख प्राप्त है दुःख नहीं मैंने सब लोक और कामना को प्राप्त किया इत्यादि । ऐसी शङ्का उठाकर पुनः शङ्कराचार्य उत्तर देते हैं कि यह आपका कथन सत्य है कि इन्द्र का इष्ट है कि ये सब प्राणी मुझ से भिन्न हैं ये सब लोक और कामनाएं मुझ से भिन्न हैं मैं इन का स्वामी हूं । ऐसा इन्द्र तो समझता है परन्तु यह इन्द्र का कल्याणकर नहीं है । परन्तु प्रजापति को उचित है कि जिससे प्रिय शिष्य इन्द्र का कल्याणकर हो वही उपदेश करें वह उपदेश तब हो सकता कि आकाशवत् सर्वव्यापक अशरीरी आत्मा के सब भूत सब लोक में अभेदतया सम्बन्ध के ज्ञान हो, यही इन्द्र को हितकर होगा यह अभिप्राय प्रजापति का है । जैसे राजा अपने से भिन्न राज्य को प्राप्त करता है वैसा इन्द्र न समझे । किन्तु राज्य और अपने में भेद न माने । तब आत्मा का एकत्व ज्ञान हो जाने से कौन किस को भिन्न दृष्टि से जाने अर्थात् यह मैं हूं और ये प्राणी हैं यह मिथ्या ज्ञान नष्ट हो जायगा और यही उपदेश इन्द्र के लिये हितकारी है ।

भगवन् । मर्त्यम् । वै । इदम् । शरीरम् । आत्तम् । मृत्युना । तत् । अस्य ।

पितृलोककामः स एकधा भवतीत्याद्यैश्वर्यं श्रुतयोऽनुपपन्नाः । न सर्वात्मनः सर्वफलसम्बन्धोपपत्तेरविरोधात् । मृद इव सर्वं घट करक कुण्डाद्यात्मिः । ननु सर्वात्मत्वे दुःखसम्बन्धोऽपि स्यादिति चेन्न । दुःखस्याप्यात्मत्वोपगमादविरोधः । आत्मन्यविद्याकल्पनानिमित्तानि दुःखानि रज्ज्वामिव सर्पादिकल्पनानिमित्तानि । सा चाविद्या शरीरात्मैकत्वस्वरूपदर्शनेन दुःखनिमित्तोच्छिन्नेति दुःखसम्बन्धाशङ्का न सम्भवति । शुद्धसत्त्वसङ्कल्पनिमित्तानान्तु कामानामीश्वरदेहसम्बन्धः सर्व्वभूतेषु मानसानां पर एव सर्वसत्त्वोपाधिद्वारेण भोक्तेति सर्वाविद्याकृत संव्यवहाराणां पर एवात्मास्पदं नान्योऽस्तीति वेदान्तसिद्धान्तः । य एषोऽक्षिणि पुरुषो दृश्यत इति च्छायापुरुष एव प्रजापतिनोक्तः स्वप्नसुषुप्तयोश्चान्य एव । न परोऽपहतपाप्मत्वादि लक्षणो विरोधादिति केचिन्मन्यन्ते । छायाद्यात्मनाञ्चोपदेशे प्रयोजनमाचक्षते । आदावेवोच्यमाने किल दुर्विज्ञेयत्वात्परस्यात्मनोऽत्यन्त वाह्य-

शङ्का–यदि ऐसा अर्थ समझते हो तो कई स्थानों में जो यह कहागया है कि वह मुक्त पुरुष विविध भोगों को भोगता है । उस के सङ्कल्प मात्र से पितर आदि उपस्थित होते हैं वह एक से अनेक होता है इत्यादि वर्णन कैसे घटेंगे । उत्तर–शङ्कराचार्य इस का उत्तर देते हैं कि सर्वात्मस्वरूप जो आत्मा है उस को सम्पूर्ण फलों से सम्बन्ध है इस में कोई विरोध नहीं । अर्थात् जैसे मृत्तिका का सम्बन्ध सब घट, करक कुण्ड से है तद्वत् इस आत्मा का सब से सम्बन्ध है इस हेतु सम्पूर्ण लोकलोकान्तरों में सम्पूर्ण सुखों को भोगता है यह श्रुति का अभिप्राय है । शङ्का—यदि आत्मा सब से बराबर सम्बन्ध रखता है तो मुक्तावस्था में दुःख से भी सम्बन्ध होना चाहिये क्योंकि दुःखी पुरुष से भी उसका सम्बन्ध है । तो सुख दुःख दोनों का भोक्ता मुक्त पुरुष को होना चाहिये । उत्तर—शङ्कराचार्य को इस के उत्तर देने में बड़ी कठिनाई प्राप्त हुई परन्तु अन्त में निर्णय किया है कि जैसे रज्जु में सर्पादि कल्पना निमित्त दुःख होता है तद्वत् आत्मा में अविद्या कल्पना निमित्त दुःख है सो वह दुःख देने वाली अविद्या अभेदज्ञान से नष्ट हो जाती है । इस हेतु दुःख सम्बन्ध की शङ्का नहीं हो सकती और यथार्थ में एक ही भोक्ता है दूसरा नहीं यह वेदान्त सिद्धान्त है । अद्वैत ज्ञान उत्पन्न होने पर भोग्य भोग का सम्बन्ध जाता रहता है इत्यादि वर्णन किया है ॥

शङ्का—"य एषोऽक्षिणि पुरुषो दृश्यते" जो यह अक्षि में पुरुष दीखता है । इससे छाया पुरुष से ही अभिप्राय प्रजापति का था और स्वप्न सुषुप्ति में जीवात्मा से अ-

अमृतस्य । अशरीरस्य । आत्मनः । अधिष्ठानम् । आत्तः । वै । सशरीरः । प्रिया-

विषयासक्तचेतसोऽत्यन्तसूक्ष्मवस्तुश्रवणे व्यामोहो माभूदिति यथा किल द्वितीयायां सूक्ष्मं चन्द्रं दिदर्शयिषुर्वृक्षं कञ्चित्प्रत्यक्षमादौ दर्शयति । पश्यामुमेष चन्द्रइति । ततोऽप्यन्नं गिरिमूर्द्धानं चन्द्रसमीपस्थमेष चन्द्र इति । ततोऽसौ चन्द्रं पश्यति । एवमेतद्य एषोऽक्षिणीत्याद्युक्तं प्रजापतिना त्रिभिः पर्य्यायैर्नपर इति । चतुर्थे तु पर्य्याये देहान्मर्त्यात्समुत्थायाऽशरीरतामापन्नो ज्योतिःस्वरूपम् । यस्मिन्नुत्तमपुरुषे स्त्र्यादिभिर्जक्षन् क्रीडन् रममाणो भवति स उत्तमपुरुषः परउक्त इति चाहुः ॥

सत्यं रमणीया तावदियं व्याख्या श्रोतुम् । न त्वर्थोऽस्य ग्रन्थस्यैवं सम्भवति कथमक्षिणि पुरुषो दृश्यत इत्युपन्यस्य शिष्याभ्यां छायात्मनि गृहीते तयोस्तद्विपरीतग्रहणं मत्वा तदपनयायोदशरावोपन्यासः । किं पश्यथ इति च प्रश्नः । साध्वलङ्कारोपदेश-

भिप्राय था किन्तु अपहतपाप्मा अजर अमर परमात्मा से अभिप्राय नहीं था । और ऐसे मानने का प्रयोजन यह है कि परमात्मा अत्यन्त सूक्ष्म अत्यन्त गूढ दुर्गम दुर्विज्ञेय आदि कथित है । यदि प्रथम ही बाह्य विषयों में आसक्त चित्त वाले साधक को अत्यन्त सूक्ष्म वस्तु सुनाई जाय तो वह साधक व्यामोहित होकर उस विषय के ग्रहण करने में असमर्थ हो जायगा । जैसे द्वितीया तिथि के सूक्ष्म चन्द्रमा को दिखलाने के अभिप्राय से प्रथम किसी प्रत्यक्ष वृक्ष को दिखाता है । देखो इसको, यह चन्द्र है तब कोई अन्य चन्द्रसमीपस्थ पहाड़ के शिखर को दर्शाता है कि यह चन्द्र हैं तब वह क्रमशः चन्द्र को देखता है इसी प्रकार सूक्ष्म ब्रह्मज्ञान के दर्शनार्थ प्रजापति ने प्रथम नेत्र में छाया पुरुष को दिखलाया । तत्पश्चात् स्वप्न और सुषुप्ति में जीवात्मा को दर्शाया तदनन्तर "एवमेवैष सम्प्रसादोस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य....सतत्र पर्येति जक्षन् क्रीडन् रममाणः....इत्यादि" अर्थात् वह प्रसन्नात्मा इस शरीर से उठकर जिस परज्योति को पा अपने रूप से आनन्द को भोगता है वह उत्तम पुरुष परमात्मा है जिसमें वह मुक्त पुरुष विविध आनन्द को भोगता है । इत्यादि वर्णन से अन्त में परमात्मा दर्शाया है । किन्तु सर्वत्र परमात्मा का वर्णन नहीं ( यथार्थ मे ग्रन्थ का यही अभिप्राय है परन्तु शङ्कराचार्य का यह अभीष्ट न होने से सम्पूर्ण ग्रन्थ को अन्य प्रकार से लगाया है और इन सबों का उत्तर इस प्रकार दिया है ) हां सत्य है क्योंकि यह व्याख्या सुनने में रमणीय मालूम होती है परन्तु ग्रन्थ का यह आशय नहीं । क्योंकि अक्षि में पुरुष दीखता है इत्यादि प्रारम्भ करके जब दोनों शिष्यों ने छायात्मा अर्थ ग्रहण

प्रियाभ्याम् । न । वै । सशरीरस्य । स्वतः । प्रियाप्रिययोः । अपहतिः । अस्ति ।

श्चानर्थकः स्यात् । यदि छायात्मैव प्रजापतिनाऽक्षिणि दृश्यत इत्युपदिष्टः । किञ्च यदि वा तेन स्वयमुपदिष्टग्रहणस्याप्यपनयन कारणं वक्तव्यं स्यात् । स्वप्नसुषुप्तात्मग्रहणयोरपि तदपनयनकारणं च स्वयं ब्रूयात् । न चोक्तं तेन मन्यामहे । नाक्षिणि छायात्मा प्रजापतिनोपदिष्टः । किञ्चान्यदक्षिणि द्रष्टा चेद्दृश्यत इति उपदिष्टः स्यात्तत इदं युक्तम् । एतन्त्वेव त इत्युक्त्वा स्वप्नेऽपि द्रष्टुरेवोपदेशः । स्वप्ने न द्रष्टोपदिष्ट इति चेन्नापि रोदितीवा प्रियवेत्तेवेत्युपदेशात् । न च द्रष्टुरन्यः कश्चित्स्वप्ने महीयमानश्चरति । अत्रायं पुरुषः स्वयं ज्योतिरिति न्यायतः श्रुत्यन्तरे सिद्धत्वात् । यद्यपि स्वप्ने सधीर्भवति तथापि न धीः स्वप्नभोगोपलब्धिं प्रतिकरणत्वं भजते । किन्तर्हिपटचित्रवज्जाग्रद्वासनाश्रया दृश्यैव धीर्भवतीति । न द्रष्टुः स्वयं ज्योतिष्ट्वबाधः स्यात् । किञ्चान्यत् । जाग्रत्स्वप्नयोर्भूतानि चात्मानं च जानातीमानि भूतान्ययमहमस्मीति प्राप्तौ सत्यां प्रतिषेधो युक्तःस्यान्नाह खल्वयमित्यादि । तथा चेतनस्यैवाविद्यानिमित्तयोः स शरीरत्वे सति प्रियाप्रिययोरपहतिर्नास्तीत्युक्त्वा तस्यैवाशरीरस्य सतोऽविद्यायां सत्यां सशरीरत्वे प्राप्तयोः प्रतिषेधो युक्तोऽशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति । एकश्चात्मा स्वप्नबुद्धान्तयोर्महामत्स्यवदसङ्गः सञ्चरतीति श्रुत्यन्तरे सिद्धम् । यच्चोक्तं सम्प्रसादः शरीरात्समुत्थाय यस्मिन् स्त्र्यादिभीरमामाणो भवति सोऽन्यः सम्प्रसादादधिकरण निर्दिष्ट उत्तमः पुरुष इति । तदप्यसत् । चतुर्थेऽपि पर्याये एतन्त्वेव त इति वचनात् । यदि ततोऽन्योऽभिप्रेतः स्यात्पूर्ववदेतन्त्वेव त इति न ब्रूयान्मृषा प्रजापतिः । किञ्चान्यत्तेजोबन्नादीनां स्रष्टुः सत स्वाविकारदेहे शुङ्गे प्रवेशं द-

किया तो इस विपरीत ज्ञान को हटाने के लिये जल परिपूर्ण पात्र में आत्मा को देखो ऐसा कहा और प्रश्न किया कि तुम दोनों क्या देखते हो ? यदि छायात्मा पुरुष से ही प्रजापति का अभिप्राय रहता तो साधु अलङ्कृत होकर उदक परिपूर्ण पात्र में आत्मा को देखो इत्यादि वर्णन व्यर्थ हो जायगा और जैसा प्रजापति ने प्रथम उपदेश किया उसके दूरी करण के लिये कोई कारण कहना उचित था । और "एतन्त्वेव ते" पुनः इसी आत्मा का मैं व्याख्यान करूंगा इत्यादि कहना भी व्यर्थ हो जाता इससे ज्ञात होता है कि सर्वत्र एक ही आत्मा का प्रजापति ने वर्णन किया है और चतुर्थ पर्याय में भी प्रजापति ने "एतन्त्वेव ते भूयो नु व्याख्यास्यामि" ऐसाही कहा है सो कहना प्रजापति का मिथ्या होजाता और आपने जो यह कहा कि "जिसमें वह मुक्त जीव नानाभोग को प्राप्त करता है वह परमात्मा है यह चतुर्थ पर्याय में वर्णन किया गया है" यह भी

